गङ्गानाथझा-प्रवचनमालायाः
दशमं पुष्पम्

स्वामिश्रीहरिहरानन्दसरस्वतीविरचितः

# राजनीतिदर्शनबिन्दुः






वाराणसेयसंस्कृतविश्वविद्यालयः



# GANGANATHA JHA-PRAVACHANAMALA

(*Vol. 10*)

**General Editor**

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,




## RĀJANĪTI DARŚANA BINDUḤ

*Lectured By*

ŚRĪ SWĀMĪ HARIHARĀNANDA SARASWATĪ
(KARAPĀTRA SWĀMĪ)

VARANASI
1973

Published by —
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi-2



Available At —
Publication Section
Varanaseya Sanskrit Vishvavidyalaya
Varanasi-2.

Frist Edition : 200 Copies

Price Rs. 3·50



Printed by—
Ghanashyam Upadhyaya
Manager,
Varanaseya Sanskrit Vishvavidyalaya Press,
Varanasi-2

गङ्गानाथझा-प्रवचनमालायाः

दशमं पुष्पम्

प्रधानसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

गवेषणालयसंचालकः

वाराणसेयसंस्कृतविश्वविद्यालयः




# राजनीतिदर्शनबिन्दुः

प्रवक्तारः

स्वामिश्रीहरिहरानन्दसरस्वती ( करपात्र ) महोदयाः

वाराणस्याम्

२०३० तमे वैक्रमाब्दे १८९५ तमे शकाब्दे १९७३ तमे खिस्ताब्दे

प्रकाशकः —
संचालकः
गवेषणालयसंस्थानस्य
वाराणसेय-संस्कृत-विश्वविद्यालयः
वाराणसी–२

प्राप्तिस्थानम्—
प्रकाशनविभागः
वाराणसेय-संस्कृत-विश्वविद्यालयः
वाराणसी–२
मूल्यम् ३.५० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः
वाराणसेय-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी–२

# प्रास्ताविकम्

राज्ञा शासिते समाजे राज्ये राष्ट्रे वा प्रवर्तिता तन्नीती राजनीतिर्दण्डनीतिर्वाऽऽख्यायते। भारते वर्षे वर्णाश्रमप्रतिष्ठामारभ्य धर्मव्यवस्थापूर्वकं नाम राज्यव्यवस्था। अत एव प्राचीने भारते नासीत् तादृश्यराजकता लोके, यादृशी संप्रति विद्यते। 'न मे स्तेनो जनपदे' इत्येतादृशस्तदानीन्तन उद्घोषः श्रूयते वाङ्मये। धर्मार्थकाममोक्षाख्यपुरुषार्थेषु, ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाख्येषु चतुर्ष्वाश्रमेषु, ब्राह्मणक्षत्रियवैश्यशूद्रेति चतुर्षु वर्णेषु च प्रतिष्ठितेषु परम्परोल्लङ्घनादौ दण्डविधानम्। न्यायव्यवस्थाम् उताहो विधानसंहितामधिकृत्य प्रामाणिकं पूर्णं च विवरणं धर्मसूत्रग्रन्थेषूपलभ्यते। वेदेषु दण्डविधानस्य, साम्पत्तिकविधानस्य, नैतिकतायाश्च विषये पर्याप्तमुल्लेखः। तत्र वर्णितेष्वपराधेष्वन्यतमविश्वासघातरूपापराधदशायां कुत्सकथाप्रसङ्गे पञ्चविंशब्राह्मणे (१४, ६, ८) परतश्चापि मृत्युदण्डव्यवस्था। दण्डस्य कार्यान्वयनार्थम्, अपराधिनां च निग्रहार्थं राजा नियोजयति स्म स्वाश्रितान् कांश्चिज्जनान्।

वाल्मीकीये रामायणे महाभारते स्मृतिग्रन्थेषु च प्रसङ्गोपात्तो वर्णितो राजधर्मः। मनुस्मृतेः सप्तमाष्टमाध्याययोस्तस्य विस्तरशो व्याख्यानम्। धर्मशास्त्राद् बहिर्नास्ति राजधर्म इति तस्य स्मृतिग्रन्थेषु समावेशाज्ज्ञायते। शुक्रनीतिः, बृहस्पतिनीतिः, कामन्दकीयनीतिः, चाणक्यराजनीतिः, कौटलीयमर्थशास्त्रम्, अभिलषितार्थचिन्तामणिः, मसूराक्षप्रणीतं नीतिशास्त्रं चेत्यादीनां राजधर्ममधिकृत्य रचितानां स्वतन्त्राणां ग्रन्थानां समासाद्यते सुपुरातनी परम्परा।

भारतस्य प्राचीनराजधर्ममालोचयद्भिराधुनिकैः साम्प्रतिके भारते तस्यानुपयोगिता साध्यते। परिवर्तितपरिवेशे धर्मशास्त्रस्य प्राचीनराजधर्मस्य वा पुनर्मूल्याङ्कनं विधाय स्मृतिग्रन्था अपि युगानुरूपाः कर्तव्या इति धर्मान्तरमङ्गीकृतवतां हिन्दूनां स्थितिमालोचयद्भिः कैश्चिद् राजनीतिज्ञैरभिप्रेयते। यस्मिन् काले धर्मशास्त्रग्रन्था इमे प्रणीता आसन्, नास्तीदानीमसौ कालः, न सन्ति तादृशानि नगराणि, नास्ति तादृशं नभोमण्डलम्, न सन्ति तादृशाः पर्वताः, नास्ति तादृशं च भूमण्डलस्वरूपमिति कुत आस्थीयेरंस्तदाचारास्तद्व्यवस्थाश्चेत्यामनन्त्याधुनिकाः। अद्यत्वे यातायातसाधनानां सौलभ्येन कुटुम्बायितमशेषं जगदिति तदाचारा युगपदेव प्रसरन्ति सर्वतः। भोजनपरिधानाद्याचारसंहिताया ऐकरूप्यं विष्वगिति

कुतस्तरां प्राचीनभारतीयधर्मसंहितानामनुवर्तनीया नीतिः, कुतस्तरां च परिपालनीया राजधर्मनियमा इति वायुयान-धूमशकटी-मृत्तरयान-विद्युद्यन्त्रयानादीनां युगेऽस्मिन् जिजीविषतामाधुनिकानां मतेन धर्मशास्त्रस्य पुनर्मूल्याङ्कनमपेक्ष्यते।

एतादृशे संक्रान्तिमयेऽनेहसि युगपुरुषतया महापुरुषा अवतरन्ति भारतभूमिभागे। परमपूज्या अनन्तश्रीविभूषिताः स्वामिकरपात्रमहोदया अपि तेषामन्यतमा महापुरुषाः। यदा हि पाश्चात्त्यसभ्यताकलाविज्ञानाद्यविद्यातमोबाधितलोचनो मोषितान्तर्लोचनो वराको लोको विधूतभारतीयसंस्कृतिकः किंकर्तव्यताविमूढो दिङ्मूढः संशयापन्नमानसः कमपि प्रशस्तमार्गं विचेतुमप्रभुः, उद्ग्रीवः सन् कमपि दिग्दर्शकमवेक्षते स्म, तदा निर्लक्ष्यनौकस्य भारतीयविद्याकूपारे प्रकाशस्तम्भा इव स्वामिवर्या दृष्टिपथमुपेताः। त्यागतपोमूर्तिभिरेतैः साक्षाद् धृतभारतीयसंस्कृतिकलेवरैर्लोककल्याणाय रामराज्यस्थापनाकामनया भारतीयराजनीतिरवलम्बिता मनीषिभिः।

वाराणसेयसंस्कृतविश्वविद्यालयस्य स्थापनाकालतो दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेन कृतमायोजनं गङ्गानाथझाप्रवचनमालायाः। इह विशिष्टव्याख्यानाय समाहूयन्ते विशिष्टा विद्वांसः। विशिष्टं तद् व्याख्यानं च 'सारस्वती सुषमा' इति पत्रिकायां क्रमशः प्रकाश्यते। ततश्च निर्धारितप्रतिमुद्रणानां संभूय बिन्दुनाम्ना पुस्तकं प्रकाशमानीयते संस्कृतज्ञानां जिज्ञासूनां हितकाम्यया विदुषां च प्रीणनाय। द्वादशदीक्षान्तमहोत्सवावसरे विश्वविद्यालयेन समायोजितायां गङ्गानाथझाप्रवचनमालायां विशिष्टव्याख्यानाय प्रार्थिता विद्वन्मूर्धन्याः स्वामिश्रीकरपात्रमहोदयाः। तानीमानि विशिष्टव्याख्यानानीह 'राजनीतिदर्शनबिन्दु'-नाम्ना पुस्तकरूपेण प्रकाश्य भवतां पाणिपल्लवयोरुपायनीक्रियन्ते। साम्प्रतिके नूतने परिवेशे वर्णाश्रमाश्रितस्य सनातनस्य धर्मस्य पुनर्मूल्याङ्कनमभिलषतामाधुनिकानामनुयोगः सम्यक् समाहितः स्वामिवर्यैः। तत्र पुरुषार्थमीमांसेत्यभिधे प्रथमे प्रवचने साधीयः समीक्षितं मार्क्स-मुस्लिमादिमतम्। ततश्च राज्योत्पत्तिप्रतिपादनपूर्वकं वर्णिता महाभारतीयराज्यव्यवस्था। द्वितीये प्रवचने श्रीमद्भागवतदर्शनं वर्णयित्वा तृतीये प्रवचने मीमांसितं तत्रत्यं जगत्कारणत्वम्। संस्कृतज्ञैर्जिज्ञासुभिर्विद्वद्भिश्च चिररात्राय प्रतीक्षितं प्रेरणाप्रदं प्रवचनत्रयमिदानीं पुस्तकरूपेण प्रकाशमानीयत इति प्रमोदास्पदम्।

प्राचीननवीनदर्शनानामधुनातनमार्क्सादिसिद्धान्तोद्धरणपूर्वकं पर्यालोचनसरणिर्दृश्यते श्रीस्वामिवर्यकृतेषु प्रवचनेष्वेतेषु। विविधसिद्धान्तपर्यालोचनरूपो यत्नसाध्योऽयं समा-

रम्भो न पार्यते कर्तुं समैः। न केवलं भारते वर्षे प्रत्युत समग्रे संसारे प्रसिद्धिं समादरं च प्राप्तस्य कस्यचित् सिद्धान्तस्य मतस्य वामूलचूलमालोचनेन, आलोचनस्य च तत्सिद्धान्तवादिभिः पुनः पर्यालोचनेन संजायते सत्यप्रचारो लोके। सर्वत्र विद्यासंस्थानेषु चोभयोः पक्षयोः सिद्धान्तानामध्ययनं प्रारभ्यते। न्यायशास्त्रस्य प्रचारे प्रसारे च बहूपकृतं बौद्धनैयायिकैः। तत्कृतालोचनपर्यालोचनाभ्यां परमां प्रसिद्धिं गतो न्यायनिकायः। श्रीमदुदयनाचार्यानन्तरं कस्यचित् तादृशस्य विदुषो बौद्धनैयायिकस्याभावेन न्यायशास्त्राध्येतृषु न दृष्टस्तादृशः समुत्साहः, लोके नास्ति तादृशी समुत्कण्ठा, प्रचारो वा तादृशः। साम्प्रतं लोके प्रचारमाप्तस्य मार्क्समतस्य बौद्धमतस्येव न्यायशास्त्रदृशा यदि पर्यालोचनं क्रियेत स्वामिवर्यैस्तदा नूनं स्यादिह जनरुचिः संस्कृतवाङ्मयं च विभूषितं स्यादाचन्द्रार्कं कीर्तिप्रसारकेणानितरसाधारणेन ग्रन्थरत्नेन तेनेति।

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
संचालकः
गवेषणालयः, वा० सं० वि० वि०

गङ्गादशहरा
२०३० वै०
१०-६-७३ ई०

# विषयसूची

विषयः | पृष्ठम्

## प्रथमं प्रवचनम्



## द्वितीयं प्रवचनम्



## तृतीयं प्रवचनम्





ब्रजवल्लभ द्विवेदी
२०-७-७४

॥ श्रीहरिः ॥

# राजनीतिदर्शनबिन्दुः*

## पुरुषार्थमीमांसा

### प्रथमं प्रवचनम्

प्रवक्तारः —

पूज्यपादा विद्वन्मूर्धन्या अनन्तश्रीविभूषित-स्वामिश्रीहरिहरानन्दसरस्वती-
(श्रीकरपात्र) महोदया.

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥

### र्थनिरूपणम्

पुरुषैरर्थ्यते काम्यते इति व्युत्पत्त्या पुरुषकामनाविषयतया धर्मार्थकाममोक्षाः पुरुषार्थाः। वद्भक्तिश्च पञ्चमः पुरुषार्थः। तत्रापि धर्मार्थौ सुखसाधनत्वेन काम्यौ, अन्ये तु सुखरूपत्वात् याः। तेष्वपि सातिशयं सुखं कामो निरतिशयसुखरूपावन्तिमौ। धर्माविरुद्धावर्थकामावपि रणीयावेव। प्राणिमात्रस्य प्रतिदिनं क्षुत् पिपासा-शीतातपादिबाधानिवारणाय भोजन- ाद्यपेक्षा प्रतिदिनं जायते। तत एव वार्ताविद्याप्रादुर्भावः। वर्तते आत्मस्थितिं लभते, दि जीवत्यनयेति वार्ता। कृषिः, वाणिज्यम्, गवादिपालनम्, शिल्पञ्च वार्तापदेन व्यव- न्ते। "कृषिपाशुपाल्ये वणिज्या च वार्ता" ( कौ० अ० शा०—अधिक० १, अ० ४, ० १ )। ब्राह्मणानां कृते विहितानां याजनाध्यापनप्रतिग्रहशिलोञ्छादिवृत्तीनाम्, राजन्यानां विहितानां प्रजापालनयुद्धादिकानामपि जीविकासाधनत्वेन तत्रैवान्तर्भावः। शास्त्रा-

* वाराणसेयसंस्कृतविश्वविद्यालयस्य द्वादश (१२) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां पूज्यपादैः विद्वन्मूर्धन्यैः अनन्तश्रीविभूषितैः स्वामिश्रीहरिहरानन्दसरस्वती ( श्रीकरपात्र ) महोदयैः प्रदत्तमिदं विशिष्टव्याख्यानम्—सम्पादकः।

विरुद्धानां लौकिकानामपि कर्मणां धर्मादनपेतत्वेन धर्मपदव्यपदेश्यता। क्षुदादिबाधानां प्रात्यहिकत्वादेव स्थायिरूपेण प्रभूतार्थोत्पादनसङ्ग्रहादिव्यवस्था भवति। तत्रापि घृतदुग्धान्न-वस्त्रादिप्रत्यक्षभोग्यसामग्रीणां चिरस्थायित्वासम्भवेन मुद्रा-स्वर्ण-रत्न-भूम्याकरादिरूपेणाप्यर्थ-सङ्ग्रहो भवति। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" अम० ना० व० ८६ इति अमरकोषानुसारेणार्थशब्दस्य पञ्चार्था भवन्ति। अत्र रैपदेन भूम्याकर-रत्न-स्वर्ण-धन-पशु-पुत्रादयो विवक्ष्यन्ते।

अद्यत्वे तु व्यवहारसौकर्याय राजमुद्राङ्कितपत्रादि (हुण्डी-नोट-चेक) रूपेणाप्यर्थः सङ्गृह्यते। वस्तुविनिमयसौकर्याय सङ्ग्रहाय च सर्वमेतत्प्रचलितम्। यथा मुद्राभिर्वस्तूनि प्राप्यन्ते, तथैव श्रमेण विद्यया च मुद्रादीनि वस्तूनि लभ्यन्ते। तत्रोपयोगितामूल्य-विनिमय-मूल्यभेदेन मूल्यद्वैविध्यम्। जलवाय्वादिकं जीवनधारणायात्यन्तोपयुक्तमपि यावन्नापणे विक्रीयते, तावदुपयोगितामूल्यवत् सर्वत्र सौलभ्यात्। यदा तु जलमपि दौर्लभ्याद्विक्रीयते, तदा तदपि विनिमयमूल्यवद् भवति। तत्र रिकार्डोप्रभृतीनां पाश्चात्यानां दृष्ट्या लिप्सा-दौर्लभ्याभ्यां वस्तु-मूल्यं वर्धते, तद्ध्रासात्तु ह्रसति। मार्क्सदृष्ट्या तु श्रम एव विनिमयमूल्यकारणं भवति। श्रमस्यापि शरीरबुद्धिभेदेन द्वैविध्यम्। शरीरश्रमापेक्षया बुद्धिश्रमवैशिष्ट्यम्। कौटलीयादि-भारतीयार्थशास्त्रदृष्ट्या तु मनुष्यवती भूमिरर्थः। प्रकृति( कचा माल )तद्गुणद्विविध-श्रमवद् मनुष्यविशिष्टा भूमिरर्थः। "अद्रव्यप्रयत्नो बालुकाक्वाथनादनन्यः" (चा० नी० सू० ५।२६), "अधनस्य बुद्धिर्न विद्यते" (चा० नी० सू० ४।५८), "हितमप्यधनस्य वाक्यं न गृह्यते" (चा० नी० सू० ४।५६), "अधनः स्वभार्ययाप्यवमन्यते" (चा० नी० सू० ४।६०) इत्यादिसूत्रैः कौटल्येनार्थस्यानिवार्यता प्रतिपादिता।

लिप्सा-दौर्लभ्यादिकन्तु तदाश्रितमेव मूल्यवृद्धिह्रासादिकारणं भवति। प्रकृतिद्रव्याणाम्, यन्त्राणाम् मुद्राणां श्रमिकाणाञ्च सहयोगेनैवाद्यत्वे समुत्पादबाहुल्यम्। श्रमिकमन्तरा प्रकृत्यादीनां नैरर्थक्यम्, तदन्तरा च श्रमिकनैरर्थक्यं स्पष्टं दृश्यते।

अर्थरूपस्य पुरुषार्थस्यापि परमेश्वरैश्वर्यं एव पर्यवसानम्।

सीतोपनिषदि हलाग्रादुत्पन्नायाः सीताया एव हिरण्यरत्नफलपुष्पादिविविधसमृद्धि-रूपत्वं तस्या एवानन्तब्रह्माण्डगतानन्तैश्वर्याधिष्ठात्रीत्वं चोक्तम्। मूलप्रकृतिरूपत्वात् प्रणव-प्रकृतिरूपत्वाच्च सा प्रकृतिः। सीतेति त्रिवर्णात्मा।

विष्णुः प्रपञ्चबीजञ्च माया ईकार उच्यते।
सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते ॥

सा च शक्त्यासना। इच्छाशक्तिः, क्रियाशक्तिः, साक्षाच्छक्तिरिति च व्यपदिश्यते। इच्छाशक्तिः श्री-भू-नीलात्मिका भद्ररूपिणी प्रभावरूपिणी सोमसूर्याग्निरूपा। सोमात्मिका ओषधीनां प्रभवति। कल्पवृक्ष-पुष्प-फल-लता-गुल्मात्मिका औषधभेषजात्मिका अमृतरूपा देवानां महस्तोमफलप्रदा अमृतेन तृप्तिं जनयन्ती देवानामन्नेन, पशूनां तृणेन, तत्तज्जीवानां भोग-शक्तिर्भोगरूपा कल्पवृक्षकामधेनुचिन्तामणिशङ्खपद्मनिधिनवनिधिसमाश्रिता।

सैव च वीरशक्तिश्चतुर्भुजाभयवरदपद्मधरा किरीटाभरणयुता सर्वदेवैः परिवृता कल्प-तरुमूले चतुर्भिर्गजै रत्नघटैरमृतजलैरभिषिच्यमाना, सर्वदेवैर्वन्द्यमाना, अणिमाद्यैश्वर्ययुता, सम्मुखे कामधेनुना स्तूयमाना, जयाद्यप्सरःस्त्रीभिः परिचर्यमाणा, आदित्यसोमाभ्यां दीपाभ्यां प्रकाश्यमाना, तुम्बुरुनारदादिभिर्गीयमाना, राकासिनीवालीभ्यां छत्रेण ह्लादिनी मायाभ्यां चामरेण, स्वाहास्वधाभ्यां व्यजनेन, भृगुपुण्यादिभिरर्च्यमाना देवी दिव्यसिंहासने पद्मासनारूढा सकलकारणकार्यकरी विराजते।

तस्या एव मूर्तिरहस्ये शाकम्भरीरूपेण वर्णनम्—

पुष्पपल्लवमूलादिफलाढ्यं शाकसञ्चयम्।
काम्यानन्तरसैर्युक्तं क्षुत्तृण्मृत्युजरापहम् ॥

शाकम्भरीरूपमिति शेषः।

शाकम्भरीं स्तुवन् ध्यायन् जपन् सम्पूजयन्नमन्।
अक्षय्यमश्नुते शीघ्रमन्नपानादि सर्वशः ॥

या च परमानन्दरसामृतमूर्तेर्भगवतो रामचन्द्रस्य माधुर्यसारसर्वस्वरूपा परमान्तरङ्गा, सैव तदीयतरङ्गस्थानीया परमैश्वर्याधिष्ठात्री महालक्ष्मीः। सैव च वीरशक्तिः। सैव च लाङ्गलाद्युप-लक्षितविविधोद्योगबौद्धादिश्रमसाध्या अर्थरूपापि लक्ष्मीः। सैव यथा ब्रह्मविद्यारूपेण त्रयीरूपेण च व्यज्यते, तथैव वार्तारूपेणापि व्यज्यते।

'मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषै-
विद्यासि सा भगवती परमा हि देवी ॥'
'शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीथरम्यपदपाठवतां च साम्नाम्।

देवि त्रयी भगवती भवभावनाय
वार्तासि सर्वजगतां परमार्तिहन्त्री ॥'

आत्मनियन्त्रणमन्तरोद्दामकामप्रवृत्त्या धर्मार्थौ बाधितौ भवतः। अधर्मेण पूर्वं धनं वर्धते, परं तदनर्थानुबन्धं भवति।

तदुक्तम्—

वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥
(म० भा०, व० प० ९४।४)

तथा—

अधर्मेणैधते तावत् ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥
(म० स्मृ० ४।१७४)

तत एव कौटल्य आह—

'सुखस्य मूलं धर्मः १, धर्मस्य मूलमर्थः २, अर्थस्य मूलं राज्यम् ३, राज्यस्य मूलमिन्द्रियजयः ४, इन्द्रियजयस्य मूलं विनयः ५, विनयस्य मूलं वृद्धोपसेवा ६, वृद्धोपसेवाया विज्ञानम् ७। (चाणक्यनीतिसूत्रम्, अ० १)

वेदेऽपि—

मूर्धाहं रयीणां मूर्धासमानानां भूयासम्।
(अ० वे० सं० १६।१।३।१)
नाभिरहं रयीणां नाभिः समानानां भूयासम्।
(अ० वे० सं० १६।१।४।१)

अत्र यजमानो भगवन्तं प्रार्थयते
"धनानां धनिकानाञ्चाहं मूर्धा श्रेष्ठः केन्द्रश्च स्याम्"।

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः॥१२॥
(अ० वेद० सं० २०।१७)

बृहस्पतिरिन्द्रश्च युवां दिव्यस्य पार्थिवस्य च धनस्य स्वामिनौ।
स्तुवते मह्यं धनादिर्देयः स्वस्तिभिः क्षेमैः यूयं पात रक्षत।

अत्र सायणभाष्यम्—हे बृहस्पते । त्वञ्च इन्द्रश्च । युवं युवाम् । दिव्यस्य दिवि भवस्य । वस्वः वसुनः । ईशाथे स्वामिनौ भवथः । उत अपि च । पार्थिवस्य वस्व ईशाथे ।

यस्मादेवं तस्मात् स्तुवते स्तोत्रं कुर्वते । कीरये स्तोत्रे मह्यम् । चिद् इति पूरणः । रयिं धनम् । धत्तम् प्रयच्छतम् । हे देवा यूयं च इन्द्रमनुसृत्य । नः अस्मान् । स्वस्तिभिः क्षेमैः । सदा । पात रक्षत ।

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजिनेना जयेम ॥
( अ० वे० सं० २०।१७।१० )

भो पुरुहूत इन्द्र ! वयं त्वत्प्रदत्ताभिर्गोभिः पृथिव्या वाण्या च दरिद्रतां दुर्मतिञ्च तरेम, त्वद्दत्तधनेनान्नेन विश्वेषां क्षुधम् । राजभिर्दत्तैर्धनैः सर्वश्रेष्ठधनपतयो भवामः । शत्रून् पातकानि च जयेम ।

अत्र सायणभाष्यम् हे पुरुहूत बहुभिराहूत इन्द्र । वयं घौषेयाः सुहस्त्या यजमानास्त्वयानुगृहीताः सन्तः । गोभिः त्वया दत्ताभिः । दुरेवां दुष्टगमनाम् । अमतिं दारिद्र्यं तरेम निस्तरेम । किञ्च यवेन उपलक्षणमेतत्, त्वया दत्तैर्यवव्रीह्यादिभिः । विश्वां सर्वां पुत्रभृत्यादिविषयाम् । क्षुधं अशनेच्छाम् । तरेमेति शेषः । किञ्च, प्रथमाः तवानुग्रहेण समानानां मध्ये मुख्यभूता वयम् । राजभिः क्षत्रियैर्भूपालैः । धनानि बहूनि । लभेमहीति शेषः । एवं सम्पन्नेषु सत्सु अस्माकेन अस्मतसम्बन्धिना । वृजिनेन बलेन । जयेम । शत्रूनिति शेषः ।

स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसम् ।
मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥ १ ॥
( अ० वे० सं० १६।७२ )

अस्मिन्नपि मन्त्रे आयुःप्राणप्रजापशुकीर्तिद्रविणब्रह्मवर्चसादिप्रार्थना दृश्यते ।

अत्र सायणभाष्यम्—स्वानुष्ठितकर्मणो निरभिसन्धिना सर्वार्थं फलाशासनं स्वस्याविकलं भवतीत्यभिप्रायेण मन्त्रद्रष्टा ऋषिः स्वानुष्ठितवेदाध्ययनेन गायत्रीजपेन वा द्विजानां आयुरादिफलमाशास्य तन्मध्यवर्तिनः स्वस्यापि फलं सिद्धवदनु वदति । मया वेदाध्यापकेन सावित्रीं जपता वा स्तुता अभिष्टुता स्वभ्यस्ता । वरदा इष्टकामप्रदात्री । पावमानी पवमानः पापात् परिशोधकः सूत्रात्मा, तत्प्रतिपादिका पावमानी । वेदमाता वेदस्य ऋगादिरूपस्य माता सर्ववेद-

सारत्वेन मातृवत् प्रधानभूता सावित्री वेद एव वा माता मातृवद्धितकारित्वात्। "वेद एव द्विजातीनां निःश्रेयसकरः परः।" (या० स्मृ० १।४०) इति स्मृतेः। द्विजानां द्विजन्मनां ब्राह्मणानां त्रैवर्णिकानां वा आयुरादिफलानि। प्रचोदयन्ताम्, पूजायां बहुवचनम्। प्रेरयतु प्रयच्छतु। ब्रह्मवर्चसं ब्रह्मणां वर्चः ब्राह्मं तेजः। अथ मह्यं स्तोत्रे सर्वेषां फलप्रार्थकाय। दत्त्वा आयुरादिकं फलं वितीर्य। ब्रह्मलोकं ब्रह्मणो लोकः, सत्यलोकः, ब्रह्मैव वा लोकः, लोक्यमानं विद्वद्भिरनुभूयमानं परतत्त्वं व्रजत। इति प्रत्यक्षवादः। शब्दावगम्यब्रह्माकारं परित्यज्य वाङ्मनसातीतार्थब्रह्मरूपा भवेति मन्त्रदर्शिना ऋषिणा साक्षात्कृतपरत्वेन (परतत्त्वेन) उच्यते।

'अन्नं बहुकुर्वीत।' (तै० उ० भृगुवल्ली। अनुवाकः ९)।

'न कञ्चनवसतौ प्रत्याचक्षीत।' (तै० उ० भृगुवल्ली। अनुवाकः १०)।

इति वचनाभ्यामतिथिसत्कारार्थं बह्वन्नसम्पादनविधानं दृश्यते।

कृषिर्गवाश्वादिपरिपालनञ्च प्राधान्येनार्थसाधनम्। कृष्यर्थं समुचितजलादिव्यवस्थापेक्षिता। तत एव कुल्यादिनिर्माणेनादेवमातृकात्वव्यवस्थापनम्। आधुनिकयान्त्रिककृषिव्यवस्थायां नव्योपचेन (नवीन रासायनिक खाद) च भूमौ मरुत्वाक्रान्तिर्जायते। तेन वृषभसाध्यहलाग्रसीतादिसंस्कारसध्रीचीनैः साधनैः कृषिव्यवस्था युक्ता। रासायनिकोपचापेक्षया गवादिपशूनां गोमयगोमूत्रादिभिर्जनितोपचानां क्षेत्रबलवर्धकत्वं पाश्चात्त्यैरप्यभ्युपेयते। गव्यपयोदधिघृतादिलाभैः साकमेव कृष्युपयुक्तबलीवर्दोपचादिलाभश्च गवादिपशुपालनेनानायासमेव भवति। दुग्धघृतादिप्रयोगेणान्नापेक्षाप्यल्पीयसी। तेन खाद्यसङ्कटनिवारणमपि भवति। गोपालनप्रोत्साहनेन गवां वधावरोधोऽप्यनिवार्य एव भविष्यति।

महाभारतरीत्या ब्रह्मोक्तत्रिवर्गशास्त्रात् पृथक्कृतेऽर्थशास्त्रे लोकायतशास्त्रम्, धनुर्वेदसूत्रम्, व्यूहसूत्रम्, रथसूत्रम्, अश्वसूत्रम्, हस्तिसूत्रम्, हस्त्यायुर्वेदः, शालिहोत्रम्, यन्त्रसूत्रम्, वाणिज्यशास्त्रम्, गन्धशास्त्रम्, कृषिशास्त्रम्, पाशुपताख्यशास्त्रम्, गोवैद्यम्, वृक्षायुर्वेदः, तक्षशास्त्रम् मल्लशास्त्रम्, वास्तुशास्त्रम्, वाकोवाक्यम्, चित्रशास्त्रम्, लिपिशास्त्रम्, यानशास्त्रम्, धातुशास्त्रम्, संख्याशास्त्रम्, हीरकशास्त्रम्, अदृष्टशास्त्रम्, तान्त्रिकद्यूतम्, शिल्पशास्त्रम्, मायायोगवेदः, माणवविद्या, सूदशास्त्रम्, द्रव्यशास्त्रम्, मत्स्यशास्त्रम्, वायसशास्त्रम्, सर्पविद्या, भाष्यग्रन्थाः, चौरशास्त्रम्, मातृशास्त्रम्—इत्येवमादीनां वर्णनं दृश्यते। तेन कृष्यादीनामिव शिल्पादीनामपि वार्तायामेवान्तर्भावः। अद्यत्वे कृषिवाणिज्यपशुपालनापेक्षया बौद्ध-शारीर-श्रमाणामेवार्थोपार्जनसाधनत्वम्, अधिकसंख्याकानां जनानां कृष्यादिसाधनानु-

पलम्भात्। गीत-वाद्य-नृत्य-चित्रादिकलाचतुष्टयानामप्यर्थोपार्जनहेतुत्वं भवति। तत्रापि सर्वापेक्षया प्राधान्येन कृषि-रत्न-मणि-स्वर्ण-पारद-लौह-विविधाग्नेयतैलेङ्गालादिप्रभवत्वेन ससागरा मनुष्यवती भूमिरेवार्थः। सैव सर्वेषामप्यर्थानां स्रोतोभूता।

तदुक्तमथर्ववेदसंहितायाम्—

जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।
सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेव धेनुरनपस्फुरन्ती॥
(१२।१।४५)

विवाचसं विविधभाषाभाषि जनं जनसमुदायं नानाधर्माणं वर्णाश्रमादिभेदेन विविधधर्मानुष्ठायिजनसमूहं यथौकसं बिभ्रती पृथ्वी मे मह्यं द्रविणस्य विविधधनस्य सहस्रं धारा; दुहां दोग्ध्रीणां धेनुरिव अनपस्फुरन्ती भूकम्पज्वालामुखी विस्फोटाद्युपद्रवरहिता ध्रुवा स्यात्।

सं सं स्रवन्तु सिन्धवः सं वाताः सं पतत्रिणः।
इमं यज्ञं प्रदिवो मे जुषन्तां संस्राव्येण हविषा जुहोमि॥
(अ० वे० सं० १।१५।१)

अत्र याज्ञिकः प्रार्थयते—घृतसोमादिहविषा जुहोमि। देवा इमं यज्ञं जुषन्ताम्। मह्यञ्च सिन्धवः समुद्रा रत्नानि पर्जन्यद्वारा जलानि च संस्रवन्तु, वायवः पतत्रिणो मेघाः पक्षिणश्च विविधधनानि स्रवन्तु।

अत्र सायणभाष्यम्—सिन्धवः स्यन्दनशीला नद्यः। सं सं स्रवन्तु सम्यक् अस्मदनुकूलाः प्रवहन्तु। तथा वाताः गमनशीला वायवः। सं सं स्रवन्तु आनुकूल्येन प्रवर्तन्ताम्। तथा पतत्रिणः पतत्राणि पक्षा एषां सन्तीति पतत्रिणः। तदुपलक्षिताः, सर्वे प्राणिनः सं सं स्रवन्तु सम्यगनुकूलाश्चरन्तु। यद्वा एते सिन्धुप्रभृतयः संस्रवन्तु अस्मदभिलषितं फलं रत्नं यच्छन्तु। तथा प्रदिवः पुराणनामैतत्, पुरातना देवाः। मे मदीयम्। इमं यज्ञं यागम्। जुषन्तां सेवन्ताम्। अत्र सन्निहिता भूत्वा हविः स्वीकुर्वन्त्वित्यर्थः। अत्र हविषः सद्भावमाह—संस्राव्येण इति। सम्यक् स्रवणं संस्रावः। संस्रावमर्हतीति संस्राव्यम् आज्यपयःप्रभृति। यद्वा संस्रावणीयेन। हविषा आज्यादिना। जुहोमि। आज्यादिकं हविर्देवानुद्दिश्याग्नौ प्रक्षिपामीत्यर्थः।

इहैव ध्रुवा प्रति तिष्ठ शालेऽश्वावती गोमती सूनृतावती।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय॥
(अ० वे० सं० ३।१२।२)

अत्र गवाश्वघृतपयोबलवीर्यबाहुल्यसौमनस्यप्रियभाषणादिपूर्णभवनस्थैर्यकामना दृश्यते। तथा चात्र सायणः—

हे शाले। इहैव अस्मिन् देशे। ध्रुवा स्थिरा सती। प्रति तिष्ठ वर्तस्व। कथम्भूता? अश्वावती बहुभिरश्वैरुपेता। गोमती बहुभिर्गोभिर्युक्ता। सूनृतावती बहुभिः प्रियसत्यवाग्भिर्बालादीनां वाणीभिर्युक्ता। ऊर्जस्वती प्रभूतान्नवती। घृतवती बहुघृतयुक्ता। पयस्वती बहुक्षीरा। एवं बहुगुणा त्वम् अस्माकं महते प्रभूताय सौभगाय सुभगत्वाय। उच्छ्रयस्व उद्गाता भव।

राष्ट्रस्य सङ्ग्रहे नित्यं विधानमिदमाचरेत्।
सुसङ्गृहीतराष्ट्रो हि पार्थिवः सुखमेधते॥

(मनु० ७।११३)

इति मनुनाप्युक्तम्। तदर्थं महामहोत्साहोऽपेक्षितः।

कृते मे दक्षिणे हस्ते जयो मे सव्य आहितः।
गोजिद् भूयासमश्वजिद् धनञ्जयो हिरण्यजित्॥

(अ० वे० सं० ७।५२।८)

महोत्साहस्येदं वचनम्। मे मम दक्षिणे हस्ते कृतं पुरुषार्थो भवतु। सव्ये च जयो भवतु। तत एवाहं गवामश्वानां हिरण्यादिविविधधनानां सङ्ग्रहे मम साफल्यमस्तु। तथा चात्र सायणः—

मे मम। दक्षिणे। हस्ते पाणौ। कृतं कृतशब्दवाच्यो लाभहेतुः अयः अस्ति। कृताय लाभो हि महान् द्यूतजयः। तदुक्तं द्यूतक्रियामधिकृत्य आपस्तम्बेन "कृतं यजमानो विजानाति" (आ० श्रौ० ५।२०।१)। तथा मे मम। सव्ये हस्ते। जयः। आहितः कृताय साध्यो जयो निहितोऽस्ति। अतोऽहं गोजित् परकीयानां गवां जेता। भूयासम्। अश्वजित् प्रतिकितवसम्बन्धिनामश्वानां जेता। धनञ्जयः। धनशब्दः सामान्यवाची। दासीभूम्यादिधनस्य जेता। हिरण्यजित् सुवर्णस्य जेता भूयासम्। लोके हि कितवा द्यूतकर्मणि गवादिधनं शुल्कं कृत्वा दीव्यन्ति। तत्र ये जयन्ति ते तद्धनं स्वीकुर्वन्ति। अत्र जयस्य पूर्वार्धेनोक्तत्वाद् गवादिधनजयलाभः उत्तरार्धेन प्रार्थ्यते।

धैर्येण तत्परतया चार्थाः सङ्गृह्यन्ते।

"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य

यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः । पच्यन्ताम्, योगक्षेमो नः कल्पताम्"—( वा० सं० २२।२२ ) ।

अत्र सायणः—

अध्वर्युर्जपति—हे ब्रह्मन् ! राष्ट्रेऽस्मद्देशे ब्रह्मवर्चसी यज्ञाध्ययनशीलो ब्राह्मणः, आ जायताम् उत्पद्यताम् । राजन्यः क्षत्रियश्चेद्दश आ जायताम् । कीदृशः । शूरः पराक्रमी । इषव्यः इषुभिर्विध्यतीति । यद्वा इषौ कुशलः । अतिव्याधी अत्यन्तं विध्यतीति । शत्रुभेदनशीलः । महारथः एकः सहस्रं जयति सः । दोग्ध्री दुग्धपूरयित्री धेनुः, आजायताम् । राष्ट्रे इति सर्वत्र सम्बन्धः । अनड्वान् वृषभो वोढा वहनशीलो जायताम् । सप्तिरश्वः । आशुः शीघ्रगामी जायताम् । योषा स्त्री । पुरन्धिः पुरं शरीरं सर्वगुणसम्पन्नं दधातीति । रथेष्ठाः रथे तिष्ठतीति । रथे स्थितो युयुत्सुर्नरो जिष्णुः जयनशीलो जायताम् । युवा आ अस्येति पदच्छेदः । अस्य यजमानस्य युवा समर्थः सभेयः सभायां योग्यो वीरः पुत्रो जायताम् । किञ्च नो राष्ट्रे पर्जन्यो निकामे निकामे नितरां कामनायां सत्यां वर्षतु । नोऽस्माकम् । ओषधयो यवाद्याः । फलवत्यः फलयुक्ताः पच्यन्ताम्, स्वयमेव पक्वा भवन्तु । नोऽस्माकं योगक्षेमः कल्पताम् । योगेन युक्तः क्षेमः योगक्षेमः स क्लृप्तो भवतु । अलब्धलाभो योगः । लब्धस्य परिपालनं क्षेमः ।

यत्तु कैश्चिदुच्यते—"भारते ज्ञानवैराग्यप्रावण्यप्राधान्यादेव लोकसिद्धार्थोन्नतिसम्पादनशैथिल्यम्" इति, तन्न;

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

इति रीत्या च भावनाभेदेनोभयोः सामञ्जस्यस्योक्तत्वात् । विद्याया धनस्य चार्जनकाले स्वात्मानमजरममरं ज्ञात्वैव तात्पर्येण प्रयतेत । परं धर्मार्जनकाले मृत्युगृहीतकेश इव धर्मब्रह्मोपासनतत्परो भवेत् । नास्तिक्याक्रान्तो धर्मविमुखस्तु परपीडयाऽन्यायेन च धनसङ्ग्रहाय प्रयतमानोऽनर्थानुबन्धम्, अधर्मानुबन्धञ्चार्थमुपार्जयति । शास्त्रीयया दृशा त्वधर्मानुबन्धः, अनर्थानुबन्धोऽननुबन्धश्चार्थो हेय एव, धर्मानुबन्धोऽर्थानुबन्धश्चार्थो ग्राह्यः । यस्यार्थस्यागमनेनोत्तरोत्तरं धनं धर्मश्च वर्धेते तौ द्वावन्त्यौ; यस्यागमेन गृहगतमपि धनमपैति धर्मवैमुख्यमधर्माभिमुख्यञ्च वर्धेते तावाद्यौ । निरायतिश्चाननुबन्धः । तत एव विदुरेणोक्तम्—

अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण वा ॥ ७६ ॥
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः । (म० भा० उ० प० ३६)

अर्थाद् बह्वायासोऽल्पफलोऽधर्महेतुः सम्मानबाधकश्चार्थस्त्याज्य एव। परानननुपीड्य, खलाननुपजीव्य, स्वधर्ममनुल्लङ्घ्य न्याय्येन मार्गेण प्राप्तमल्पमपि धनं सायतिकं निराबाधञ्च भवति। तच्च नाग्नौ दह्यते, नाप्सु क्लिद्यते, न वा साहसिकानां पाटच्चराणाञ्चोदरेषु जीर्यते। प्रतिक्षणं वर्धमानं धर्ममर्थञ्चोत्तरोत्तरमभिवर्धयन् महते सौभगायाभ्युदयनिःश्रेयसाभ्याञ्च घटते।

तदुक्तम्—

अकृत्वा परसन्तापमगत्वा खलमन्दिरम्।
अनुल्लङ्घ्य सतां वर्त्म यत् स्वल्पमपि तद् बहु॥

कौटल्येनाप्युक्तम्—

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु॥

(प्रकरणम् १, अ० ४।५)

अधर्माश्रयेणापि यद्यपि पूर्वं रावणादीनां समृद्धिः श्रुता, परमन्ते ते समूलघातं हताः। तत एव बुभुक्षातुरोऽपि तात्कालिकतुष्टि-पुष्टि-क्षुण्णिवृत्तिकरमपि विषमिश्रं पायसान्नं परिणामघातित्वाद् भक्षयितुं न प्रवर्तते। तथैव परिणामापेक्षी दीर्घदर्शी मोहकमपि धर्मापेतं पन्थानं नाश्रयते। अत एवार्थशास्त्रविद्भिरपि व्यवस्थितार्यमर्यादस्य कृतवर्णाश्रमस्थितेस्त्रय्या रक्षितस्यैव लोकस्यावसादनिरासप्रसादप्राप्तिरुच्यते।

व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥

(कौ० अ० शा०, प्र० १, अ० ३।४)

अत एव न्यायप्रवृत्तस्य रामस्य काक-गृध्र-वानर-भल्लूकाः कोलभिल्लादयश्च सहयोगिनो जाताः। न्यायातिवर्तिनोऽपन्थानमाश्रितस्य रावणस्य सोदरोऽपि विमुखो जातः।

तथाहि—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥

(अनर्घरा० १।४)

दिवसेनैव तत् कुर्याद् येन रात्रौ सुखं वसेत्।
अष्टमासेन तत् कुर्याद् येन वर्षाः सुखं वसेत्॥६७॥

पूर्वे वयसि तत् कुर्याद् येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत् कुर्याद् येन प्रेत्य सुखं वसेत् ॥६८॥
( म० भा०, उ० प० ३५ )

अर्थविप्लववारणाय धर्मवदेव दण्डनीतिरप्यपेक्षिता भवतीत्युक्तमेव । आन्वीक्षिकी-त्रयी-वार्तानां योगक्षेमसाधनो दण्डः । तस्य नीतिर्दण्डनीतिः । सैव राजधर्मशब्दव्यपदेश्या । यथा हस्तिपदे सर्वं पदं निमग्नं भवति, तथैव राजधर्मे सर्वे धर्माः प्रविष्टा भवन्ति ।

यथा राजन् हस्तिपदे पदानि संलीयन्ते सर्वसत्त्वोद्भवानि ।
एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थं सम्प्रलीनान्निबोध ॥
( म० भा०, शा० प० ६३।२५ )

दण्डनीतौ विप्लुतायां त्रयी तदुक्तो धर्मश्च निमज्जति—

मज्जेत् त्रयी दण्डनीतौ हतायां सर्वे धर्माः प्रक्षयेयुर्विवृद्धाः ।
सर्वे धर्माश्चाश्रमाणां हताः स्युः क्षात्रे त्यक्ते राजधर्मे पुराणे ॥
( म० भा०, शा० प० ६३।२८ )

तथा आन्वीक्षिकी-त्रयी-वार्ताश्च विपद्यन्ते । तदुक्तं कामन्दकेन—

आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥
( का० नी० सा० २।८ )

अर्थोपार्जनं न्यायेनान्यायेन च सम्भवति। तत्र न्यायमार्गेणैवार्थार्जनं कर्त्तव्यम्, नान्यायेन ।

अथ न्यायार्जितस्य कस्यचिदपहारो मा भूत्, उपार्जकाः कर्षकाः श्रमिणः स्वार्जित-फलस्य यथेष्टविनियोगे स्वतन्त्रा भवेयुरित्येतदर्थं दण्डनीतिरप्यपेक्षिता ।

दण्डस्य हि भयात् सर्वं जगद्भोगाय कल्पते ।
( म० ७।२२ )

अद्यात् काकः पुरोडाशं श्वा च लिह्याद् हविस्तथा ।
( म० ७।२१ )

इत्यादिवचनात् ।

दण्डमन्तरा सर्वमव्यवस्थितं भवति । दण्डनीतिश्च विष्णोः पालनी शक्तिरेव । यया पालितं विश्वमभ्युदयनिःश्रेयसप्राप्तौ समर्थं सम्पद्यते, दुष्टनिग्रह-शिष्टपरिपालनाभ्यामभ्युदय-

निःश्रेयससाधनेषु सौविध्योपस्थापनेनासौविध्यनिराकरणेन च विश्वस्य प्रोत्साहनमेव दण्डनीतेर्दण्डधरस्य च मुख्यं कर्त्तव्यम्। अलब्धलाभार्था, लब्धपरिरक्षिणी, रक्षितविवर्धिनी, वृद्धस्य तीर्थेषु प्रतिपादयित्री च दण्डनीतिरेव भवति। तदर्थमेव त्रयीधर्मस्यापेक्षा भवति। तत एव धर्मः क्षत्रस्य क्षत्रमुक्तः। अर्थार्थमपि धर्मापेक्षा भवति। 'धर्मादर्थश्च कामश्च' इति वैयासिकं वचनम्। कौटल्येन च 'धर्मेण धार्यते लोकः' ( चा० सू० ४।१ ) इत्युक्तम्। धर्मेऽपि विभ्रमो मा भूदिति शोकमोहराहित्यसम्पादनायाध्यात्मविद्यामयी तर्कविद्या आन्वीक्षिकीनाम्ना प्रवृत्ता;

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता ॥

( न्या० कु० १।३ )

इत्युदयनाचार्योक्तिः।

अत एव कौटल्येन—

आन्वीक्षिकी-त्रयी-वार्ता दण्डनीतिश्चेति विद्याः।

( कौ० अ० शा०, अ० २, प्र० १ )

इति चतस्रो विद्या निर्दिष्टाः।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

( कौ० अ० शा०, अ० २, प्र० १ श्लो० १ )

बुद्धिवैभवाद् विना परस्वापहारमपहाय कुपथाश्रयं शिष्टानुमोदितेन शास्त्रीयेण मार्गेणार्थाभ्युदय एव श्रेयान्। केनचित् कुतश्चिद् मृतां मूषिकां गृहीत्वा रुग्णमार्जारस्वामिनो हस्ते सा पणद्वयेन विक्रीता। तेनैव चणकमाहृत्य प्रपासन्निधावास्थाय श्रान्तपान्थेभ्यो विक्रीय चणकं पञ्चपणान्यर्जितानि। एवं क्रमेण यथायोग्यं यथावसरं विपणैर्लक्षाधीशो बभूव। दण्डनीतौ राजनीतिर्वा अर्थशास्त्रान्तर्गतैव। समष्टिराष्ट्रस्य तयैव समुत्थानं सम्भाव्यते। तत्रापीन्द्रजालकारनीत्या यथा वृक्षाः पूर्वं छिद्यन्ते दह्यन्ते, तदन्तरा तन्निर्माणासम्भवात्। पत्र-पुष्प-फलच्छायामयवृक्षविनाशः प्रथमं दृश्यते, क्रियानलभ्यलाभो भविष्यतीन्द्रजालनिर्माणेनेति तु पश्चात् शास्यते यथा, तथैव जनसमूहस्य वैयक्तिक-भूमि-सम्पत्तिमहोद्योगादीनां राष्ट्रियत्वापादनव्यपदेशेन पूर्वमपहारः, पश्चाद् यद्वा तद्वा भविष्यत्येव।

मधुकरस्य चान्या नीतिः। यत्र पत्रपुष्पफलादीनां वृक्षाणाञ्चावसादमन्तरैव मधुररस-सङ्ग्रहेण मधुनिर्माणं जायते। एवमेव बुद्धिवैशद्येन सर्ववर्धनसर्वोदयमार्गेणैव न कञ्चनाप्यापन्नं विधाय विधित्सा लिप्सा वा क्रियते।

## सप्ताङ्गं खलु राज्यं भवति

'स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च।'

(अमर० क्षत्रिय० १७)

यथा राष्ट्र-दुर्ग-मित्र-कोषामात्यबलान्यपेक्ष्यन्ते, तथैव तत्र नृपोऽप्यपेक्षितः। व्यष्टेरुत्थानार्थं समष्टेः समृद्धिरपेक्षिता। समष्टेः समृद्धये व्यष्टेरप्युन्नतिरपेक्षिता। तत एवार्थसुव्यवस्थायै सुस्थिरा राज्यव्यवस्थापेक्षिता, तदर्थं दृढं सैन्यबलम्, योग्यधर्मिष्ठसञ्चालकादिवर्गोऽप्यपेक्षितः, तदर्थञ्च समृद्धकोषोऽपेक्षितः, तदर्थं भूमि-वन-व्यापार-यातायातसाधननिर्यातायात-समुद्र-नदी-पशुपालन-लघूद्योग-महोद्योग-लघुबृहद्यन्त्रादि-मृत्तरयान-धूमयान-वायुयान-तन्त्री-दूरभाषादिव्यवस्थापनं करसङ्ग्रहश्चावश्यकः।

## अत्र मार्क्समतम्

मार्क्सरीत्या तु सभ्यतायाः प्रादुर्भावात् प्राक् साम्यसङ्घीयव्यवस्थासीत्। तत्र राज्यं राजदण्ड-दाण्डिक-व्यक्तिगतसम्पत्त्यादिकं नासीत्। वैयक्तिकसम्पत्तिविनिमयमुद्राविकासेन वैषम्येण श्रमविभागो वर्णविभागश्च जातः। आदिमसाम्यसङ्घस्य मूलरूपभङ्गेऽपि गणरूपेण तद्विकासः प्रारब्धः। वन्यावस्थायामर्धवन्यावस्थायाञ्च जीविकार्थमाखेटार्थमात्मरक्षार्थञ्च पूर्वं पाषाणमयानामस्थिमयानाञ्च शस्त्रास्त्रादीनां विकासो जातः। पशुपालनाग्निविज्ञान-लोह-सुवर्णादिद्रावणकलाविकासेन विशिष्टशस्त्रास्त्रकृषिसाधनविज्ञानमप्युद्भूतम्। सङ्घान्तरैर्वर्गान्तरैश्च सङ्घर्षायात्मरक्षणाय गणेषु गणपतीनामिव सेनानीपुरोहितामात्यादीनामपि निर्वाचनद्वारैव व्यवस्थापनं जातम्। लोभक्रोधादिविकासेन गणसङ्घटनभङ्गेन गणपतयः, प्रभवः, सैनिकाः, क्षत्रियाः, सेनापतयोऽवान्तरभूपालाः, पुरोहिताः, गुरवो ब्राह्मणाश्च संवृत्ताः। अकिञ्चनान् निर्धनानभिभूय धनिकाः शासकाः संवृत्ताः; वैश्यास्तदनुगामिनः, शूद्राश्च सेवकाः संवृत्ताः। युद्धेषु पराजिता दासा जाताः। त एव क्रमेण शूद्राः संवृत्ताः। ततोऽपि परवर्तिकाले सामन्त-राजसाम्राज्यतन्त्रविकासो जातः। कर्षकाः श्रमिका बहुसंख्याका दरिद्राश्च शोषिताः, सामन्तादयश्च शोषका जाताः।

तेषां रीत्या वेदेष्वप्यादिमसाम्यसङ्घो ब्रह्मनाम्ना सामूहिकोत्पादनवितरणव्यवस्था च यज्ञनाम्ना निर्दिष्टा। सत्रेषु बहुसंख्याकेषु यजमानेषु निर्वाचितः कश्चिद्यजमानो भवति। फलभागिनस्तु सर्वेऽपि समाना भवन्ति।

देवानां कस्मिंश्चित् सत्रे विष्णुर्गृहपतिरासीत्। तेन च समयभङ्गः कृतः। देवैर्विरोधः कृतः। स चास्त्रादिसम्पन्नो देवान् पराजित्य चोत्स्मयन् धनुःकोटिं चिबुकेनालम्ब्य स्थितवान्। देवैश्च नियुक्ताभिर्वम्रीभिर्धनुर्ज्या छिन्ना। ततो विष्णोरुत्कृत्तं शिरः। एवं बहुतिथात्कालात् शोषितानां शोषकैः सार्धं सङ्घर्षः प्रचलितः। क्रमेणान्ते वर्गसङ्घर्षेण शोषकवर्गविध्वंसेन शोषितानामधिनायकत्वे साम्यवादः सेत्स्यति।

प्रतिषेधप्रतिषेधेन पूर्वं प्रतिषिद्धस्योत्कृष्टस्वरूपेणाभिव्यक्तिर्भवति। यथा बीजस्य प्रतिषेधेन (उपमर्देन) अङ्कुर उत्पद्यते, अङ्कुरप्रतिषेधेन तदेव बीजं यवगोधूमादिवल्लरी-रूपेण संख्यया स्वरूपगुणादिभिश्चोत्कृष्टरूपेण व्यज्यते, तथैवादिमसाम्यसङ्घस्य प्रतिषेधेन चान्ते सर्वोत्कृष्टवैज्ञानिकाधुनिकतमसाम्यवादस्योत्पत्तिः।

यथा वा पूर्वं कश्चिद्वादो जायते। तदनन्तरं तस्य प्रतिवादो भवति। ततः कालान्तरे तयोः संवादो जायते। स संवादोऽपि कालान्तरे प्रतिवादोत्पत्त्या वादः सम्पद्यते। पुनश्च तयोर्वादप्रतिवादयोः संवादो भवति। यद्यपि 'हीगेल' रीत्या राष्ट्रवाद एवान्तिमः संवादः, परं मार्क्सरीत्या सोऽपि वाद एव। अन्तिमः संवादस्तु साम्यवादः। मार्क्सानुसारं भौतिकद्वन्द्ववादः, ऐतिहासिकद्वन्द्ववादश्च साम्यवादपर्यवसायिनौ भवतः।

श्रमिकान्, कर्षकान्, वणिजश्च निष्पिष्य भौमिकाः सामन्ता मण्डलमहीपाला उत्पन्नाः। तानुपमृद्य सम्राट् सञ्जातः। कालान्तरे सम्राजां परस्परसङ्घर्षेण क्षीणशक्तिकत्वाद्विनाशे पुनरुत्कृष्टसामन्तवादोऽजनि। तेष्वपि सङ्घर्षे जाते क्षीणशक्तिकेषु व्यापारिप्रधानप्रजाना-मान्दोलनेन प्रजातन्त्रस्थापनम्। तत्र विज्ञानबलेन महायन्त्रादिविकासेनौद्योगिक्यां क्रान्त्यां जातायां लघूद्योगोपमर्देन महोद्योगप्रादुर्भावः। महोद्योगपतीनां धनिकानां धनप्रभावादुत्त-रोत्तरमुत्तमोत्तमयन्त्राणां विकासो जातः। तेन लक्षद्वयपरिमितश्रमिकैः सम्पादनीयस्य कार्यस्य सहस्रसंख्याकैः श्रमिकैरेव सम्पत्तिर्भवति। शेषाणां जीविकासाधनशून्यत्वेन निरर्थकता जायते। उत्पादनसाधने भूमिक्षेत्रेषु विविधतैजसतैले(पेट्रोल)-ङ्गाललौहस्वर्णरत्नाद्याकरेषु मुष्टिमेय-शोषकाणामेवाधिकाराद् बहुसंख्याका जनता जीविकाराहित्यात् क्रयशक्तिविधुरा भवति। तत आपणेषु तदुत्पादितवस्त्राद्युपभोग्यवस्तूनां विद्यमानत्वेऽपि मुद्राद्यभावाद् जनाः क्रेतुं

न समर्था भवन्ति। तेनैव वस्तूनां विक्रयाभावात् समुत्पादितपदार्थानामापूरातिरेकादसंवेशादनुपयोगान्मुद्रादिलाभानुत्पादकत्वाच्चोत्पादने गतिरोधो जायते।

यद्यप्यापणेषु विविधानि वस्त्राणि, विविधानि पादत्राणानि, घृतदुग्धशर्करादीनि खाद्यद्रव्याणि, द्विचक्रिका-मृत्तरयानवायुयानादीनि, नानाविधानि यन्त्राणि सन्ति, सर्वाणि च श्रमिकैर्निर्मितान्येव, तथापि क्रयशक्तिवैधुर्यात्तैर्बहुसंख्याकैस्तानि यथेच्छं गृहीतुमुपभोक्तुञ्च न शक्यन्ते। उपनिवेशानां सत्त्वेनोद्योगक्रान्त्यां परिच्छिन्नायाञ्च तत्र पदार्थसंवेशावकाशो ( माल खपत होने की सम्भावना ) भवति। क्रान्त्यां विस्तीर्णायामुपनिवेशसमाप्तौ च नान्यत्र समावेशावकाशः। लाभार्थमेवोद्योगपतिभिर्वस्तून्युत्पाद्यन्ते। जनसामान्यस्य क्रयशक्तिक्षयेणापणेषु विद्यमानानां वस्तूनां लाभानुत्पादकत्वेन नैरर्थक्यमेव जायते। ततो वस्तूत्पादनगतिमान्द्यापादनाय कर्मकरश्रमिकसंख्यालाघवाय श्रमिकविविक्ति-( छँटनी )र्जायते। तेन पुनरपि जननिर्जीवनं क्रयशक्तिह्रासश्च जायते। तस्य गतिरोधस्य निवारणायोत्पादनसाधनानां राष्ट्रियत्वापादनमन्तरा नान्यः पन्था भवति। यद्यप्यापातत एतदनुचितमिवाभाति, तथापि वस्तुगत्योद्योगपतयोऽन्ये च साधनस्वामिनः शोषका एव भवन्ति। तथाहि—

मार्क्सीयरीत्या यन्त्रादिभिरुत्पादितानां वस्तूनां विक्रयेण यो लाभो भवति, तत्र श्रमिकाणामेव न्याय्योऽधिकारः, विनिमयमूल्यस्य श्रममूलकत्वात्। यदि नाम कश्चित् कस्माच्चित् किञ्चिद् ऋणं गृहीत्वा सूत्राणि क्रीत्वा स्वगृहे वस्त्रं निर्मायापणे विक्रीणाति, तल्लब्धान्मूल्यात् ससूदमृणं निर्यातयति, तदवशिष्टधनस्य श्रमफलस्याधिकारी स श्रमिक एव भवति। एवमेव महोद्योगोत्पादितवस्तुविक्रयेणापि यद्धनं लभ्यते, ततः प्रकृतिद्रव्य-( तूल-शण-पुण्ड्र-मिश्रलोहादि-कच्चा माल ) मूल्यस्य यन्त्रतदागारादिभाटकस्य च तत्सूदस्य च पृथक्करणादवशिष्टं धनं श्रमफलमेवेति श्रमिका एव तदधिकारिणो भवितुं युक्ताः। अद्यत्वे तु यन्त्राधिपतयस्ततः किञ्चिदेव श्रमिकेभ्यो दत्त्वा तदर्जितस्य सर्वस्यापि धनस्य स्वामिनो भवन्ति। तदेव तेषां शोषकत्वम्।

वस्तुतस्तु धनिकाः प्रकृतिद्रव्याणीव श्रममपि वेतनैः क्रीणते। कर्षकोत्पादिततूलशणादीन् यथाल्पेनैव धनेन क्रेतुमिच्छन्ति, तथैव बौद्धान् शारीरान् श्रमानपि। विवशात्, दारिद्र्याद् निर्जीवनाच्च ( बेकारी-बेरोजगारी के कारण ) समुचितमूल्यमन्तरैव कर्षकाः प्रकृतिद्रव्याणि, श्रमिकाः श्रमांश्च विक्रेतुं बाध्यन्ते। तदुत्पादितैर्वस्तुभिरन्ये मोदन्ते। ते च तद्वञ्चिताः क्षुत्क्षामा नग्नकायाः शीतातपातुरा वेपन्ते।

यथा अश्वरथोपजीवी यावदहोरात्रमश्वं श्रमं कारयित्वा प्रभूतं धनमर्जयति। ततश्च तावदेव चणकघासादिकमश्वाय प्रयच्छति, येन स प्राणान् धारयन् तदपेक्षानुसारं श्राम्येत। तथैव शोषका उद्योगपतयः प्रकृतिद्रव्योत्पादकेभ्यः श्रमिकेभ्यश्च तावदेव द्रव्यं मूल्यं वेतनञ्च प्रयच्छन्ति, यावता ते प्राणान् धारयमाणा वस्तून्युत्पादयेरन् श्राम्येरंश्च। एवमुत्पादकश्रमिकोपार्जितलाभात् स्तोकं दत्त्वा सर्वमपहरमाणाः शोषका भवन्ति। स एव लाभः साम्यवादिभाषया अतिरिक्तलाभशब्देनोच्यते। स एव शोषकाणां लाभो ( मुनाफा ) भवति।

प्राचां रीत्या द्रव्यपतिरेवोत्पत्तिं नियच्छति। स एवोत्तमानि यन्त्राणि निर्मापयति। निर्माणसाधनानि च श्रमिकेभ्यः प्रयच्छति। प्रकृतिद्रव्योत्पादं प्रोत्साहयति। क्रीत्वा च यन्त्रागारस्थानं प्रापयति। उत्पादितानि वस्तून्यापणेषु प्रेष्य विक्राययति। वेतनैः श्रमिकानपि संयोजयति। स्वमुद्रादिधनं संशयास्पदं कृत्वा महोद्योगमायोजयति। कदाचिद्धानिम्, लाभञ्च कदाचिदाप्नोति।

मार्क्सरीत्या तु श्रमिका एव प्रकृतिद्रव्याणि प्राकृतानि च वस्तूनि निर्मान्ति। त एव यन्त्रागारमापणञ्च वस्तूनि प्रापयन्ति, त एवोत्पत्तिनियन्तारो भवितुमर्हन्ति।

तद्रीत्या धनिकानां यन्मूलधनं तदपि पूर्वपूर्वश्रमिकोपार्जितमेव। बलादेव शोषकैस्तत् स्वायत्तीकृतम्।

मार्क्सदिशा पूर्वं सर्वे वन्या असभ्या नग्नाश्चर्मवल्कलादिपरीधाना आममांसफलमूलादिभक्षणैर्जीवन्तः क्रमेणार्धवन्या अर्धसभ्याः सभ्याश्च सञ्जाताः। पूर्वं वृक्षमूलशाखादिगिरिकन्दरादिषु कृतावासाः। पश्चात् पर्णशाला गृहपरिवारसङ्घादिव्यवस्था जाता। पशुपालनकृषिविकासानन्तरं विनिमयमुद्राव्यापारादिविकासो जातः। यथा मत्स्येषु प्रबला दुर्बलान् भक्षयन्ति, तथैव प्रबला दुर्बलानां धनानि क्षेत्राणि च बलादधिकुर्वन्ति। तेन सर्वमिदं वैभवं धनञ्च शोषितोपार्जितमेव। सामन्ता भौमिका राजानः सम्राज उद्योगपतयश्चार्जकान् मायया छद्मना अन्यायैर्बलात्कारैश्च वञ्चयित्वा तदुपार्जितैर्धनैः क्षेत्रैरैश्वर्यैश्च स्वैरं विहरन्ति। विशेषतोऽस्मिन्नौद्योगिके युगे सर्वैर्भूम्याकराद्युत्पादनसाधनैः श्रमिकायत्तैरेव भाव्यम्।

सेण्ट साइमनप्रभृतिभिः फ्रैञ्चसमाजवादिभिस्ततोऽपि पूर्वं सर्वसाम्य-सर्वस्वातन्त्र्य-सर्वसौभ्रात्रघोषाः ( नारा-स्लोगन ) प्रवर्तिताः। तथापि वैयक्तिकधनक्षेत्राद्युत्पादनसाधनानामपहारे धर्मनैतिकतादिविरुद्धत्वात् तेषां प्रवृत्तिर्नासीत्। मार्क्सेन तु सम्प्रति साम्यमन्तरा पूर्वोक्तमुद्घोषं निर्जीवं ( अकिञ्चित्करम् ) मत्वा वैयक्तिकसर्वविधोत्पादनसाधनसम्पत्तीनां समाजायत्तता-

सम्पत्तये ( समाजीकरण-राष्ट्रीकरण के लिए ) यतितम्। तद्रीत्या सर्वेषां धार्मिकाणामाध्यात्मिकानां सामाजिकानाञ्च नियमानां तत्तदर्थावस्था एव भित्तयः। अर्थावस्थानाञ्चोत्पादनसाधनानि मूलम्। यदा यादृशानि साधनानि भवन्ति, तदा तादृगर्थव्यवस्था भवति। यदा हस्तचालितपाषाणचक्रिकाभिश्चूर्णपेषणादिव्यवस्थासीत्, तदान्यादृश्यर्थव्यवस्थासीत्। जलचक्रिकाकाले वाष्पचक्रिकाकाले चार्थव्यवस्था अन्यथैव संवृत्ता। साम्प्रतं विद्युच्चक्रिकाकालेऽल्पीयसैवानेहसा प्रभूतं चूर्णं पिष्यते, येन नगरस्यापि भोजनं सम्पद्यते। एवमेव पूर्वं वृषभचालितनिष्पीडनयन्त्रेण तैलनिर्माणं क्रियते स्म। तदानीं कस्यचिन्नगरस्य कृते नैकशतं बलीवर्दाः, तथैव बहवस्तच्चालका बहवश्च निष्पीडन-( कोल्हू ) निर्मातारो बहवश्च तैलवाहकास्तत्तद्गृहप्रापका अपेक्ष्यन्ते। बहूनाञ्च जीविका तैलव्यापारेणैव चलति, परमद्यत्वे विद्युच्चालितेन महता यन्त्रेण स्वल्पैरेव श्रमिकैस्तावत्तैलमुत्पाद्यते यावता पञ्चषाणां महानगराणां तैलकार्यं सम्पद्यते। तत एवाद्यत्वे मुष्टिमेयानां धनिकानां हस्ते धनसाम्राज्यं भवति, बहुसंख्यानां हस्ते दरिद्रसाम्राज्यमेवावशिष्यते। ततो येषां मानवानां साधनोत्पादनपरिवर्तनेऽधिकारः, येषाञ्चार्थव्यवस्थापरिवर्तनेऽधिकारस्तेषामेव तद्वितरणसम्बन्धिनियमपरिवर्तनेऽपि स्वातन्त्र्यमभ्युपेतव्यम्।

भौतिकानि सर्वाण्येव वस्तूनि। ज्ञानविचारादयोऽपि भौतिका एव। भङ्गादिपानेन विचाराणां प्रभावितत्वदर्शनाद् भौतिकपरिस्थितिपरिवर्तनेन नियमपरिवर्तनं जायते। सर्वे सिद्धान्ताः सर्वे च नियमा यथायोग्यं परिवर्तनमर्हन्ति। शास्त्राणामपि परिवर्तनं भवति। समेषां तेषां पौरुषेयत्वेन विकासरीत्योत्तरोत्तरं ज्ञानक्रियायन्त्रादिविकासदर्शनाद् बुद्धिज्ञानविकासतारतम्यमप्यभ्युपेयम्। यथा वन्यावस्थागतानां नियमानां नार्धवन्यावस्थायामादरः सम्भाव्यते, तथैवार्धवन्यावस्थागतानां नियमानां न सभ्यतायुगे परिपालनं सम्भवति। तथैवेदानीमुद्योगक्रान्तियुगे न वेदपुराणकुरानादिनियमानां परिपालनमम्, अनुपयोगित्वात्। तथा च यत् पूर्वतनानां नियमानां तद्भित्तिभूतार्थावस्थापरिवर्तनेन धराशायित्वं जातम्; शोषकाणां हितावहेषु प्राचीनेषु शास्त्रीयादिनियमेषु बाधितेषु यत् पूर्वं न्याय्यं तदिदानीमन्याय्यम्; यत् पूर्वं सत्यं तदिदानीमसत्यम्; यत् पूर्वमुचितं तदिदानीमनुचितमेव। तथा च कदाचिद्वैयक्तिकसम्पदपहारस्य दुष्टत्वेऽपि नाद्यत्वे तद्दोषावहम्।

न चात्मनित्यत्वेनाध्यात्मिकनियमानां नित्यत्वमिति वाच्यम्, भूतानां गुणात्मपरिणामस्यैव चैतन्येनाभौतिकस्य कस्यचिदात्मनोऽनङ्गीकारात्। यथा पाटलकाण्डस्य पत्रकण्टकादयः परिणामाः, तथैव सौन्दर्याद्युपेतस्य पुष्पस्य तत्परिणामत्वमेव। यथा वा आम्रबीजमेवाङ्कुरनाल-

स्कन्धपत्रपल्लवादिरूपेणैव परिणमते, तथैव सौन्दर्यमाधुर्यसौरस्यसौगन्ध्यविशिष्टपक्वफलरूपेणापि तदेव परिणमते, न तदन्यत आगच्छति। एवमेव देहेन्द्रियमनोमस्तिष्कादिवच्चैतन्यमपि भौतिकशुक्रशोणितपरिणामभूतमेव।

न चेश्वरस्य नित्यत्वेन तदीयनियमानां शाश्वतत्वमपि वक्तुं शक्यम्, तदस्तित्वे प्रमाणाभावात्। सूक्ष्मविद्युत्कणादियोगेन सूर्यमण्डलादिविविधगोलनिर्माणं जायते। तत एव चन्द्रमण्डलस्येव भूमण्डलस्यापि पृथग्भावः। तस्य क्रमेण तापमानह्रासाद् वाष्पपर्जन्याद्युत्पत्तिः। ततो वृष्टिः। ततो वनस्पतयः। तत ओषधयः। ततोऽमी वा हाइड्राादिक्रमेण सरीसृपमत्स्यकच्छपपक्षिपशुवानराणामाविर्भावः, ततो मनुष्याः। तेषु क्रमेण सभ्यताविकासः। वनेष्वन्धकारबहुलेषु हिंस्रश्वापदादिसङ्कुलेषु मेघाच्छन्ननभःसु जलोपलादिवृष्टिव्याप्तेषु भीरूणां स्वमस्तिष्ककल्पनाप्रसूताः प्रेतपिशाचाद्यात्मानः प्रतिभान्ति। त एव यथाक्रमं सभ्यताक्षारक्षालिता विविधयक्षगन्धर्वदेवादिरूपेण दार्शनिकवैज्ञानिकचमत्कृतिविशिष्टा ईश्वरब्रह्मादिरूपिणः सञ्जाताः। तथा च वस्तुस्थित्यनुरोधेन मानवसमाजार्थमेव नियमा निर्धार्यन्ते, न नियमार्थं मानवा भवन्ति। समेषामुत्पादनजीवनविकासादिसाधनानां समाजायत्ततापादनं समाजवादः, शिक्षा-जीविकाचयन-स्वार्जितफलोपभोगस्वातन्त्र्येषु समेषां समानोऽवसरलाभः साम्यवादः। एतदेव मतमर्थव्यवस्थायां बद्धमूलं साम्प्रतमाहतञ्च प्रायेण बहुराष्ट्रेषु।

तदेतन्मतं भारतीयवैदिकदार्शनिकशिष्टदृष्ट्या न प्रामाण्यपदवीमारोढुं क्षमम्, प्रत्यक्षादिविरोधात्। तथाहि—यदुक्तम् "क्वचिदपि शाश्वतिकः कोऽपि नियमो न भवति", तदसाम्प्रतम्, शाश्वतनियमानां बहुलमुपलम्भात्। चक्षुषैव रूपमुपलभ्यते नान्येन, श्रोत्रेणैव शब्दः सर्वास्ववस्थासूपलभ्यते। धरणिजलानिलसंयोगेन बीजादङ्कुरोत्पत्तिनियमः शाश्वत एव। चन्द्रावस्थाविशेषविशिष्टतिथिभेदेन समुद्रोद्वेलनकालभेदनियमोऽपि शाश्वतः। सर्वेषां सूर्यचन्द्रादिग्रहगणानां गतिविशेषनियमोऽपि नित्य एव। अर्थव्यवस्थाभेदेऽपि न तेषु नियमेषु यथा भेदः, तथैव धार्मिकसामाजिकनियमेष्वपि भेदो न सम्भवति। तत्र परिवर्तनं न भवति। न हि धर्मोपासनादिनियमा अर्थव्यवस्थापरिवर्तनमनु परिवर्तन्ते; न वा सत्यन्यायादयः। नाप्यात्म-परमात्मधर्मादयः पदार्था अपलापमर्हन्ति, अनुमानागमादिप्रमाणानामपि प्रामाण्यव्यवस्थापनात्।

भू-भूधर-सागर-चन्द्र-सूर्यादयः सावयवाः पदार्था नहि कारणकलापसमवधायकं विशिष्टचेतनकर्तारमधिष्ठानञ्चान्तरा स्वत एव समुत्पत्तुमर्हन्ति, घटप्रासादादीनां तथा दर्शनात्। ज्ञानञ्च न भूतधर्मः, भूतसामान्येषु तदनुपलम्भात्। नहि भूतधर्मो भूतसत्त्वेऽपि नोपलभ्यते।

न च चैतन्यमपि भौतिकदेहादिमन्तरा नोपलभ्यत इति वाच्यम्, भूतस्य चैतन्यव्यञ्जकत्वेनैव तदनुपलब्धावनुपलम्भोपपत्तेः। यथा काष्ठादीनामग्निव्यञ्जकत्वेनैवाग्नेस्तदनुविधायित्वम्, न तद्धर्मत्वेन। अतो यथा न काष्ठधर्मोऽग्निः, तथैव चैतन्यमपि न भूतधर्मः।

किञ्च, शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तिः, शरीरस्यावयवोपचयापचयैर्विनाशशालित्वात्। बालस्य स्तन्यपाने प्रवृत्तिरपि न स्याद् देहचैतन्यात्मवादे, इष्टसाधनताज्ञानस्य प्रवृत्तौ हेतुत्वात्। न च देहात्मवादे तत् सम्भवति। नित्यात्मवादे तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणात् प्रवृत्तिः सम्भवत्येव। चैतन्यस्यावयविधर्मत्वे वृक्णेषु हस्तादिष्ववयवेषु तन्नाशाच्चैतन्यलोपापत्तिः। अवयवधर्मत्वे प्रत्यवयवं नानाचैतन्यापत्त्या विरुद्धदिक्क्रियात्वेन शरीरोन्माथप्रसङ्गः।

न चेन्द्रियाणामप्यात्मत्वम्, तेषां ज्ञानं प्रति करणत्वात्। 'योऽहं चक्षुषा रूपमद्राक्षम्, सोऽहं श्रोत्रेण शब्दं शृणोमि' इति प्रत्यभिज्ञायमानस्यात्मनस्ततो भिन्नत्वावगमात्। भूतभौतिकानि सर्वाणि ज्ञेयानि ज्ञातृसापेक्षाणि, परप्रकाश्यत्वात्। मानाधीना मेयसिद्धिर्भवति, मानञ्च मात्रधीनम्, ततो भूतसिद्धेः प्रागेव तत्प्रमातृसिद्धिरभ्युपेया। प्रमाता चात्मा नित्यसिद्धः। संहतानां शय्यादीनां स्वविलक्षणासंहतार्थता यथा दृश्यते, तथैव देहादिसङ्घातस्यापि स्वविलक्षणासंहतनित्यचेतनार्थताऽभ्युपेतव्या। यथाऽनुष्णोऽदाहकश्च लोहपिण्डो नित्योष्णदाहादिप्रकाशविशिष्टाग्नितादात्म्येन नित्यदाहादिमान् भवति, तथैव नित्यचेतनसम्बन्धेन देहादीनामनित्यचैतन्यवत्त्वं युज्यते। यथा रथादिचेष्टाया अश्वसारथ्यादिचेतनपूर्वकत्वं दृश्यते, तथैवाचेतनशरीरप्रवृत्तिरपि चेतनाधिष्ठितैव मन्तव्या।

यथा घटादयो ज्ञानेच्छाकृतिपूर्वका भवन्ति, तथैव चन्द्रसूर्यादयोऽपि ज्ञानादिपूर्वका मन्तव्याः, विशिष्टकार्यत्वात् तादृशज्ञानादिसत्त्वं नास्मासु सम्भवतीति परमेश्वरसिद्धिः। 'वन्यवृक्षा अकर्तृका' इति नास्तिकदृष्टान्तस्तु न घटादिवदुभयसम्प्रतिपन्न इति न स दृष्टान्ततामर्हति, उभय-( वादि-प्रतिवादि ) सम्मतस्यैव दृष्टान्तत्वात्।

शरीरतद्गतसुखदुःखादिवैलक्षण्यदर्शनेन तद्धेतुवैलक्षण्यमपि प्रत्येतव्यम्, हेतुवैलक्षण्यमन्तरा कार्यवैलक्षण्यानुपपत्तेः। पश्वादिशरीरजन्यतद्वैलक्षण्यहेतवो न दृष्टाः सम्भवन्ति। ततोऽदृष्टजन्मान्तरीयधर्माधर्मतद्वैलक्षण्यमेव तद्धेतुत्वेनावगन्तव्यम्। तदपि देहातिरिक्तं चेतनमात्मानमवगमयतीत्यन्यत्र विस्तरः।

सर्वाधारः सर्वप्रकाशकः सर्वनियामकश्च कश्चनावश्यमभ्युपेतव्यः, अन्यथा तमन्तरा विश्वव्यवस्थानुपपत्तेः। नियमास्त्वनेके सूर्यादिगत्यादिसम्बन्धितः शाश्वता दृश्यन्ते। नियन्तारमन्तरा ते च नोपपद्यन्ते। नियामकः शासकश्च विधानमपेक्ष्यैव नियच्छति शास्ति च। आगन्तुकमनित्यं शासनं यथाऽनित्यविधानपूर्वकं भवति, तथैव परमेश्वरस्य नित्यनियामकस्य विश्वशासन नित्यविधानपूर्वकमेवेति मन्तव्यम्।

यथाद्यत्वे किञ्चिदपि भूमिक्षेत्रतडागवृक्षपर्वतसमुद्रादिकं निःस्वाम्यमनियन्त्रितञ्च न भवति, तथैव चन्द्रसूर्यादिसहितं सर्वमपि जगन्निःस्वाम्यमनियन्त्रितञ्च न भवति। नित्यस्य शास्तुर्विधानमेव शास्त्रं भवति। तदेव वेदादिशास्त्रं भवति। तन्नियमाश्च शाश्वता एव भवन्ति। "परान्नं परद्रव्यं वा पथि वा यदि वा गृहे। अदत्तं नैव गृह्णीयात्", "अदत्तानामुपादानम्" (म० १२।७) इत्यादिना परकीयवैधस्वापहारः पातकत्वात् सर्वत्रैव वर्जितः। बौद्ध-जैन-यीशु-मुहम्मदाद्यनुयायिषु चादत्तादानविरत्यादिरूपेणायं नियमः समादृतो दृश्यते। सर्वत्रैव सभ्यराष्ट्रेषु शासनेषु च परस्वापहारः साहसिकपाटच्चरत्वप्रयोजको भवति। परकीयवैधधनरत्नाद्यपहारिणं सर्वत्रैवारक्षिणो निगृह्णन्ति, न्यायालयेषु न्यायाधीशा दण्डयन्ति च। ग्राम्या विधिविशेषज्ञा न्यायमूर्तयश्च तं समक्षमेव सहसा-(बलेन) पहारे प्रवृत्तम्, साहसिकमसमक्षप्रवृत्तञ्च पाटच्चरमिति वदन्ति।

किञ्च, मानवा उत्पादनसाधनपरिवर्तनक्षमा अपि न परमेश्वरीयनियमपरिवर्तनक्षमा भवन्ति। अर्थव्यवस्थास्वपि न मानवाः सर्वथा स्वतन्त्राः, प्रकृतिद्रव्य (कच्चा माल)-निर्माणे तेषां सर्वथा स्वातन्त्र्याभावात्। घटादिनिर्माणकुशलोऽपि कुम्भकारो न मृत्तिकां निर्मातुं प्रभवति। वर्धकिः काष्ठस्तम्भादिक निर्माति, न तु काष्ठं निर्माति। एवं धरण्यनिलजलसंयोगैः कृषिं कुर्वन्ति कृषीवलाः। तथा बीज-धरणि-जलानिलनिर्माणे मानवा न प्रभवः। कृत्रिमाणि जलादीनि त्वकिञ्चित्कराण्येव। ततो न सर्वत्र स्वातन्त्र्यमिति परम्पराप्राप्तधार्मिकसामाजिकनियमपरिवर्तने न प्रभुत्वमस्मदादीनाम्। "नैकवारं हिरण्यकशिप्वादिभिरन्यथेदं विधास्येऽहम्" (श्री० भा० ७।३।११) इति शाश्वतपारमैश्वर्यविधानान्यथाकरणं प्रतिज्ञातम्, परं साफल्यं नाधिगतम्। तथा च परस्वत्वापहारो न चौर्यम्, नानुचितम्, किन्तु धर्मः, परवित्तकलत्रादिहरणे प्रवृत्तो न दण्डनीयः, परिस्थितिवशात् सोऽपि धर्मः। सत्यमसत्यमसत्यञ्च सत्यम्, न्यायोऽन्यायोऽन्यायश्च न्यायो भवतीति निरुक्तिर्न प्रामाण्यमर्हति। शास्त्रानुसारिणस्तु न शोषका भवन्ति, यथा तथोपरिष्टाद् वक्ष्यते।

## कामनिरूपणम्

कामोऽपि पुरुषार्थः। सोऽपि वासुदेवांश एव। "कामोऽपि वासुदेवांशः" (१०।५५।१) इति भागवतवचनात्। ईश्वरोऽपि सकामः सन्नेव महद्ब्रह्मभूतायां प्रकृतौ गर्भमादधाति—

'सोऽकामयत। एकोऽहं बहु स्याम् प्रजायेय'
मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत॥
(श्री० भ० गी० १४।३)

इति श्रुतिस्मृतिभ्याम्।

लोकव्यापि सर्वकामापेक्षया आधिदैविकस्येश्वरकामस्य सुतरां सुखमयत्वम्। निरुपाधिकं ब्रह्म मोक्षलभ्यम्, सोपाधिकञ्च ब्रह्मैव कामसुखम्, तत एवास्य वासुदेवांशत्वमुक्तम्। कामस्य परमार्थस्वरूपो रामः। स यथा—

सूर्यस्यापि भवेत् सूर्यः अग्नेरग्निः प्रभोः प्रभुः।
श्रियः श्रीश्च भवेत् ... ... ... ... ॥
(श्री० वा० रा०)

तथैव स एव कामस्यापि कामः। 'साक्षान्मन्मथमन्मथ'
(श्री० भा० म० पु० १०।३२।२)

इति श्रीमद्भागवतोक्तेः। यस्मिन् ब्रह्मण्येव प्रेमसौन्दर्ययोरन्तर्भावात् तच्छक्तिमिथुनात्मकत्वेन तन्मयत्वमपि सम्पद्यते। कामेश्वरकामेश्वरीरूपेण शिवशक्तिरूपेण दिव्यदम्पत्योर्यथा विश्वोत्पादकत्वम्, तथैव व्यष्टिनरनारीमिथुनेन व्यष्टिप्रपञ्चोत्पादकत्वमपि तस्यैव।

शरीरेणार्थस्य, मनसा कामस्य, बुद्धया धर्मस्य आत्मना मोक्षस्यासाधारणः सम्बन्धो भवति। तेन शरीरमनोबुद्धयात्मनामिवार्थकामधर्ममोक्षाणामपि साधारणः सम्बन्धो भवति। स च कामः सामान्यविशेषभेदेन द्वेधा। तत्रात्मसंयुक्तमनसाधिष्ठितानां श्रोत्रत्वग्जिह्वाचक्षुर्घ्राणानामात्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्येन प्रवृत्तिकरः कामः सामान्यकामः। "श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः" (वा० का० सू०, अधि० १, अ० २, सू० ११)। परस्परव्यतिकराभिलाषरूपा स्पर्शविशेषविषया या आभिमानिकसुखानुविद्धा फलवती प्रवृत्तिर्भवति, स विशेषः कामः।

तदुक्तम्—"स्पर्शविशेषविषयात् त्वस्याभिमानिकसुखानुबिद्धा फलवत्यर्थप्रतीतिः प्राधान्यात् कामः।" ( वा० का० सू०, अधि० १, अ० २, सू० १२ )।

एतेनाभिमानसङ्कल्पमूलकत्वमेव विशिष्टकामस्येति स्पष्टं प्रतीयते—

काम जानामि ते मूलं सङ्कल्पात् किल जायसे।
न त्वां सङ्कल्पयिष्यामि न त्वं तेन भविष्यसि॥
स्त्रीषु जातो मनुष्याणां स्त्रीणां तु पुरुषेषु च।
परस्परकृतस्नेहः काम इत्यभिधीयते॥
( शार्ङ्गधर० १।६ )

शास्त्रदृष्ट्या सा च प्रतीतिः प्रजाप्राप्तावेव साफल्यमधिगच्छति। अत एव विवाहमन्त्रेषूक्तम्—

ममेयमस्तु पोष्या मह्यं त्वादाद् बृहस्पतिः।
मया पत्या प्रजावती सं जीव शरदः शतम्॥
( अ० वे० सं० १४।१।५२ )

पत्या प्रजावतीत्वमेव विवाहसाफल्यमुक्तम्। ततोऽपि मुख्यं फलं यज्ञाद्यनुष्ठानमेव।

"स द्वितीयमैच्छत्। जाया मे स्यादथ कर्म कुर्वीय"

इत्युपनिषद्दृष्ट्या कर्मानुष्ठानोद्देश्येनैव जायाकामना भवति। दम्पत्योः सहाधिकारात् पत्नीमन्तरा कर्मानुष्ठानं न सम्भवत्येव, "पत्युर्नो यज्ञसंयोगे" ( पा० सू० ४।१।३३ ) इति यज्ञसंयोगेनैव पत्नीशब्दनिष्पत्तेः। यज्ञाद्यनुष्ठानद्वारा स्वर्गादिप्राप्तिर्भवति। निष्कामभावेन भगवदाराधनबुद्ध्या यज्ञाद्यनुष्ठानेन तु बुद्धिशुद्ध्या मोक्षोऽपि लभ्यते। कामशास्त्ररीत्या कामसेवनेन शीघ्रमेव तृप्तिर्विषयवैराग्यञ्च जायते। मुमुक्षया श्रवणमनननिदिध्यासनैस्तत्त्वसाक्षात्कारो भवति। तद्विधिमन्तरा श्वगर्दभादिवत् सदैव विषयपरायणता जायते।

कुरङ्ग-मातङ्ग-पतङ्ग-मीन-भृङ्गा हताः पञ्चभिरेव पञ्च।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च॥

रसासक्तिवशादेव मधुकरो नलिनकोशे निबद्ध्यते। दारुभेदनिपुणोऽपि सुकोमलान्यपि पङ्कजदलानि भेत्तुमप्यसमर्थो भवति? तदुक्तमेव—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार॥

बन्धनानि किल सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रिर्बध्यते स किल पङ्कजकोशे ॥

शास्त्रपरायणस्य यज्ञनिष्ठस्य पुरुषस्य तु पत्नीसम्बन्धो दुर्गाश्रयणमिव कामादिशत्रुविजय-साधनमेव भवति । तदुक्तं श्रीमद्भागवते श्रीकश्यपेन—

सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ।
व्यसनार्णवमत्येति जलयानैर्यथार्णवम् ॥
यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य भामिनि ।
यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥
यामाश्रित्येन्द्रियारातीन् दुर्जयानितराश्रमैः ।
वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा ॥
(३।१४।१७-१९)

तदर्थं वैधकामसेवैव युक्ता । धर्माविरुद्धकामस्तु भगवद्विभूतिरेव । तदुक्तं श्रीमद्भगवद्-गीतायाम्—

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।
( ७।११ )

अत एव मन्वादिभिरिव कौटल्येन अभिजनोपेतया सवर्णया अनन्यपूर्वया कन्ययैव वैधो विवाह उक्तः । सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः, पुत्राः, सम्बन्धः, पक्षवृद्धिरनुपस्कृता रतिश्च । तत्रैव योग्यकुलवृद्धिकरः पुत्रः प्रीती रतिश्च शुद्धा भवति । धन-जन-कुल-यौवन-सौन्दर्यादिभिरत्युत्कृष्टतायामत्यपकृष्टतायां वा न प्रीतिर्भवति, किन्तु समानतायामेव । तदुक्तम्—

परस्परसुखास्वादा क्रीडा यत्र प्रयुज्यते ।
विशेषयति चान्योन्यं सम्बन्धः स विधीयते ॥
( वा० का०, अधि० २, अ० १।१३ )

दूराच्चकमानाय प्रतिपाणायाक्षये ।
आस्मा आशृण्वन्नाशाः कामेना जनयन्त्स्वः ॥
( अ० वे० सं० १९।५२।३ )

सायणभाष्यम्—दूराद् दूरविषयमत्यन्तदुर्लभं फलम्। चकमानाय कामयमानाय। अस्मै जनाय। प्रतिपाणाय सर्वतो रक्षणाय। अभिमतफलप्रापणाय। अक्षये क्षयराहित्ये, निमित्ते अनिष्टनिवृत्तये च। आशाः दिशः सर्वाः प्राच्यादयः। आश्रृण्वन् आश्रवणं फलं प्रदातुम् अङ्गीकरणं कृतवत्यः। न केवलं प्रति श्रवणम्, किन्तु कामेन अभिमतफलविषयेण। स्वः सुखनामैतत्। सुखम्। अजनयन् उदपादयन्।

कामे न मा काम आगन् हृदयाद्धृदयं परि।
यदमीषामदो मनस्तदैतूप (दुपैतु) मामिह॥
(अ० वे० सं० १९।५२।४)

सायणभाष्यम्—कामेन फलविषयया इच्छया। कामः काम्यमानं फलम्। मा माम्। आगन् आगच्छतु। कामनाया मनोमूलत्वात् तन्मनः सम्पादयति। पूर्वं जगत्सृष्ट्यर्थं ब्रह्मणा उत्पादिता जगत्सृष्टिविषये कामयितारो नव ब्रह्माणः अमीषामित्यदःशब्देन विवक्ष्यन्ते। तेषां विप्रकृष्टानां ब्रह्मणाम्। यत्। अदो। मनः अस्तित्वभावनानिमित्तम्, तत् हृदयात्। प्रत्येकविवक्षया एकवचनम्। हृदयेभ्यः। हृदयं मदीयं हृदयप्रदेशः। परि अभिलक्ष्य। तत् तदीयं सर्वविषयं मनः। इह अस्मिन् फलकामे मां कामयितारम्। उपैतु उपगच्छतु।

विवाहानन्तरं प्रथमं सङ्गतयोस्त्रिरात्रमधःशय्या, ब्रह्मचर्यम्, क्षारलवणवर्जमाहारस्तथा सप्ताहं सतूर्यमङ्गलस्नानम्, प्रसाधनम्, सहभोजनञ्च, प्रेक्षा, सम्बन्धिनाञ्च पूजनमिति सार्ववर्णिकम्। इत्यादि रीत्या धार्मिकसामाजिकनियमपरिपालनमप्यत्यावश्यकं भवति। शास्त्रदृष्ट्यैव प्रीतिजननमानवर्धनादिभिर्विश्वासोत्पादनेनैव पतिः पत्नीप्रेमास्पदं भवति।

आत्मनः प्रीतिजननं योषितां मानवर्धनम्।
कन्याविश्रम्भणं वेत्ति यः स तासां प्रियो भवेत्॥

स्त्रीणां कृते—

पतिनिष्ठा, पातिव्रत्यपरिपालनम्, देववत् पतिसम्मानम्, पत्यानुकूल्येन वर्तनम्, कुटुम्बचिन्ता पत्न्याः कर्त्तव्यमुक्तम्—( वा० का० सू०, अधि० ४, अ० १, सू० १-२ )।

भोजनादिनिर्माणश्रृङ्गाराङ्गरागदशनवसनरञ्जनसङ्गीतवाद्यादिनैपुण्यमन्यासु च चतुःषष्टिकलासु तासां नैपुण्यसम्पादनमुक्तम्।

पुरुषाणामपि कृते धर्मार्थविद्याकाङ्गानुपरोधेन कामसूत्रतदङ्गविद्याध्ययनेन नैपुण्यज्ञानविधानम्।

"धर्मार्थकालानपरोधयन् काममूचं तदङ्गविद्याश्च पुरुषोऽधीयीत । अर्थमन्तरा कामोपसेवा न सम्भवतीति विद्याभिर्बौद्धादिश्रमैः प्रतिग्रहजयक्रयदायादिभिर्योगक्षेमं यापयन् गार्हस्थ्यं प्राप्य नागरिकवृत्तमनुवर्तेत"—( वा० का० सू० १।४।१ )।

"नागराचारोऽपि स प्रातरुत्थाय कृतनित्यक्रियो गृहीतदन्तधावनो माल्यानुलेपनं धूपं स्रजमिति च गृहीत्वा दत्त्वा सिक्थमलक्तकञ्च दृष्ट्वादर्शे मुखं गृहीतमुखवासताम्बूलः कार्याण्यनुतिष्ठेत्"—( वा० का० सू० १।४।५ ) ।

येना वपत सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्माणो वपते दमस्य गोमानश्ववानयमस्तु प्रजावान् ॥

( अ० वे० सं० ६।६८।३ )

इत्यादिमन्त्रेण वपनं विज्ञायते ।

[ सायणभाष्यम्—सविता देवः । विद्वान् जानन् । सोमस्य । राज्ञो वरुणस्य च सम्बन्धिना येन क्षुरेण । अवपत् वपनं कृतवान् । सोमं राजानं वरुणञ्च येन क्षुरेणावपत् इत्यर्थः । हे ब्रह्माणः ब्राह्मणाः ! तेन तादृशेन क्षुरेण । अस्य पुरुषस्य इदं केशश्मश्रु वपत । तेन विशिष्टवपनसंस्कारेण अयं पुरुषः । गोमान् बह्वीभिर्गोभिर्युक्तः । अश्ववान् अश्वैर्युक्तः । प्रजावान् पुत्रपौत्रादिभिर्युक्तश्च । अस्तु भवतु । ]

भारतीयसंस्कृतौ स्त्रीणां भूषणालङ्कारादिभिः सम्मानं विहितम्—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ॥

( म० ३।५६ )

शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्र पृथक् सादयामि ।
यत्काम इदमभिषिञ्चामि वोऽहमिन्द्रो मरुत्वान्त्स ददातु तन्मे ॥

( अ० वे० सं० ६।१२२।५ )

अत्र मन्त्रे योषितां लोकशास्त्रदृष्ट्या शुद्धत्वं पूतत्वञ्चोक्तम्, यज्ञसंयोगाद्यज्ञियत्वञ्चोक्तम् । ताश्च योग्येषु वरेषु प्रदत्ता वैवाहिकमन्त्रैरभिषिक्ताः परमेशानुग्रहेण सर्वपक्षीयकल्याणकामपूरण्यो भवन्ति ।

अभि त्वा मनुजातेन दधामि मम वाससा ।
यथाऽसो मम केवलो नान्यासां कीर्त्तयाश्च न ॥

( अ० वे० सं० ७।३७।१ )

अहं वदामि नेत् त्वं सभायामह त्वं वद ।
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्च न ॥

( अ० वे० सं० ७।३८।४ )

[ सायणभाष्यम्—स्वपतिं प्रति स्त्रिया वाक्यमेतत् । हे पते ! त्वा त्वाम् । मनुजातेन मन्त्रेण जातेन, मन्त्रपूर्वकं परिहितेन, मनोर्वा जातेन निष्पन्नेन मम वाससा वस्त्रेण । अभि दधामि बध्नामि । किमर्थं बन्धनम् ? तदाह—यथा येन प्रकारेण । मम । केवलः असाधारणः । असः भवेः । यथा चान्यासां नारीणाम् । नामधेयमिति शेषः । न कीर्तयाः, न कीर्तयेः नोच्चरेः । तथा बध्नामीति शेषः ।]

[ सायणभाष्यम्—पतिवशीकरणाय ओषधिं सम्प्रार्थ्य नारी पुनः स्वपतिं ब्रूते । हे पते ! अहं वदामि । त्वं नेत् नैव । वदेः । एवं पत्युः सर्वत्र वदननिषेधे प्राप्ते स्थानान्तरे तस्य वाग्व्यापारं दर्शयति । अहशब्दो विनिग्रहार्थीयः । त्वं तु सभायां विद्वत्समाजे वद ।]

अयमर्थः—हे पते ! यदा मत्समीपमागच्छसि, तदा अहमेव वदामि, त्वं तु मदुक्तमेव अनुवद, कदापि प्रतिकूलं मा वादीः । मद्व्यतिरिक्तस्थानेऽपि सभायामेव यथेच्छं वद, मान्यत्रेति ।

एतदेव प्रकारान्तरेणाह, यथा—हे पते ! त्वम् । इत् अवधारणे । ममैव केवलः असाधारणः असः भवेः, अन्यासां नारीणां नामधेयमपि न कीर्तयेः ।

[ सायणभाष्यम्—शुद्धाः पापरहिताः । पूता. जगत्पवित्रभूताः । योषितः स्त्रीरूपाः । यज्ञियाः यज्ञार्हाः । इमा अपः । ब्रह्मणां ब्राह्मणानाम्, चतुर्णाम् आर्षेयाणाम् ऋत्विजाम् । हस्तेषु प्रक्षालनेन । पृथक् । सादयामि अस्मदुपभोगार्थं स्थापयामि । यत्कामः यत्फलं कामयमानः । इदम् । इदानीम् । हे आपः । वः युष्मान् । अहम् । अभिषिञ्चामि अभितो निनयामि । मरुत्वान् मरुद्गणैर्युक्तः । स प्रसिद्धः । इन्द्रः । मे मह्यं तत् फलं ददातु प्रयच्छतु । ]

इत्यादिमन्त्रैः परस्पराव्यभिचारेण धर्मविवाहबन्धनवद् द्वयोर्दम्पत्योरैहिकामुष्मिकपुरुषार्थसाधकत्वमुक्तम् । धर्मनियन्त्रिते भोगे सन्तानबाहुल्यावरोधेनार्थिकं परिवारनियोजनफलं सम्पद्यते । दम्पत्योः सहयोगेन ब्रह्मचर्यनियन्त्रणाभ्यामेव तदुपपत्तेः । विधिविरुद्धषण्ढवन्ध्यत्वानौचित्यात् । शास्त्रप्रधानो विधिमनुसरन्निषिद्धं परिवर्जयन् जितेन्द्रियो ब्रह्मचारी वीतराग इहामुत्राभ्युदयं प्राप्यात्यन्तिमं मोक्षसुखमपि प्राप्नोति । तदुक्तम्—

एवमर्थञ्च कामञ्च धर्मञ्चोपाचरन्नरः ।
इहामुत्र च निःशल्यमत्यन्तसुखमश्नुते ॥

कामशास्त्रं लोकयात्रार्थं ब्रह्मचर्येण परेण समाधिना च वात्स्यायनो महर्षिर्निर्मितवान्, न रागार्थमिति तेनैवोक्तम्—

तदेतद्ब्रह्मचर्येण परेण च समाधिना।
विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः॥

धर्मनिरूपणम्

अथ धर्मः—

तत्र महर्षिः कणादः—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"। ऐहिकामुष्मिकाभ्युदयौ निःश्रेयसोऽपवर्गश्च येन प्राप्यन्ते, स धर्मः। केनैतल्लभ्यते ? किञ्च धर्मस्वरूपमिति जिज्ञासायां महर्षिर्जैमिनिराह—'चोदनालक्षणोऽर्थो धर्मः" चोदना प्रवर्त्तकं निवर्त्तकञ्च विधिनिषेधात्मकं वैदिकं वचनम्। तयैव धर्मो लक्ष्यते साक्षाद् बोध्यते, सैव लक्षणं प्रमाणं वा यस्मिन्, स धर्मः। तथा च "अग्निहोत्रं जुहुयात्, सन्ध्यामुपासीत' इत्यादिविधिविहितकर्त्तव्यताकमग्निहोत्रादिकं कर्म धर्मशब्देनाभिधीयते। "सुरां न पिबेत्, ब्राह्मणं न हन्यात्" इत्यादिनिषेधवाक्यैर्निषिद्धकर्त्तव्यताकं सुरापानादिकमधर्मशब्देनोच्यते। अकारप्रश्लेषेण 'अधर्म' इत्यपि सूत्रेणोच्यते। 'अर्थ' इति शब्देन शत्रुमरणफलकोऽनर्थभूतः श्येनादियागो न मुख्यो धर्म इत्यपि बोधितम्। तथा च वेदविहितत्वे सति प्रयोजनवदर्थो धर्मो भवति। मनुनाप्येतदेवोक्तम्—

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥
(मनु० २।१३)

'ताभ्यां धर्मो हि निर्बभौ' (मनु० २।१०)।
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥
(मनु० २।१२)

श्रुत्यादिचतुष्टयेन धर्मस्य बोधो भवतीत्येव तदर्थः। तत्र पूर्वपूर्वाविरोधेनैवोत्तरोत्तरेषां प्रामाण्यं बोध्यम्।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
(या० स्मृ० १।३)

इति चतुर्दशविद्यानां धर्मब्रह्मबोधन एव तात्पर्य्यम्। धर्मतन्मूलभूतशास्त्राभ्युपगन्तृत्वेनैव मानुष्यं भवति, आहारभयनिद्रादानां पशुसाधारणत्वात्। तथा चोक्तम्—

आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥
मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः॥ इति।

वाल्मीकीये च—

सत्यं सधर्मञ्च पराक्रमञ्च भूतानुकम्पां प्रियवादिताञ्च।
द्विजातिदेवातिथिपूजनञ्च पन्थानमाहुस्त्रिदिवस्य सन्तः॥
(वा० अ० का० १०६।३१)

धर्मैतत्ते पुरीषं तेन वर्धस्व चाप्यायस्व।
वर्धिषीमहि च वयमा चाप्यासिषीमहि॥
(वा० सं० ३८।२१)

हे धर्म! एतत् पयः। ते तव। पुरीषम् पृणाति पूरयतीति पुरीषं पूरयितृ अन्नम्। तेन पयसा। वर्धस्व वृद्धिं गच्छ। आप्यायस्व च अस्मानपि सर्वतो वृद्धिं प्रापय। भवत्प्रसादाद् वयम्। वर्धिषीमहि वृद्धिं प्राप्नुयाम। आप्यासिषीमहि च अस्मदीयपुत्रपश्वादीन् सर्वतो वृद्धान् करवाम।

भोग्यो भवदथो अन्नमदद्बहु।
यो देवमुत्तरावन्तमुपासातै सनातनम्॥
सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः।
अहोरात्रे प्रजायेते अन्यो अन्यस्य रूपयोः॥
(अ० वे० सं० १०।८।२२-२३)

व्यक्तेः समाजस्य राष्ट्रस्य विश्वेषां धारणपोषणसङ्घटनसामञ्जस्यसाम्मनस्यहेतुत्वेन धर्मस्य सर्वोपादेयता, तस्य प्रसादादेव मनुष्यः, अन्ये च अन्नवन्तोऽन्नादाश्च भवन्ति, सनातनोपासनेनैव सनातनपदप्राप्तिर्भवति। धर्मोऽयं सनातनोऽपि पुनर्णवो भवति।

धारणाद्धर्म उच्यते। तेषां समेषां विघटनवैमनस्यपतनादिहेतुत्वेन तद्विपरीतस्य पातनात् पातकत्वादधर्मत्वव्यपदेशः।

धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः॥
(म० भा० शा० १०६।११)

धर्म एव स्वशक्त्या प्रजा धारयते, सर्वस्यैव धर्मफलत्वात्। सर्वधारणपोषणानुगुणशक्तिसम्पन्नत्वादपि तस्य धर्मत्वम्।

"धर्मो विश्वस्य जगतः प्रतिष्ठा। लोके धर्मिष्ठं प्रजा उपसर्पन्ति।
धर्मेण पापमपनुदति। धर्मे सर्वं प्रतिष्ठितम्। तस्माद्धर्मं परमं वदन्ति॥"
(तै० आरण्य० १०।६३)

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥ (हितो०)
अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा।
अनुग्रहश्च दानञ्च सतां धर्मः सनातनः॥

अद्रोहेण परप्रातिकूल्यवर्जनेन मनसा वाचा कर्मणानुग्रहदानादिपरायणतायां सर्वधारणपोषणादिकमनायासेनैव सम्पद्यते। अत एव न परलोकार्थमेव, किन्त्विह लोकार्थमपि धर्मस्योपयोगः। तदुक्तम्—

धर्मादर्थः प्रभवति धर्मात् प्रभवति सुखम्।
धर्मेण लभ्यते सर्वं धर्मसारमिदं जगत्॥
(वाल्मी० रा० अर० का०)

परलोकार्थं तु धर्म एव मुख्यसुहृद् भवति—

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति॥

स च धर्मो वेदैकसमधिगम्यः। यथा चक्षुषैव रूपमधिगम्यते, नान्येन श्रोत्रादिना। आलोकादिसहकृतेन निर्दोषेण मनःसंयुक्तेन चक्षुषा रूपमुपलभ्यत एव, न नोपलभ्यते; तथैव वैदिकचोदनयैव धर्मो गम्यते, नान्येन। अधिकारिभिरुपक्रमोपसंहारादिभिर्लिङ्गैर्विचार्य्यमाणया चोदनया धर्मो गम्यत एव, न न गम्यते। पुराणधर्मशास्त्राद्यादयस्तु वेदमूलकत्वेनैव प्रामाण्यमर्हन्ति। श्रीभागवतेऽपि—

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्य्ययः।
वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम॥
(६।१।४०)

स्वयम्भूनारायणस्वरूपत्वेनापौरुषेयत्वं स्वतःप्रमाणत्वं कण्ठत एव निगदव्याख्यातम्। वेदमूलकत्वेनैवार्षपुराणधर्मशास्त्राङ्गादीनामपि प्रामाण्यम्, तत्रापि श्रौतस्मार्त्तकर्मणां प्रतिपादनात्। वेदेषु ब्राह्मणभागेन कर्मणां विधानम्, मन्त्रैः स्तोत्रशस्त्रादीनि द्रव्यदेवतास्मारणतत्स्तवनशंसनादीनि भवन्ति; वेदाङ्गैः श्रौतार्थावगमः, कल्पगृह्यसूत्रैः श्रौतस्मार्त्तकर्मसंस्कारादिबोधनम्, धर्मशास्त्रपुराणेतिहासैर्विविधवर्णाश्रमादिधर्मविधानम्।

गीतायां श्रीभगवतापि—अन्वयव्यतिरेकाभ्यां धर्मलक्षणस्य कर्त्तव्यकर्मणः शास्त्रापरपर्य्यायवेदमूलकत्वमेवोक्तम्—

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥
तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि॥
(श्री० भ० गी० १६।२३-२४)

यदि शास्त्रमन्तरापि स्वातन्त्र्येण प्रत्यक्षानुमानाभ्यां धर्मावगमः शक्यः स्यात् तदा नैवमवक्ष्यद् भगवान्। नहि भोजनक्षुन्निवृत्त्योः कार्य्यकारणभावो न प्रत्यक्षानुमानावगमः, शास्त्रमन्तराऽशक्यावगमो वा भवति। अबाधितानधिगतगन्तृत्वेनैव हि प्रमाणानां प्रामाण्यं भवति। नहि बुद्धेः स्वातन्त्र्येण प्रामाण्यम्, तथा सति भ्रान्तिरूपाया अपि बुद्धेः प्रामाण्यसम्भवात्। अतः प्रमाणेनैव बुद्धेः प्रामाण्यनिर्णयः। नह्यन्धसहस्रैरप्युक्तं शङ्खनैल्यं विश्वस्यते। तथैव वेदमन्तरा प्रमाणशतैरपि न धर्मनिर्णयः सम्भवति। धर्मब्रह्मज्ञापकत्वेनैव वेदस्य वेदत्वमपि। तदुक्तं भट्टपादेन—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥ इति।

द्वादशलक्षण्यां पूर्वमीमांसायां महर्षिणा जैमिनिना भाष्यवार्त्तिककाराभ्यां च धर्मस्वरूपं विस्तरेण मीमांसितम्। प्रथमेऽध्याये विध्यर्थवादमन्त्रस्मृतिनामधेयार्थकस्य शब्दराशेः प्रामाण्यम्, द्वितीये कर्मभेदोपोद्घातप्रमाणापवादप्रयोगभेदरूपोऽर्थः, तृतीये श्रुतिलिङ्गवाक्यादिविरोधप्रतिपत्तिकर्मानारभ्याधीतबहुप्रधानोपकारकप्रयाजादियाजमानचिन्तनम्, चतुर्थे प्रधानप्रयोजकत्वाप्रधानप्रयोजकत्वं जुहूपर्णतादिफलराजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता, पञ्चमे श्रुत्यादिक्रमतद्विशेषवृद्ध्यवर्धनप्राबल्यदौर्बल्यचिन्ता, षष्ठेऽधिकारितद्धर्म-

द्रव्यप्रतिनिध्यर्थलोपनप्रायश्चित्तसत्रदेयवह्निविचारः, सप्तमे प्रत्यक्षवचनातिदेशशेषनामलिङ्गातिदेशविचारः, अष्टमे स्पष्टास्पष्टप्रबललिङ्गातिदेशापवादविचारः, नवमे ऊहविचारारम्भसामोहमन्त्रोहतत्प्रसङ्गागतविचारः, दशमे—बाधहेतुद्वारलोपविस्तारबाधकारणकार्य्यैकत्वसमुच्चयग्रहादिसामप्रकीर्णनञर्थविचारः, एकादशे तन्त्रोपोद्घाततन्त्रावापतन्त्रप्रपञ्चनावापप्रपञ्चनचिन्तनानि। द्वादशे प्रसङ्गतन्त्रिनिर्णयसमुच्चयविकल्पविचारः।

तत्र ब्राह्मादिविवाहैर्यथाविधिगर्भाधानसीमन्तोन्नयनपुंसवनजातकर्मनामकरणान्नप्राशनचूडाकर्मादिसंस्कारैः संस्कृतः, उपनीतस्त्रैवर्णिको वेदाध्ययनेऽधिकारी भवति।

भगवताऽपि—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥

(श्री० भ० गी० ३।१०)

इति यज्ञानामनुष्ठानेन देवताप्यायनं देवैश्च वृष्ट्यादिप्रदानेन मनुष्यलोकाप्यायनमुक्तम्।

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥

(श्री० भ० गी० ३।१४)

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥

(श्री० भ० गी० ३।१५)

अत्राक्षरब्रह्मणः परमात्मनस्तदात्मकस्य वेदब्रह्मणः प्रादुर्भावः, ततश्च श्रौतस्मार्त्तकर्मणामुद्भवः, ततश्च तज्जन्यादृष्टरूपस्य यज्ञस्योद्भव उक्तः। ततश्च पर्जन्यः, ततोऽन्नम्, ततो भूतानि भवन्ति। यज्ञादीनि कर्माणि तत्तत्फलोद्देश्येन विहितान्यपि निष्कामस्य भगवदाराधनबुद्ध्यानुष्ठितानि सत्त्वशुद्धिविवेकवैराग्यविविदिषा श्रवणादिक्रमेण तत्त्वज्ञानमोक्षफलकान्यपि भवन्ति; "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृ० उ० ४।४।२२) इत्यादिश्रुतेः। तदुक्तं श्रीभागवतेऽपि—

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे।
नैष्कर्म्यसिद्धिं लभते रोचनार्था फलश्रुतिः॥

यस्तु वेदोक्तं कर्म नानुतिष्ठति, न स पाशविककामकर्मलक्षणं मृत्युमतिक्रान्तुं शक्नोति। तत एव स विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति पुनः पुनः। तथाहि—

नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः॥

वेदार्थानुष्ठानेन तु स्वाभाविकपाशविककामकर्मज्ञानातिक्रान्त्या उपासनया तत्त्वज्ञानेन वामृतत्वम्, देवतात्मभावम्, साक्षान्मोक्षं वा अश्नुते। "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते—(वा० सं० ४०।१४)। अविद्यया विद्याभिन्नविद्यासदृशकर्मण इत्यर्थः। तत्र ब्राह्मणानां यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाख्यानि षट् कर्माणि। तेषु याजनाध्यापनप्रतिग्रहाख्यानि जीविकार्थानि। क्षत्रविशोस्तु यजनाध्ययनदानानीति त्रीणि कर्माणि धर्मरूपाणि; क्षत्रस्य युद्धं प्रजापालनादि, विशां कृषिवाणिज्यगोपालनादि च जीविकारूपम्। शूद्रस्य द्विजसेवाधर्मो वृत्तिश्च, शिल्पादिकं च जीविकाद्यर्थम्। शिलोञ्छवृत्तिमादाय ब्राह्मणस्य चतुर्धा वृत्तिः।

ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥
सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते।
सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्जयेत्॥

(मनु० ४।४–६)

तथा श्रीमद्भागवते सप्तमे स्कन्धे एकादशेऽध्याये—

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।
सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथञ्चन॥
ऋतमुञ्छशीलं प्रोक्तममृतं यदयाचितम्।
मृतं तु नित्ययाच्ञा स्यात् प्रमृतं कर्षणं स्मृतम्॥
सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम्।

(१८–२०)

श्रीमद्भगवद्गीता-श्रीमद्भागवतादिषु ब्राह्मणादीनां शमादीन्यपि कर्माणि प्रतिपादितानि। तथाहि—

शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् ।
ज्ञानं दयाच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम् ॥
शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ।
ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥
देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥
शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया ।
अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥
( श्री० भा० ७।११।२१-२४ )

सेवा विविधशिल्पकारुकलादिकं शूद्रस्य जीविका । स्त्रीणाञ्च तत्रैव विशेष उक्तः—

स्त्रीणाञ्च पतिदेवानां तच्छुश्रूषानुकूलता ।
तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥
सम्मार्जनोपलेपाभ्यां गृहमण्डलवर्त्तनैः ।
स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥
कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ।
वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत् पतिम् ॥
संतुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ।
अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥
( श्री० भा० ७।११।२५-२८ )

तत्रैव श्रीभागवते त्रिंशल्लक्षणो भगवत्प्रसादहेतुः सर्वसाधारणो धर्म उक्तः, यदाश्रयेण सर्वोऽपि मनुष्यो हिन्दुर्भवति, लौकिकामुष्मिकाभ्युदयनिःश्रेयसभाक् च भवति ।

धर्ममूलं हि भगवान् सर्ववेदमयो हरिः ।
स्मृतं च तद्विदां राजन् येन चात्मा प्रसीदति ॥
सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यञ्च त्यागः स्वाध्याय आर्जवम् ॥
संतोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥

श्रवणं कीर्त्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥
( श्री० भा० ७।११।७–१२ )

भक्तिर्ब्रह्मज्ञानञ्च सर्वकर्मणां फलभूतं परमधर्मभूतञ्च, "अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्" ( या० स्मृ० १।८ ) इति स्मरणात् ।

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥
( श्री० भा० ६।३।२२ )

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययात्मा संप्रसीदति ॥
( श्री० भा० १।२।६ )

तथोक्तेः ।

स्वाध्यायेन ब्रह्मयज्ञः, श्राद्धतर्पणादिभिः पितृयज्ञः, होमादिभिर्देवयज्ञः, अतिथिसत्कारेण नृयज्ञः, वैश्वदेवकर्मणा च भूतयज्ञ इत्येते पञ्च महायज्ञा उच्यन्ते । गणेशाम्बिकाशिवविष्णुरामकृष्णनृसिंहसूर्यादिदेवानां वैदिकैस्तान्त्रिकैश्च मन्दिरप्रतिमादिसंस्कारादिभिः पञ्चषोडशचतुष्षष्ट्यादिराजोपचारदेवोपचारादिभिः पूजनञ्चापि धर्म इत्यपि श्रीभागवते ११।२७ अध्याये वर्णितम् । यत्तूक्तं परमेश्वरस्यावतारो मूर्तिश्च न संभवतीति, तन्न; भगवत एव सर्वरूपेण प्रादुर्भावात् ।

तथाहि "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" ( शु० यजु० ३१।३ ) इति मन्त्रेण स्पष्टं विज्ञायते यत् परमेश्वरस्यैकचरण एवेदं सर्वमनन्तकोटिब्रह्माण्डात्मकं जगत्, परमेश्वरस्य त्रिपादमृतं मर्त्यमृत्युसम्बन्धातीतम् । त्रिपादित्युपलक्षणं ब्रह्मणः कल्पितप्रदेशवत्यल्पांशे मायातत्कार्य्यात्मकं विश्वं भवति । ततोऽपरिमितमनन्तमपरिच्छिन्नपरमात्मस्वरूपं निर्मायमेव ।

"स भूमिं सर्वतस्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम्" इति (शु० यजुः० ३१।१) पुरुषसूक्तेऽपि तदेवोक्तम् । स पुरुषः ब्रह्माण्डात्मिकां मायामयीं भूमिं सर्वतस्पृत्वा संस्पृश्याच्छाद्य ततोऽपि दशाङ्गुलोपलक्षितमपरिमितं महापरिमाणं देशमतिक्रम्य तिष्ठति । "विकारावर्त्ति च तथाहि

स्थितिमाह" ( ब्र० सू० ४।४।१६ ) प्रकृतितद्विकाराणां तदेकदेशस्थितत्वात्। सोपाधिकस्य ब्रह्मणः सर्वं जगदेव शरीरं सर्वप्रपञ्चरूपेण तस्यैवाभिव्यज्यमानत्वात्।

"तस्माद्वा एतस्मादात्मनः आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात् पुरुषः। स वा एष पुरुषोऽन्नरसमयः" ( तै० उ० २।१ ) इति परेशस्यैवाकाशादिरूपेणाभिव्यक्तिरुक्ता। जलं यथा तरङ्गाद्यात्मना, मृत्तिका घटाद्यात्मना, सुवर्णं वा कुण्डलाद्यात्मना परिणमते; तथैव परमेश्वरोऽपि स्वीयमायाशक्त्या आकाशाद्यात्मना विवर्त्तते। यथा स्वविकारेषु जलमृत्तिकादयो व्यापका भवन्ति, तथैव भगवानपि समष्टि-व्यष्टि-प्रपञ्चे व्यापकोऽवतिष्ठते। तत एव सर्वं विश्वमेव परमेश्वरस्य शरीरम्। "यः पृथिव्यां तिष्ठत्, पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयत्येषत आत्माऽन्तर्याम्यमृतः। ३। योऽप्सु, योऽग्नौ, यो वायौ, य आकाशे, यः सर्वभूतेषु" ( बृ० उ० ३।७।३–२२ )।

अन्तर्यामिब्राह्मणे परमेश्वरस्य सर्वप्रपञ्चशरीरत्वं सर्वान्तर्यामित्व च स्पष्टमुक्तम्। यथा निराकाराणामपि जीवानां पशुमनुष्यादिशरीरत्वं तन्नियामकत्वमिति तद्वत्। एतेन निराकारस्य परमेश्वरस्य शरीरत्वं न संभवतीत्यपास्तम्।

यः सर्वकर्मफलदाता अनन्तानन्तजीवेभ्योऽनन्तानि विलक्षणानि शरीराणि निर्माय प्रयच्छति, स स्वस्य कृते शरीरं निर्मातुं न शक्नोतीति रिक्तं वचः।

न च शरीरस्य कर्माशयजन्यत्वदर्शनेन परमेश्वरशरीरस्यापि तथात्वे तस्यापि कर्माशयसंसृष्टत्वेन क्लेशकर्मविपाकाशया संस्पृष्टत्वव्याकोप इति वाच्यम्, अप्रयोजकत्वात्। कर्माशयाभावेऽपि तस्य शरीरित्वे बाधाभावात्। जीवानां तु शरीरावच्छेदेनैव ज्ञानेच्छासुखदुःखादिभोगनियमात् तच्छरीरादीनां कर्मजन्यत्वनियमो युक्तः, न परेशस्य; तदन्तरापि तस्य ज्ञानादिवच्छरीरसत्त्वेऽपि बाधाभावात्। यथा पृथिव्यादीनि जीवादृष्टजन्यान्यपि परमेश्वरनियम्यत्वेन तच्छरीराणि भवन्ति, तथैव रामकृष्णादिशरीराणि जीवादृष्टनिमित्तकान्यपि भवन्तीत्यन्ये। यथा जीवानां हितायैव पृथिव्यादीनि शरीराणि निर्माय जीवानामैहिकामुष्मिककार्याणि निर्वर्तयति भगवान्, तथैव परमहंसानाममलात्मनां मुनीनां भक्तियोगविधानायाचिन्त्याद्भुतसत्यज्ञानानन्दैकरसश्रीरामकृष्णश्रीविग्रहादिरूपेणापि भगवान् स्वयमेवाविर्भवतीति तु सिद्धान्तः।

"सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः। अस्पृष्टभूरिमाहात्म्या०" (श्री०भा० १०।१४।५४)।

सकृद्यदङ्गप्रतिमान्तराहिता मनोमयी भागवतीं ददौ गतिम्।
स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोऽन्तर्गतो हि किं पुनः॥

( श्री० भा० १०।१२।३९ )

इत्यादिवचनेभ्यः। 'नमो हिरण्यबाहवे' इत्यादिवेदवचनविरुद्धत्वात् परेशस्य देहराहित्यसाधकमनुमानम्, नरशिरःकपालं शुचि प्राण्यङ्गत्वात्, शंखशुक्तिवदित्यादिवदनुमानाभासमेव।

भगवानेव विश्वात्मनाविर्भवति, तदप्युक्तम्—

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥

( शु० यजु० ३२।१ )

इति मन्त्रे तस्यैवाग्न्यादित्यवायुशशिशुक्रप्रजापत्यादिरूपत्वमुक्तम्। विकारावर्तिनो भगवतो निराकारत्वं मनोवचनातीतत्वं विकारवर्त्तिनोऽपि जीवानामिव स्वरूपेण निराकारत्वेऽपि प्रपञ्चाकारवत्त्वेन साकारत्वमपि संगच्छते। तत्रापि मूर्त्तामूर्त्तभेदेन भगवतो रूपद्वैविध्यमुक्तम्—

"द्वेवाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च"
"तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्च"
"अथामूर्त्तं वायुश्चान्तरिक्षं च"

( बृ० आ० २।३।१-३ )

"पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्" ( शु० यजु० ३१।२ )।

"एषो ह देवः प्रदिशोऽनुसर्वाः पूर्वो ह जातः स उ गर्भे अन्तः।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः॥

( शु० यजु० ३२।४ )

एष देवः सर्वाः दिशः प्रदिशश्चाभिलक्ष्य जातः। स एवास्य सर्वस्यान्तर्गर्भेऽपि विद्यते। स एव पूर्वकालेऽनेकरामकृष्णादिरूपेण जातः पुरस्ताच्च जनिष्यमाणः।

उव्वटभाष्यम्—"इदानीं स्वरूपतः कथयति। एष एव देवः प्रदिशो दिशश्च सर्वा अनुव्याप्य वर्तते तिर्यगूर्ध्वमधश्चेति। पूर्वो ह जातः अनादिनिधनः सम्भूतः। स उ गर्भे अन्तः स एव च मातुरुदरे अन्तर्गर्भे व्यवतिष्ठते। स एव च जातः स एव च जनिष्यमाणः। तदुक्तम्—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति प्रतिपदार्थमञ्जनः। हे जनाः तिष्ठति सर्वतोमुखः सर्वतोऽक्षिशिरोग्रीवपाणिपादः तिष्ठति। अचिन्त्यशक्तिरित्यर्थः।

महीधरभाष्ये विशेषः—प्रत्यङ्, प्रतिपदार्थमञ्चति प्रत्यङ्, सर्वतोमुखः सर्वतो मुखाद्यवयवा यस्य।

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा॥

(शु० यजु० ३१।१९)

प्रजापतिः परमेश्वरः हिरण्यगर्भो वा अन्तर्गर्भे अण्डे कौशल्यादिगर्भोदरे वा अजायमानोऽपि बहुधा रामकृष्णनृसिंहादिरूपेण विजायते। धीरा विवेकिन एव तस्य योनिं स्वरूपं हेतुं भक्तानुग्रहादिलक्षणं वा पश्यन्ति, तस्मिन्नेव विश्वानि सर्वाणि भुवनानि तस्थुः स्थितानि।

अत्र महीधरभाष्यम्—"यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति। यश्चाजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते। धीराः ब्रह्मविदस्तस्य प्रजापतेर्योनिं स्थानं स्वरूपं परिपश्यन्ति 'अहं ब्रह्मास्मि' इति जानन्ति। विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि। सर्वं तदात्मकमेवेत्यर्थः।"

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश॥

(ऋ० सं० ६।४७।१८)

अत्र सायणभाष्यम्—'अयमिन्द्रः प्रतिरूपः रूपाणां प्रतिनिधिः सन्। रूपं रूपं तत्तदग्न्यादिदेवतास्वरूपम्। बभूव प्राप्नोति। इन्द्रः स्वमाहात्म्येन तत्तद्देवतारूपो भवतीत्यर्थः। अस्य चेन्द्रस्य। तत् प्राप्तमग्न्यादिदेवतास्वरूपम्। प्रतिचक्षणाय प्रतिनियतदर्शनाय, अयमग्निरयं विष्णुरयं रुद्र इत्येवमसङ्कीर्णदर्शनाय भवति, अपि चायम् इन्द्रो मायाभिः ज्ञाननामैतद् ज्ञानैः आत्मीयैः सङ्कल्पैः पुरुरूपः बहुविधशरीरः सन्। ईयते बहून् यजमानान् गच्छति।

ननु द्वावेवास्याश्वावेकश्च रथः, कथमनेन युगपद्बहून् गच्छतीत्याह—अस्य इन्द्रस्य। हरयः अश्वाः। युक्ताः रथे योजिताः। शता दशसहस्रसंख्याका अपरिमिताः सन्ति। हि यस्मादेवं तस्माद्बहुशरीराणि स्वीकृत्य युगपद् हविष्मतो यजमानान् गच्छतीत्यर्थः।

अन्ये मन्यन्ते—इन्द्रः परमात्मा। स चाकाशवत् सर्वगतः सदानन्दरूपः। स एव उपाधिभिरन्तःकरणैः प्रतिशरीरमवच्छिन्नः सन् जीवात्मेति व्यपदिश्यते। स एवानादिमाया-

शक्तिभिः वियदादिजगदात्मना विवर्तते शब्दादिविषयहरणशीला इन्द्रियवृत्तयश्च तेनैव सम्बद्धाः। एतत्सर्वं तस्य परमात्मनो यद्वास्तवं रूपं तस्य दर्शनायेति।

अयमर्थोऽनया प्रतिपाद्यते—रूपं रूपम्। रूप्यते इति रूपं शरीरादि। प्रतिशरीरं चिद्रूपः सर्वगतः परमात्मा प्रतिरूपः प्रतिबिम्बरूपः सन् सर्वाणि शरीराणि बभूव, प्राप्नोत्। तच्च प्राप्तं प्रतिबिम्बरूपमस्य परमात्मनः प्रतिचक्षणाय प्रतिनियताकारस्य दर्शनाय भवति। स चेन्द्रः परमेश्वरो मायाभिर्मायाशक्तिभिः पुरुरूपो वियदादिभिर्बहुविधरूपैरुपेतः सन् ईयते चेष्टते। एतदप्यस्य परमात्मनः प्रतिचक्षणाय भवति। अस्य च दशशता सहस्रसंख्याका हरयः इन्द्रियवृत्तयः युक्ता विषयग्रहणायोद्युक्ताः सन्ति। तदप्यस्य वास्तवरूपस्य दर्शनाय भवतीति। एवं स्थूलसूक्ष्मशरीरयोर्वियदादिमहाप्रपञ्चस्य च तत्त्वज्ञानहेतुत्वमन्यया प्रत्यपादीति।"

अनेन मन्त्रेण परमेश्वरस्य मायाशक्तिभिर्नानारूपता स्पष्टं विज्ञायते।

"ब्रह्म ह देवेभ्यो विजिग्ये। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १४।१। तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत। किमिदं यक्षमिति ॥ १५।२। तेऽग्निमब्रुवन्। जातवेद एतद्विजानीहि ····· तदभ्यद्रवत्तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति। १७।४। तस्मिंस्त्वयि किं वीर्य्यमित्यपीदं सर्वं दहेयम्। तस्मै तृणं निदधावेतद् दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुम्। स तत एव निववृते अथ वायुमब्रुवन् ···सर्वजवेन तन्न शशाकादातुं स तत एव निववृते ·····।" इति तलवकारीयकेनोपनिषदि स्पष्टं ब्रह्मणोऽप्रधृष्य महामहिमयक्षरूपेणाविर्भावः श्रुतः। तेनाग्न्यादीनां संवादस्तस्यैव समेषां ज्ञानक्रियाशक्तिकेन्द्रत्वमुक्तम्।

"मनवे ह वै प्रातः। अवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवम्। तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे। सहास्मै वा। चमुवादबिभृहि मा पारयिष्यामि त्वा" इति (शत० ब्रा०, १ का०, ८ अ० १ ब्राह्म०, १ ख०)।

अत्र मनोः पाणी कश्चन विलक्षणो मत्स्य आपेदे। मां बिभृहि त्वामहं पारयिष्यामि महाजलौघात्। मनुस्तदुक्तरीत्या कुम्भ्यां सरस्यां महानद्यां निधाय चोत्तरोत्तरमतिमात्रं वर्धमानं मत्स्यं पालयामास। नैमित्तिकप्रलयमहोदधेस्तदादेशानुसारेण क्षितिमयीं महानौकामुपलभ्य तदीयशृङ्गे नौपाशं प्रतिमुमोच। स उत्तरं गिरिमतिदुद्राव।

"स होवाच अपीपरम्—वै त्वा वृक्षे नावं प्रति बध्नीष्व, तं तु त्वामागिरौ सन्तमुदकमन्तश्छैत्सीत्, यावत् यावदुदकं समवायात्तावत्तावदन्ववसर्पासि इति, सह तावत्तावदेवात्ववससर्प। तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणम्, इति। ओघो ह ताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे।" (श० ब्रा० १।८।१।६)।

अत्रायं लोकोत्तरः शक्तिशाली विशिष्टज्ञानक्रियाशक्तिर्मत्स्यः परमेश्वर एव।

पुराणेऽस्यैव मत्स्यावताररूपेण वर्णनं विद्यते।

ब्रह्म ज्येष्ठा संभृता वीर्य्याणि ब्रह्माग्रे ज्येष्ठं दिवमाततान।
भूतानां ब्रह्मा प्रथमोत यज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः॥
(अथर्व० १९।२३।३०)

अनयर्चा पूर्वमन्त्रप्रतिपादितस्य ब्रह्मणः सर्वाभिभावकत्वं प्रतिपाद्यते—

ब्रह्म परमात्मैव ज्येष्ठं पूर्वजं धारकं येषां तानि सर्वाणि वीर्य्याणि ब्रह्मणैव संभृता, संभृतानि अग्रे सृष्ट्यादौ ब्रह्मैव ज्येष्ठम् उत्कृष्टं दिवमाततान। भूतानां मध्ये प्रथमं पूर्वं तदेव ब्रह्म, ब्रह्म चतुर्मुखो भूत्वा जज्ञे प्रादुर्बभूव। तेन ब्रह्मणा स्पर्धितुं कः क्षमः? न कोऽपीत्यर्थः। तदेव मनुरप्याह—

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥
(मनु० १।९)

मुण्डकोपनिषद्यपि—

ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता। (१।१)
वराहेण पृथिवी संविदाना सूकराय विजिहीते मृगाय।
(अथर्व० का० १२।१।४८)

अत्र वराहरूपधारिणा परमेश्वरेण पृथिवी संविदाना।
उद्धृतासि वराहेण कृष्णेन शतबाहुना॥
(तै० आ० १०।१।८)

अत्र भूमिर्वराहेण कृष्णेनोद्धृतेति स्पष्टम्।

"अथ वराहविहतम्। इयत्यग्र आसीदितीयती ह वा इयमग्रे पृथिव्या स। प्रादेशमात्री। तामेमूष इति वराह उज्जघान। सोऽस्याः पतिः प्रजापतिः।" (श०ब्रा० १४।१।२।११)।

अत्र मन्त्रेषु ब्राह्मणेषु च परमेश्वरस्य वराहरूपधारित्वं स्पष्टम्।

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाꣳसुरे स्वाहा ॥
( शु० यजु० ५।१५ )

इदं परिदृश्यमानं विश्वं विष्णुर्विचक्रमे । विक्रान्तवान् त्रेधा पदं निदधे । सर्वमस्य विष्णोः पांसुरे चरणे स्थितम् ।

मध्ये वामनमासीनं विश्वेदेवा उपासते ।
( कठोपनिषद् २।२।३ )

"वामनो ह विष्णुरास" ( श० ब्रा० १।२।५।५ ) ।

इति मन्त्रैर्वामनावतारसिद्धिः ।

ननु—

सपर्य्यागाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥
( शु० यजु० ४०।८ )

इति मन्त्रेण परमेशस्याकायत्वमेवोक्तमिति चेत्, न; अकायमित्यस्य देहनिषेधेन तन्मूलकव्रणादिनिषेधसिद्धया अव्रणास्नाविरादिविशेषणासङ्गत्या चिनोति सुखदुःखादिकमनेनेति व्युत्पत्त्या अकायमित्यनेन कर्माशयमूलकप्राकृततनुराहित्यबोध एव तात्पर्य्यात् स्वेच्छातनुसत्त्वे बाधाभावाच्च ।

न चामूर्तित्वान्न सम्भवति मूर्तिपूजा भगवत्पूजेति वाच्यम्, प्रतिज्ञामात्रेण तदसिद्धेः । मूर्तिमत्त्वे तु बहूनि प्रमाणनि सन्त्येव ।

लोके रेखाभेदमात्रं संख्यासर्वस्वं शून्यमाचक्षते । यदा शून्यस्याप्याकारः कल्प्यते, तदा कथं न परमेश्वरस्याकारकल्पनं स्यात् ? यथा वा निराकारस्यापि समयस्य घटीयन्त्रेणाकारकल्पनेन तज्ज्ञानं संपाद्यते, तथैव प्रकृतेऽपि ज्ञेयम् ।

अभावस्य निराकारत्वेऽपि सप्रतियोगिकत्वनियमात् तत्रापि साकारत्वमेवायाति ।

ननु च ब्रह्मणो निराकारत्वं श्रूयत इति चेत्, न; साकारत्वस्यापि श्रवणाविशेषात् । ननु चैकत्र कथं विरुद्धधर्मसन्निवेशः संभवतीति । न च—

श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ महर्षिभिः ॥

इति रीत्या तदुभयोः सत्त्वोपपत्तिरिति वाच्यम्; षोडशिग्रहणाग्रहणक्रियासु विकल्पसम्भवेऽपि वस्तुनि विकल्पायोगादिति चेत्, न। परमेश्वरस्य साकारत्वेऽपि निराकारत्वसिद्धेः। न च सपर्य्यगाच्छुक्रमकायमव्रणमिति तस्याकायत्वप्रतिपादनम्, तस्य जीवपरत्वोपपत्तेः।

तथाहि—

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ ( वा० सं० ४०।७ )

इति तत्त्वविदो जीवस्यैवात्राकायत्वमुच्यते, सन्निकृष्टत्वात्। स एव सपदेन ग्राह्यः।

यः पुरुषः शाश्वतीभ्य समाभ्यो मिथ्यादर्शनेन सांसारिकदुःखजातमनुभूयार्थान् मनोऽर्थान् कदाहं मानुषजन्माप्नुयाम्, कदा च सुकृतं कर्म कुर्य्याम्, कदा भगवन्तमाराध्य तदनुग्रहात् सम्यग्दर्शनमापद्येयम्, कदा चापाद्य सम्यग्ज्ञानं संसारबन्धनाद् दुःखान्मुच्येय इत्येवंप्रकारान् याथातथ्यतो यथार्थरूपेण दृढप्रतिज्ञातो व्यदधात्, अकरोत् स भगवत्प्रसादेन प्राप्तसम्यग्दर्शनोऽकायं यथा स्यात्तथा अव्रणं यथा स्यात्, अस्नाविरं यथा स्यात्तथाऽपापं शुद्धं यथा स्यात्तथा पर्य्यगात् संसारबन्धनाद् दुःखात् परि उपरि स्वाराज्यपदवीमगात्। स एव कविर्मनीषी भवति।

"न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति॥"
( छा० उ० ८।१२।१ )

ततो नायं मन्त्रः परेशस्याकायत्वसाधनक्षमः।

ननु 'सोऽकायमगात्' इत्यन्वयः किं न स्यात्, अकायमिति कर्मणि द्वितीया भगवद्विशेषणम्, न क्रियाविशेषणमिति चेत्, न; कल्पनागौरवात्।

किञ्च, मन्त्रस्य परमेश्वरपरत्वेन तस्याकायत्वेऽपि न सांसिद्धिकीं सांकल्पिकीं प्राकृतिकीं मूर्तिमपाकुरुते मन्त्रः, किन्तु पाञ्चभौतिकीं कर्मोपचितामेव मूर्तिं निराकरोति। तन्निषेधे च न काचिद्धानिः।

नन्वकायमिति मूर्त्तिसामान्यं प्रतिषिद्ध्यते, तेन न काचिन्मूर्त्तिरवशिष्यते। नहि भागतः प्रतिषेध इति चेत्तथापि प्रतिबन्धकेऽस्त्येव, तन्मन्तव्यम्। दृश्यते हि भागतोऽपि प्रतिषेधः, तथा हि सति प्रतिबन्धके दाहकोऽपि वह्निर्न दहतीति। अत एव 'अनुदरा कन्या' इत्यत्र नोदरमात्रनिषेधः, किन्तु स्थूलोदरस्यैवेति। तथा च प्रतिबन्धकं शास्त्रं "नमस्ते रुद्र मन्यव उतोत इषवे नमः। बाहुभ्यामुत ते नमः" ( वा० सं० १६।१ ),

"या ते रुद्र शिवा तनूरघोरा पापकाशिनी।" ( वा० सं० १६।२ ), "नमो हिरण्यबाहवे" ( वा० सं० १६।१७ ) इति वचनबलाद् भौतिकमेव विग्रहं निषेधति, नाभौतिकम्। अतः परमेश्वरस्याभौतिको विग्रहः सिद्ध्यत्येव।

ननु 'अकायम्' इत्यनेन सूक्ष्मशरीरनिषेधः, अव्रणमस्नाविरमिति स्थूलशरीरनिषेधः, शुद्धमिति कारणदेहनिरास इति न विशेषणनैरर्थक्यमिति चेत्, सत्यम्; तथात्वेऽपि पूर्वोक्तवचनैस्तर्कैश्च परमेश्वरस्य साकारत्वदेहवत्त्वोक्त्या शरीरत्रयराहित्येऽपि चतुर्थस्य लीलादिव्यदेहस्य सिद्धौ बाधाभावात्। नहि शास्त्रप्राप्तस्यात्यन्तबाधः संभवति। अत एव षोडशिग्रहणाग्रहणविकल्प उपपद्यते। इह तु पारमार्थिकत्वेन परमेश्वरस्य कर्मादिसापेक्षदेहत्रयशून्यत्वेऽपि भक्तानुग्रहार्थदिव्यलीलातनुत्वेन क्षत्यभावात् परिभूः स्वयंभूरित्यादिविशेषणैरन्यानपेक्षपरितो भवनस्यासिद्धेश्च।

ननु परि उपरि भवतीति परिभूरित्युक्त्या तस्य सप्रपञ्चाधिकसत्ताकत्वमेव बोध्यते, नोत्पत्तिः। तत एव यस्योपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयंभूरिति रीत्याधिष्ठानभूतस्य तस्यैव सर्वरूपता बोध्यत इति, तदपि सत्यम्। तथापि सर्वार्थविधायित्वेन मायाभूमौ सर्वरूपत्वेन भवने बाधाभावात्। तत एव मनुरप्याह—

ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः॥

( मनु० १।६ )

स्वयंभूरव्यक्तो भगवानिदम्।

अयमर्थः—ततः प्रलयावसानानन्तरं स्वयंभूः परमात्मा स्वयं भवति, स्वेच्छया शरीर परिग्रहं करोति, न त्वितरजीववत्कर्मायत्तदेहः। तथा च श्रुतिः (छा० उ० ७।२६।२) "स एकधा भवति द्विधा भवति।" भगवानैश्वर्यादिसम्पन्नः। अव्यक्तो बाह्यकरणागोचरः। योगाभ्यासावसेय इति यावत्। इदं महाभूतादि। आकाशादीनि महाभूतानि। आदिग्रहणान्महदादीनि च व्यञ्जयन् अव्यक्तावस्थं प्रथमं सूक्ष्मरूपेण, ततः स्थूलरूपेण प्रकाशयन्। वृत्तौजाः वृत्तमप्रतिहतमोजः सृष्टिसामर्थ्यं यस्य स तथा। तमोनुदः प्रकृतिप्रेरकः।

अत एव "तदेवाग्निस्तदादित्यः" ( वा० सं० ३२।१ ) इत्यादिमन्त्रेण तस्यैवादित्यादिरूपत्वमुक्तम्, अन्यथा विरोधापत्तेः।

एवमेव—

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत्॥

( श्वेताश्व० अ० ३।१७ )

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्॥

( श्वेताश्व० अ० ३।१९ )

इत्यादिमन्त्रैः परमेश्वरस्य निराकारत्वमदेहत्वञ्च सिद्धयति। "एषो ह देव" ( वा० सं० ३२।४ ) इत्यादिमन्त्रैश्च तस्य साकारत्वादिकमपि सिद्धयत्येव।

एवमेव—

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥

( मुण्डक० १।१।६ )

एतेनेदमायाति—यथा तरङ्गाद्यात्मना अनभिव्यक्तः सिन्धुर्निस्तरङ्गो भवति, तथैव प्रपञ्चानभिव्यक्तिदशायां ब्रह्मापि निष्प्रपञ्चं भवति, तथैव च कालान्तरे जलस्य सतरङ्गत्ववत् सृष्टिसमये ब्रह्मणोऽपि सप्रपञ्चत्वं साकारत्वञ्च सूपपन्नम्। विकारावर्तिनश्च भगवतः प्रपञ्चातीतस्यापि स्वतोऽगुणाकारस्यापि लीलया अचिन्त्यानन्तकल्याणगुणगणास्पदत्वं दिव्यविग्रहवत्त्वञ्च। अत एव—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे॥

( श्री० भ० गी० ४।७-८)

इति गीतयापि भगवदवतारः समर्थ्यते।

यत्तु "सर्वव्यापकस्य सर्वकरणसमर्थस्य रावणादिवधार्थमवतारो न युज्यते। तस्य सर्वव्यापकत्वेन तेषां शरीरान्तर्गतत्वेन स्वेच्छया मर्मच्छेदेन तन्नाशसमर्थत्वात्। न हीच्छामात्रेण विश्वसंहारकस्य रावणादिनाशे काठिन्यं समस्ति, तदर्थं जननमरणाङ्गीकारानुपपत्तेः। तदाज्ञानुसारेण भक्तजनानामपि कल्याणसंभवेन न तदर्थमपि देहधारणं युक्तम्। आकाशस्य सृष्टि-

मेयत्वगर्भवासित्वादिवदीश्वरस्य तदनुपपत्तेः। सप्रयोजनस्य परिच्छिन्नस्यैव गमनागमनादिकं संभवति, नापरिच्छिन्नस्य प्रयोजनस्य परिमितेषु हि जरामरणरोगदोषादयो नापरिमिते भगवति। शरीरित्वे तस्यान्येन शरीरं निर्मातव्यम्, स्वेनैव निर्मातव्ये निर्माणात् पूर्वं निराकारत्वमेषितव्यम्, तस्य 'अजः, एकपादः' ( ऋ० सं० २।३१।६ ) इत्यादिवचनैस्तस्याजत्वमुक्तमेवेति तत्तुच्छम्, अप्रयोजकत्वात्। पूर्वोक्तश्रुतिभिः परमेश्वरस्य सर्वसमर्थस्य सर्वव्यापकस्यैव स्वेच्छयावतरणसंभवात्, असमर्थस्य तदसंभवाच्च। न च निष्प्रयोजनत्वात् तदसंभवः, धर्मग्लान्यधर्माभ्युत्थाननिवृत्ति-धर्मसंस्थापन-वैदिकसम्प्रदाय-प्रवर्तन-पालन-शिक्षण-भजनीयस्वरूपोपस्थापन-भक्तिविधानादिप्रयोजनस्य संभवदुक्तिकत्वात्।

एतेन 'परमेश्वरो नावतरति, निष्प्रयोजनत्वात्' इत्यप्यपास्तम्, हेत्वसिद्धेः। श्रुतिस्मृतिभिस्तत्सिद्धत्वेन बाधाच्च, विश्वस्रष्टृत्वेन च तस्य कामानुमानात्। न चाकामस्य काचिदपि क्रिया संभवति, "अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।" (मनु० २।४) इति मनुवचनात्। "सोऽकामयत" ( तै० उ० २।६ ) इति श्रुतिविरोधाच्च।

"परमेश्वरो विश्वस्य रूपं रूपं प्रतिरूपो भवति प्रत्येकस्यादर्शरूपो भवति। स चादर्शरूपः प्रतिचक्षणाय दर्शनाय भवति। स्वशक्तिभिर्बहूनि रूपाणि गृह्णाति। अस्य गमनसाधने रथे दशशता सहस्रसंख्याका अश्वा नियुज्यन्ते। रूपं रूपं मघवा इत्यत्र निरुक्तं यद्यत् कामयते तत्तद्देवता भवति। यावन्ति कानिचिद्रूपाणि मघवा इन्द्रो भवितुमिच्छति तानि सर्वाणि अप्रतिबन्धेन बोभवीति पुनः पुनर्भवति कथं मायाः कृण्वानः इदं गवामिति, एवं तन्व स्वां स्वां तनुं तत्तदाकृत्या अनेकविधां विकुर्वाणः" ( निरुक्तदैवतकाण्डे १०।१७।१ )।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥
( ऋ० सं० १।१६४।४६ )

[सायणभाष्यम्–अमुमादित्यमैश्वर्यविशिष्टम्, इन्द्रम्। आहुः। तथा मित्रं प्रमीतेर्मरणात् त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः। वरुणं पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः। तथा अग्निम् अङ्गनादिगुणविशिष्टम्, एतन्नामकमाहुः। अथो अपि च अयमेव। दिव्यः दिवि भवः। सुपर्णः सुपतनः। गरुत्मान् गरणवान् पक्षवान् वा एतन्नामकीयः पक्ष्यस्ति, सः अप्ययमेव। कथमेकस्य नानात्वमित्युच्यते। अमुमेवादित्यम् एकम् एव वस्तुतः सन्तम्। विप्राः मेधाविनो देवतातत्त्वविदः। बहुधा। वदन्ति तत्तत्कार्यकारणेन इन्द्राद्यात्मानं वदन्ति।

एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते, इत्युक्तत्वात्। किञ्च तमेव वृष्ट्यादिकारणं वैद्युताग्निम्। यमं नियन्तारम्। मातरिश्वानम् अन्तरिक्षे श्वसन्तं वायुम्। आहुः। सूयस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति। अत्र ये केचित् 'अग्निः सर्वा देवताः' (ऐ० ब्रा०- २।३) इत्यादिश्रुतितोऽयमेवाग्निरुत्तरेऽपि ज्योतिषी इति मत्वा अग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति, तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः। तमग्निमुद्दिश्य इन्द्राद्यात्मकत्वकथनम्। अयं मन्त्रो निरुक्ते एवं व्याख्यातः—

"इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति। इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्। दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा" (नि० ७।१८) इति।

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।
त्वं जीर्णो दण्डेन वञ्चसि जातो भवसि विश्वतोमुखः।
(अथर्व० १०।८।२७)

अत्र मोहिनी-राम-कृष्ण-वामनादिरूपेण प्रादुर्भाव उक्तः।

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृञ्जेहं कविरुशना पश्यतामा॥
(ऋ० सं० ४।२६।१)

अत्रापि 'अहं' शब्देन परमेश्वरो गृह्यते द्वैतवादिभिः, तेन तत्तन्मन्वादिरूपेणापि तस्यावतारः सिद्ध्यति।

'आपो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुते पुरूणि।
(अथर्व० सं० ५।१।२)

'अहं जनिभ्यो अपरीषु पुत्रान्।'
(ऋ० वे० १०।१८३।३)

जनिभ्यः जायाभ्यः। अपरीषु अन्यास्वपि स्त्रीषु। पुत्रान। अहमजनयम्, जनयामि मत्साध्येन यागेन सर्वस्योत्पत्तेरहं सर्वजननहेतुर्भवामीत्यर्थः।

केषाञ्चिद् (सातवलेकर) रीत्या अहमीश्वरप्रजनक्रियाभिः स्वस्त्रीषु पुत्रानुत्पादयामि। "अन्तरतः कूर्मभूतः पर्य्यन्तं तमब्रवीत्" (तैत्ति० आ० १।२३।३)।

"वज्रनखाय विद्महे नारसिंहः प्रचोदयात्" (तै० आ० १।११।३१)

'इति होवाच रामो मार्गवेयः' (ऐ० ब्रा० ३५।१)।

"रुशद्भिर्वर्णैरभिराममस्थात्" ( सा०वे० उत्तरः १५।२।१।३ )।

"कृष्णं त एमा रुशतः, अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रति रूपो बभूव" ( कठोपनि० २।२।६ )।

"कृष्णाय देवकीपुत्राय" ( छान्दोग्य० ३।१७।६ )।

"अजोऽपि सन्नव्ययात्मा" ( गीता ४।६ )।

एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः।
शंखचक्रगदापाणिः पीतवासो जगत्पतिः॥
राज्ञो दशरथस्य त्वमयोध्याधिपतेर्विभो॥
विष्णो पुत्र त्वमागच्छ कृत्वात्मानं चतुर्विधम्॥
अवध्यं दैवतैर्विष्णो समरे जहि रावणम्॥
( वा० रा० १।१५।१६।१६।२१।२२ )

"यथेमां वाचं कल्याणीमावदानि" ( वा० सं० २६।२ )

इत्यादिमन्त्रैरपि परेशस्य मूर्त्तिमत्त्वं ज्ञायते; कण्ठताल्वादिमन्तरा परमेश्वरस्य वेदोपदेशकत्वासम्भवात्, पररीत्या परमेश्वरस्यैवात्रोपदेशकत्वाच्च।

सिद्धान्ते तु यजमानोक्तिस्तस्यैव च परमेश्वरस्य "श्रद्धभक्तिध्यानयोगादवेहि" ( कै० १।२ ), "ते ध्यानयोगानुगता अपश्यन्" ( श्वेताश्व० १।३ ) श्रुतिभिर्ध्यानभक्त्यादिकं विहितम्। मनःकल्पितस्वरूपस्य ध्यानपूजनादिकमपि मूर्त्यर्चनमेव। 'सकृद्यदङ्गप्रतिमान्तराहिता मनोमयी।' भागवते धातुपाषाणादिमूर्त्तिपूजनमपि तत्र तत्र विहितम्।

तत्र मूर्त्त्योपलक्षितस्य पूजा मूर्त्तिपूजा। अत्र 'मूर्त्तिपूजा' शब्देन मूर्त्त्युपलक्षितस्य भगवतः पूजैव विवक्षिता। निराकारवादिनोऽपि न प्रपञ्चानुपलक्षिततत्त्वं मन्तुमर्हाः। 'तेजसा सोम्य-शुङ्गेन सन्मूलमन्विच्छ" ( श० ६।८।४ ) इति श्रुत्या यथाङ्कुरेण बीजमुपलक्ष्यते, तथैव प्रपञ्चैकदेशमूर्त्त्युपलक्षितस्यापि पूजनं न विरुद्धयते, तत्र प्रत्ययैकतानतारूपं ध्यानमपि पूजनमेव।

मूर्त्तौ पूजापि मूर्तिपूजा संभवति। मूर्त्तिमभिव्याप्य वर्त्तमानस्य भगवतः पूजा मूर्त्तिपूजा, सर्वकारणत्वेन भगवतः सर्वव्यापकत्वात्। प्रपञ्चद्वारा तद्व्यापकब्रह्माराधका अपि मूर्त्तिपूजका एव।

मूर्त्तेः पूजापि सा, ब्रह्मप्रतीकत्वात् "मनो ब्रह्मेत्युपासीत" ( छा० ३।१८।१ ) इत्यादिवन्मूर्त्तिपूजा भवति। न च "मनो ब्रह्मेत्युपासीत" इतिवत् पाषाणादिमूर्त्तिमुपासीतेति विधानानुपलम्भान्न मूर्त्त्युपासनं युक्तमिति वाच्यम्, "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त

उपासीत।" ( छा० ३।१४।१ ), "पुरुष एवेदं सर्वम्' ( वा० सं० ३१।२ ) इत्यादि सर्वशब्दाक्रान्तमूर्त्तेरपि ब्राह्मेण रूपेणोपासनाया उक्तत्वात्। तत एव "नमस्ते अस्तु विद्युते" ( वा० सं० ३६।२१ ) इति विद्युदादिभ्योऽपि नमस्कृतिर्विहिता। 'ब्रह्मदृष्टिरुत्कर्षात्" ( ब्र० सू० ४।१।५ ) इति मन आदिषूपासनार्थं ब्रह्मदृष्टिः कर्त्तव्येति निश्चितम्। ब्रह्मदृष्ट्योपासिता आदित्यादयोऽपवर्गाय कल्पन्ते, न वैपरीत्येनेति सूत्रार्थः। भगवद्बुद्ध्या क्रियमाणोपासना भगवदालम्बनैव भवति, सर्वाध्यक्षत्वात् स एव फलदो भवति। 'फलमत उपपत्तेः' ( ब्र० सू० ३।२।३८ ) मूर्त्तेरिति कर्मणि षष्ठीमुपगम्य भगवन्मूर्त्तेरिव मूर्त्तेः प्रतिकृतेः पूजाभावान्मूर्तिपूजोपपद्यते।

"अर्चत प्रार्चत प्रियमेधासो अर्चता अर्चन्तु पुत्रका उत पुरं न धृष्णवर्चत" (ऋ० सं० ८।६९।८ ) अत्रेन्द्रस्य परमात्मनोऽर्चनं विहितम्।

भाष्यम्—हे अध्वर्य्वादयः ! यूयमिन्द्रम् अर्चत पूजयत स्तुत्या। प्रार्चत प्रकर्षेणार्चत इन्द्रमेव। हे प्रियमेधासः प्रियमेधसम्बन्धिनस्तद्गोत्रा यूयम्। अर्चत इन्द्रम्। पुत्रकाः पुत्रा अपि। अर्चन्तु इन्द्रम्। उत अपि च पुरं न धृष्णु यथा पुरं धर्षणशीलमर्चन्ति तादृशमिन्द्रम् अर्चत।

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे।
नमस्ते अस्त्वश्मने येनादूडाशे अस्यसि॥

( अ० का० १।१३।१ )

हे इन्द्र ! ते तव विद्युते वज्राय त्वत्सम्बन्धिने स्तनयित्नवे त्वत्सम्बन्ध्यश्मने पाषाणमयरूपाय नमः। येन त्वं दूडाशे दुःखेन दाशते पुरोडाशादिकमिति दूडाशः कृपणस्तस्मिन् अस्यसि वज्रं निक्षिपसि, तस्मात् त्वत्सम्बन्धिभ्यो नमः।

[ अत्र सायणभाष्यम्—हे पर्जन्य ते तव सम्बन्धिन्यै। विद्युते विद्योतमानायै सौदामिन्यै। नमः अस्तु, मया क्रियमाणो नमस्कारो भवतु। यद्वा नम इति अन्न नाम। मया हूयमानं हविर्लक्षणमन्नं भवतु। तथा ते तव सम्बन्धिने। स्तनयित्नवे स्तनितं ध्वनिं कुर्वते अशनये। नमः अस्तु। तथा ते तव सम्बन्धिने अश्मने। मेघनामैतत्। व्यापनशीलस्य मेघाय। नमः अस्तु भवतु। येन कारणेन। दूडाशे दुःखेन दाश्यते दाप्यते इति दूडाशो लुब्धः। स्तुतिनमस्कारहविरादीनमयदातेत्यर्थः। तादृशे पुरुषे अस्यसि क्षिपसि अशनिं प्रक्षिपसि। अतो हेतोरशनिभयनिवृत्तये नमस्करोमीत्यर्थः।]

अत्र विद्युदादिनमनम् अस्मादिनमनञ्च परमात्मबुद्ध्यैव युक्तम्। सर्वान्तर्यामिणः सर्वमयत्वसर्वशरीरत्वादिभिः प्रतिष्ठावाहनादिभिश्च तत्र परमेश्वराराधनं संगच्छते।

यो देवेभ्य आतपति यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥

( शु० यजु० ३१।२० )

अत्रादित्यस्य प्रणतिलक्षणं पूजनम्।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
योऽसावादित्ये पुरुषः सोऽसावहम् ॥

( शु० यजु० ४०।१७ )

'तत्सवितुः' ( शु० य० ३०।२ ) इति गायत्र्या च तस्यैव सूर्यस्य ध्यानपूजनादिकमुक्तम्।

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत् सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥

( ऋ० सं० १।१५६।२ )

यः यो मर्त्यः। पूर्व्याय पूर्वकालीनाय नित्यायेत्यर्थः। वेधसे विविधजगत्कर्त्रे। नवीयसे नित्यनूतनाय, अत्यन्तरमणीयायेत्यर्थः। स्तुत्याय वा। सुमज्जानये स्वयमेवोत्पन्नाय। जनेरौणादिक इण्। सुमत् स्वयमित्यर्थः ( निरुक्तम् ६।२२ ) इति यास्कः। यद्वा सुतरां मादयतीति सुमत्, तादृशी जाया यस्य सः, तस्मै सर्वजगन्मादनशीलश्रीपतये इत्यर्थः। विष्णवे व्यापकाय। ददाशति हविरादिकं ददाति। किञ्च अस्य विष्णोः। महतः महानुभावस्य। महि महत्पूज्यम्। जातं जन्म, उत्पत्ति हिरण्यगर्भादिरूपं जन्म। ब्रवत् ब्रूयात् सङ्कीर्तयेत्। सेदु सोऽपि दाता स्तोता च। श्रवोभिः अन्नैः कीर्तिभिर्वा युक्तः सन्। युज्यं चित् सर्वैर्गन्तव्यमेव तत्पदम्। अभि आभिमुख्येन। असत् गच्छति प्राप्नोति।

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन।
आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥

( ऋ० सं० १।१५६।३ )

हे स्तोतारः! तमु तमेव विष्णुम्। पूर्व्यं पूर्वार्हम् अनादिसंसिद्धम्। ऋतस्य यज्ञस्य। गर्भं गर्भभूतम्, यज्ञात्मनोत्पन्नमित्यर्थः, "यज्ञो वै विष्णुः" ( श० ब्रा० १।१।२।१३ ) इति श्रुतेः। यद्वा ऋतस्य उदकस्य गर्भं गर्भकारणम्, उदकोत्पादकमित्यर्थः, "अप एव

ससर्जादौ" ( मनु० १।८ ) इति स्मृतेः। एवंभूतं विष्णुं यथा। विद जानीथ। तथा जनुषा जन्मना स्वत एव, न केनचिद् वरलाभादिना। पिपर्तन स्तोत्रादिना प्रीणयत। यावदस्य माहात्म्यं जानीथ तावदित्यर्थः। किञ्च, अस्य महानुभावस्य विष्णोः। नामचित् सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम। जानन्तः पुरुषार्थप्रदमित्यधिगच्छन्तः। आसमन्तात्। विवक्तन वदत सङ्कीर्तयत। इदानीं साक्षात्कृत्य आह—हे विष्णो सर्वात्मकदेव। महः महतः। ते तव। सुमतिं सुष्टुतिं शोभात्मिकां बुद्धिं वा। भजामहे सेवामहे। वयं यजमानाः।

तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः।
दाधार दक्षमुत्तममहर्विदं व्रजं विष्णुः सखि वां अपोर्णुते॥
( ऋ० सं० १।१५६।४ )

यद्वा—मारुतस्य मरुत्सङ्घातस्य देवगणस्य। वेधसः विधातुः स्रष्टुः। अस्य विष्णोः। क्रतुं कर्म पालनादिरूपम्। वरुणादयः सचन्त सेवन्ते। तदधीनत्वात् पालनस्य। स च सखिवान् इन्द्रमरुदादिसहायोपेतः सन् उक्तलक्षणम्। दक्षं बलं दाधार। व्रजं च अपोर्णुते। एतेन गोवर्धनगिरिधारणलीलोक्ता।

उद्यते नम उदायते नम उदिताय नमः।
विराजे नमः स्वराजे नमः सम्राजे नमः॥
( अथर्व० सं० १७।१।२२ )

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः॥"
"यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥"
"अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश।"
( ऋ० सं० १०।१२५।१,५,६ )

अत्र सर्वेश्वर्य्या रुद्रादित्यादिरूपेण विचरणमुक्तम्। धनुरादिग्रहणं न निराकारस्योपपद्यते।

"गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे" (शु० यजु० २३।१९) मन्त्रे गणपतेरावाहनादिकमुक्तम्।

"तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः। तेन देवा अयजन्त" ( शु० यजु० ३१।९ ) इत्यत्र यज्ञपुरुषस्याभ्यर्चनमुक्तम्।

"अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषं तदारभस्व दुर्हणो तेन गच्छ परस्तरम् ॥"
( ऋ० सं० १०।१५५।३ )

अदः विप्रकृष्टदेशे अपूरुषं पुरुषनिर्माणरहितं यद्दारुमयं पुरुषोत्तमशरीरं तदारभस्व उपास्व ।

सायणभाष्यम्—अदः विप्रकृष्टदेशे वर्तमानम् । अपूरुष निर्मात्रा पुरुषेण रहितम् । यद्दारु दारुमयं पुरुषोत्तमाख्यं देवताशरीरम् । सिन्धोः पारे समुद्रतीरे । प्लवते जलस्योपरि वर्तते । तत् दारु । हे दुर्हणो दुःखेन हननीय ! केनापि हन्तुमशक्य हे स्तोतः ! आरभस्व आलम्बस्व, उपास्स्वेत्यर्थः । तेन दारुमयेण देवेनोपास्यमानेन । परस्तरम् अतिशयेन तरणीयमुत्कृष्टं वैष्णवं लोकं गच्छ ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥
( यजु० अ० ३।६० )

त्रीण्यम्बकानि यस्य तं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् पुण्यगन्धवन्तं यशस्विनं वा यजामहे ।

"त्रीणि अम्बकानि यस्य स त्र्यम्बको रुद्रस्तं त्र्यम्बकं यजामहे" इति यास्कः ।

"मुखायते पशुपते यानि चक्षूंषि ते भव ।
त्वचे रूपाय सन्दृशे प्रतीचीनाय ते नमः ॥"
"अङ्गेभ्यस्त उदराय जिह्वाया आस्याय ते ।
दद्भ्यो गन्धाय ते नमः ॥"
( अ० सं० ११।२।५-६ )

"भवाशर्वौ मृळतं माभियातं भूतपती पशुपती नमो वाम् ॥"
"क्रन्दायते प्राणाय याश्च ते भव रोपय ।
नमस्ते रुद्र कृण्मः सहस्राक्षायामर्त्य ॥"
"अस्त्रानीलशिखण्डेन सहस्राक्षेण वाजिना ।
रुद्रेणार्धक घातिना तेन मा समरामहि ॥"
"धनुर्बिभर्षि हरितं हिरण्ययं सहस्रघ्नि शतवधं शिखण्डिन् ।
रुद्रस्येषुश्चरति देवहेतिस्तस्यै ॥"

"नमस्ते रुद्र तिष्ठते आसीनायोतते नमः ॥"
( अथ० का० ११।२।१-३-७-१२-१५ )

"नमस्ते रुद्र मन्यवे" ( वा० सं० १६।१ )

हे पशुपते ! हे भव ! ते मुखाय यानि चक्षूंषि तेभ्यो नमः । त्वगादिभ्योऽपि नमः ।

यत्तु कश्चन गोपालः पशुपतिर्न शिव इति, तत्तुच्छम्; चक्षूंषीति बहुवचनानुपपत्तेः । त्र्यम्बके रुद्र एव तदुपपत्तेश्च । अस्यैव सूक्तस्य तृतीये मन्त्रे 'अमर्त्य' इति सप्तमे 'अर्धक-घाति'इति शब्दद्वयेन चार्धकघातिनि त्रिचक्षुष्केऽमर्त्ये भवे पशुपतौ रुद्र एवेमे मन्त्राः पर्य्यवस्यन्ति ।

एह्यश्मानमातिष्ठाश्या भवतु ते तनूः ।
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥'
( अथ० २।१३।४ )

अत्र शतमित्यनन्तबोधकम् ।

ऋषीणां प्रस्तरोऽसि नमोऽस्तु दैवाय प्रस्तराय ।
( अथ० १६।२।६ )

अत्र शालग्रामनर्मदेश्वरादिपूजनमुक्तम् ।

शिलाभूमिरश्मा पांसुः सा भूमिसंधृता धृता ।
तस्यै हिरण्यचक्षसे पृथिव्या अकरं नमः ॥

इति भूमिनमस्कारः । ( अथ० १२।१।२६ )

अथैतमात्मनः प्रतिमानमसृजत ।
( शतप० ब्रा० ११।१।८।३ )

विश्वस्य प्रतिमानं बभूव स जास इन्द्रः ।
( ऋ० २०।३०।६ )

संवत्सरस्य प्रतिमा यां त्वा रात्रिम् उपास्महे ।
सा न आयुष्मतीं प्रजां रायस्पोषेण संसृज ॥
( ऋ० ३।१०।३ )

प्रतिमां प्रतिकृतिम्, संवत्सरस्य प्रतिमामिति पिष्टमयीं प्रतिकृतिं कृत्वोदङ्मुखीम् उपवेशयेत ।

दैवतप्रतिमाहासादौ प्रायश्चित्तमप्युक्तम्

"यदा दैवतायनानि कम्पन्ते दैवतप्रतिमा हसन्ति, तदा प्रायश्चित्तम्" ( सामवेदीय-षड्विंशब्रा० ५।१० )

एते प्राणाः एते मनः एतु चक्षुरथो बलं शरीरमस्य संविदाम्।

( अथ० ५।३०।१२ )

कासीत्प्रमा किं निदानं यद्देवा देवमयजन्त विश्वे ।

( अथ० १०।१३०।३ )

"नमो मात्रे पृथिव्यै" । ( यजु० ६।२२ ) ।

मा असि प्रमा असि प्रतिमा असि ।

( तै० आ० ४।५ )

यदा देवतायतनानि कम्पन्ते दैवतप्रतिमा हसन्ति ।

( सामवेदीयषड्विंशब्रा० ५।१० )

"यस्य पृथिवीशरीरम्" ( बृहदारण्यके ३।७।३ )

अथाखरे सादयतीति प्रारम्भः

"अथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुः प्रादेशमात्रं प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतं मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात् त्र्यङ्गुलं मुखमुन्नमयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति।" ( श० ब्रा० १४।१।२।१७ )

"तत्प्रादेशमात्रं भवति । प्रादेशमात्रमिव हि शिरः । चतुःस्रक्ति भवति । चतुःस्रक्ती वहिश्शिरोमध्ये सङ्गृहीतं भवति । मध्ये सङ्गृहीतमिव हि शिरः ।" ( श० ब्रा० ७।५।१।२२ ) इत्यादि मूर्त्तिनिर्माणं विज्ञायते ।

"अयं पुरोभुवस्तस्य प्राणो भौवायन ॥"

( शु० यजु० १३।५४ )

"त्वया मनो गृह्णामि प्रजाभ्यः ।" ( शु० यजु० १३।५५ ) ।

"त्वया चक्षुर्गृह्णामि प्रजाभ्यः ।" ( शु० य० १३।५६ ) ।

"त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ।" ( १३।५७ ) ।

इत्यादिमन्त्रैः प्राणप्रतिष्ठा बोधिता ।

"तदास्मिन्नेतान् प्राणान् दधाति" ॥ ( शत० ब्रा० ३।८।२।४ ) ।

"प्राणांश्चैवास्मिंस्तत्सौ धत्तः ।" ( श० ३।८।२।७ ) ।

"तत्प्राणान् धत्तः" । ( शत० ब्रा० ३।८।२। ६) ।

"स न मन्येतागन्तूनिवार्थान् देवतानां प्रत्यक्षदृश्यमेतद्भवति, महाभाग्याद्देवतायाः एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति"—(नि० ७।१।५)।

निरुक्ते देवतानां लोकोत्तरमैश्वर्यं वर्णितम्। पातञ्जलयोगशास्त्रेऽपि "स्वाध्याया-दिष्टदेवतासम्प्रयोगः" (२।४४) सूत्रे योगभाष्ये च देवा ऋषयश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्य्ये चास्य प्रवर्त्तन्त इत्युक्तम्।

ये देवा दिविषदो अन्तरिक्षसदश्च ये।
पृथिव्यां शक्रा ये श्रितास्तेनो मुञ्चन्त्वं ह सः॥
(अथ० ११।८।१२)

अनेन स्वर्गे पृथिव्यामन्तरिक्षे च देवा निवसन्तीति विज्ञायते।

"इष्टापूर्त्ते स ँ सृजेथामयञ्च"—(शु० यजु० १५।५४)।

अत्र इष्टापूर्त्तयोर्वर्णनं दृश्यते। तत्रेष्टशब्देनाग्निहोत्रादयो धर्मा बोध्यन्ते, पूर्त्तशब्देन च वापी-कूप-तडाग-देवतायतननिर्माणमुक्तम्।

वापीकूपतडागानि देवतायतनानि च।
अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते॥

महीधरभाष्यम्—हे अग्ने त्वमुद्बुद्ध्यस्व उद्बुद्धो भव, सावधानो भव। एनं यजमानं प्रति जागृहि प्रतिदिनं यजमानं जागरूकं सावधानं कुरु। तत इष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथाम्, यजमानेन सह संसृष्टे भवेताम्। त्वत्प्रसादादयञ्च यजमानः इष्टापूर्ताभ्यां संसृज्य-ताम्। किञ्च, हे विश्वेदेवाः! यूयं कृतेष्टपूर्तो निष्पापो यजमानश्च सधस्थे देवैः सह स्थितियोग्ये अस्मिन्नुत्तरस्मिन् सर्वोत्कृष्टे स्वर्लोके द्युलोके सीदत तिष्ठत।

"सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि"—(वा० सं० १५।६५)।

"अथैतमात्मानः प्रतिमामसृजत। यद्यज्ञम्। तस्मादाहुः प्रजापतिर्यज्ञ इत्यात्मनो ह्येत प्रतिमामसृजत"—(श० ब्रा० ११।१।८।३)।

इत्यादिमन्त्रेषु प्रतिमानिर्माणं स्पष्टमुक्तम्।

"स्नात्वा शुचौ गोमयेनोपलिप्य प्रतिकृतिं कृत्वा अक्षतपुष्पैर्यथालाभमर्चयेत" (बौधायनकल्पसूत्रे परिचर्य्यासूत्रम् २)। बौधायनसूत्रं श्रीदयानन्देन प्रमाणितम्।

नित्यं स्नात्वा शुचिः कुर्याद् देवर्षिपितृतर्पणम्।
देवताभ्यर्चनञ्चैव समिदाधानमेव च॥
(मनु० २।१७६)

"प्रतिमादिषु हरिहरादिदेवपूजनम्" इति कुल्लूकमहोदयः ।

शुक्रनीतौ चतुर्थेऽध्याये—

"शृङ्गाटके ग्राममध्ये विष्णोर्वा शङ्करस्य च ॥"

"गणेशस्य रवेर्देव्याः प्रासादान् क्रमतो न्यसेत्" ।

( ३६६, ३६७ )

अत्र पूर्वं महादेवः प्रसादमकरोद् विभुः ।

( वा० रा० यु० १२३-२० )

इत्यादिप्रमाणैश्च मूर्त्तिपूजनं स्पष्टं ज्ञायते । यदुक्तम्—

अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।

ततो भूय इव ते तमो य उ संभूत्यां रताः"

( वा० सं० ४०।६ )

इत्यनेन ब्रह्मस्थाने कारणप्रकृत्युपासनेनान्धं तमःप्रवेशः, संभूतेः कार्य्यद्रव्य-पृथिवी-पाषाणशरीराद्युपासनेन ततोऽप्यधिकान्धं तमःप्राप्तिरुक्तेति, तन्न; असंभूतिशब्देन प्रकृतेः, संभूतिशब्देन च हिरण्यगर्भस्य तत्र विवक्षितत्वात्। तदुपासनयोरपि नात्र निन्दनम्, समुच्चिचीषया निन्दनस्य निन्दायां तात्पर्य्याभावात्। "नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते, अपि तु विधेयं स्तोतुम्' इति सिद्धान्तात्। अन्यथा "विनाशेन मृत्युं तीर्त्वाऽसंभूत्याऽमृतमश्नुते' ( वा० सं० ४०।११ ) इति विरोधापत्तेः। नहि यस्य निन्दया त्यागो विधित्सितो भवति तदनुष्ठानेनामृतत्वप्राप्तिः सम्भवति ।

एवमेव विद्याविद्ययोरपि समुच्चिचीषया चैकैका निन्दोक्ता। 'कर्मणा पितृलोकः, विद्यया देवलोकः' इति तयोः फलविधानात् त्यागाय निन्दानुपपत्तेः ।

न च "न तस्य प्रतिमा अस्ति'—( यजु० ३२।२ ) इति परमेश्वरस्य प्रतिमानिषेधान्न तत्पूजनं युक्तमिति वाच्यम्, तत्र प्रतिमाशब्दस्य सादृश्यार्थकत्वेन मूर्त्यवाचकत्वेन तन्निषेधा-योगात्। अत एव "प्रतिमा प्रतिमानम् उपमानम्" इत्युव्वट-महीधरौ; "प्रतिमा तुल्यता" इति सायणः ।

अत एव—

स तन्नियोगात् खलु सत्यवादी सत्यां प्रतिज्ञां नृप पालयंस्ते ।

इतो महात्मा वनमेव रामो गतः सुखान्यप्रतिमानि हित्वा ॥

( वा० रा० अयोध्या० )

रूपेणाप्रतिमो भुवि भारते च नलप्रकरणे प्रतिमाशब्द उपमानपर एव।

"न तस्य प्रतिमा अस्ति—इति ब्रह्मणोऽनुपमानत्वं दर्शयति" ( ब्र० सू० २।३।७ ) इति शङ्कराचार्यः।

किञ्च, मूर्तिपूजाविरुद्धः स्वामिदयानन्दोऽपि "नैव प्रतिमार्थेन मूर्त्तयो गृह्यन्ते" इति चोक्तवान् ऋग्वेदभाष्यभूमिकायाम्। पूर्वापरप्रकरणविरुद्धत्वाच्च नात्र प्रतिमाशब्दस्य मूर्तिरर्थः। तथाहि—

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥
( वा० सं० ३२।१ )

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
नैनमूर्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत्॥
( वा० सं० ३२।२ )

अत्र पूर्वाध्याये "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" ( वा० सं० ३१।२२ ) इति यस्य परमेश्वरस्य श्रीलक्ष्मीरूपे द्वे पत्न्यौ गदिते स एवाग्न्यादित्यादिरूपेण पूज्यते। सर्वे च निमिषादयः कालभेदा विद्युतश्च तत एव जायन्ते। अभिन्ननिमित्तोपादनत्वात् परमेश्वरस्यैव सर्वंभवनम्। यदा सर्वमेव तस्य प्रतिमा भवति, तदा न तस्य प्रतिमा इति कथं तस्य मूर्तिनिषेधः संभवति ? तस्मादत्र प्रतिमाशब्दः प्रतिमान-( उपमा )पर एव। सम्पूर्णश्च मन्त्र इत्थम्—

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।
हिरण्यगर्भ इत्येष मा मा हिंसीदित्येषा यस्मान्न जात इत्येषः॥
( वा० सं० ३२।३ )

यस्य नाम महद्यशस्तस्य भगवतः प्रतिमा प्रतिमानं तुल्यमन्यन्नास्तीत्यर्थः। अस्मिन् मन्त्रे हिरण्यगर्भ इति प्रतीकः। तेन मन्त्रेण मूर्त्तिवर्णनमेव दृश्यते—

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥
( यजु० १३।४ )

अत्र हिरण्यगर्भो ज्योतिर्मयो भगवान् सृष्टेः प्रागेव वर्त्तमान आसीदित्युक्तम्। स भूतस्य एकोऽसाधारणः पतिरासीत्। स एवेमां पृथिवीं द्याञ्च दाधार। कस्मै प्रजापतये हविषा विधेम परिचरेम। एवमत्र तस्य मूर्त्तिपूजनञ्च स्पष्टं विज्ञायते।

"अथ पुरुषमुपदधाति। स प्रजापतिः सोऽग्निः स यजमानः स हिरण्मयो भवति। ज्योतिर्वै हिरण्यं ज्योतिरग्निरमृतः हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्रजापतिः।" (श० ७।४।१।१५)।

"उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति"। (कात्यायनश्रौतसूत्रम् १७।४।३) इति हिरण्यमूर्तिस्थापनादिकम्।

शतपथेऽपि सुवर्णफलके हिरण्यमयपुरुषस्थापनम्, देवैश्च तत्र त्रिभिः साममन्त्रैस्तत्र चैतन्यमयवीर्य्यस्थापनं कृतम्।

अथ साम गायति—

"एतद्वै देवा एतं पुरुषमुपधाय तमेतादृशमेवापश्यन् यथैतच्छुष्कं फलकम्॥"

"तेऽब्रुवन्। उप तज्जानीत यथास्मिन् पुरुषे वीर्य्यं दधामेति। तेऽब्रुवंश्चेतयध्वमिति। चितिमिच्छतेति। वाव तदब्रुवंस्तदिच्छत यथास्मिन् पुरुषे वीर्य्यं दधामेति॥"

"ते चेतयमानाः। एतत्सामापश्यंस्तदगायंस्तस्मिन् वीर्य्यमदधुः, तथैवास्मिन्नयमेतद् दधाति पुरुषे गायति पुरुषे तद्वीर्य्यं दधाति। चित्रे गायति सर्वाणि हि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयान्नेन्मायमग्निर्हिं न सदिति॥

(श० ७।४।१।२२-२३-२४)

"नमोऽस्तु सर्पेभ्यो"—(श० ७।४।१।२८)।

"या इषवो यातुधानानामिति"—(श० ७।४।१।२९)।

"ये वामी रोचते दिवः"—(श० ७।४।१।३०)।

निर्दिष्टैः साममन्त्रैस्तत्र सुवर्णफलके स्थापिते हिरणमये पुरुषे चैतन्यात्मकवीर्य्याधानेनाह्वनादिप्रतिष्ठा सूचिता, न तस्य प्रतिमेति मन्त्र एव। मा मा हिँ्सीदित्यपि मन्त्रान्तरस्य प्रतीकोपादानम्। स चायं मन्त्रः—

मा मा हिँ्सीज्जनिता यः पृथिव्याः यो वा दिवँ् सत्यधर्माव्यानट्।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम॥

(यजु० १२।१०२)

यः सत्यधर्मा भगवान् पृथिव्या दिवश्च जनयिता, यश्च जगदाह्लादजनयित्रीरपः सृजति, यश्च प्रथमः सृष्टेभ्यः पूर्वमेव जजान उत्पन्न अभिव्यक्तः स मां मा हिंसीत्। यस्य प्रतीकसूचिताभ्यां मन्त्राभ्यां मूर्तिमतः पूजनं स्पष्टं विज्ञायते, तेन मन्त्रेण मूर्तिनिषेधकल्पनं विप्रतिषिद्धमेव।

"यस्मान्न जातः" इति तृतीयः प्रतीकोऽपि तत्रैव।

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि स चते स षोडशी ॥

( शु० यजु० ८।३६ )

यस्मादन्यः परो नास्ति । यो भुवनानि प्रविष्टोऽन्तर्य्यामी स षोडशी । प्रजया रममाणः प्रीयमाणस्तत्पालनार्थमग्नि-वायु-सूर्य्याख्यानि त्रीणि ज्यतींषि स च ते । स्पष्टमत्रापि भगवतो ज्योतिष्मत्त्वं विज्ञायते । किञ्च नात्र प्रतिमाशब्दो मूर्तिपरः, अनुपयोगात् । लोके वेदे वा स एवार्थो युक्तो यश्च स्वरूपतो भावतो वा वाच्यार्थतयोपयुज्येत । यश्च वाक्यार्थे नोपयुज्यते स कुतोऽप्यर्थो व्यर्थो भवति । यथा पाकोपक्रमे सैन्धवशब्दो नाश्वपरः संभवति । अत्र तु यस्य भगवतो महद्यशो नामास्ति, तस्य प्रतिमा प्रतिकृतिर्न भवति, इति तथा नोपयुज्यते । यथा तत्सदृशो नास्तीत्यर्थ उपयुज्यते न हि मूर्त्यभावो यशोमहत्त्वे कारणायते । महायशस्वि-नामार्य्यमहोदयानां मूर्त्यभावो लोकेन नानुभूयते । प्रत्युतानुभूयन्ते यशस्विनां सहस्रशः प्रतिकृतयः । तस्मादुपमानार्थक एवात्र प्रतिमाशब्दः ।

ये च मूर्त्तिपूजा-विरोधिनस्तेषु श्रीदयानन्दीयग्रन्थेष्वपि प्रकारान्तरेण मूर्त्तिपूजनम् । तथाहि— वैदिकसन्ध्यायां प्राचीदिगग्निरधिपतिर्मनसा परिक्रमणमुक्तम् । कथमपरिच्छिन्नस्य परिक्रमणमिति तु त एव विचारयन्तु ।

'घृतेन सीता मधुना समज्यता······अस्मान् सीते पयसाभ्या ववृत्स्व' (यजु० १२।७०) । अनेन मन्त्रेण क्षेत्रलोष्ट-शमककाष्ठस्य (पाटा) घृतमध्वादिभिः पूजनमुक्तम् ।

'विष्णो दंष्ट्रोसि नमस्तु भगवन्' क्षुरप्रार्थनम् मुण्डनसंस्कारे । 'ओषधे त्रायस्व' इति कुशप्रार्थना समावर्तनसंस्कारे । अञ्जन-यष्टि-क्षत्र-पादत्राणादिपूजनम् । प्रतिष्ठे···· इति मन्त्रेण पादत्राणप्रार्थनं संस्कारविधौ ।

'प्रतिष्ठेस्थो विश्वतो मा पातम्' इत्युपानद्धारणं समावर्तने संस्कारविधौ ।

निष्क्रमणसंस्कारे 'यददश्चन्द्रमसि' इति मन्त्रेण चन्द्रार्घ्यदानम् । आर्य्याभिनये च 'वायवायाहि दर्शते मे सोमा अरे कृताः' इति सोमनिवेदनं परमेश्वरस्य विहितम् ।

विवाहप्रसङ्गे मधुपर्कस्य भूमौ सिञ्चनेन देव-नैवेद्यदानमुक्तम् ।

'विष्वे त्वा देवा अनुष्टुपेन छन्दसा त्वां भक्षयन्तु' उत्तरस्यां दिशि मधुपर्कदानम् ।

नहि जीवानां मुखेषु तत्सिञ्चनं संगतम् ।

मूर्त्तिपूजकाः पाषाणादिमूर्तिं न पूजयन्ति, किन्तु मूर्त्तिसमक्षे परमेश्वरं ध्यायन्तीति स्वामिदयानन्दः। ( सत्यार्थप्रकाशे १४ समुल्लासे ३०, मुस्लिममतखण्डनप्रसङ्गे )।

सन्ध्योपासनादि—पञ्चयज्ञविधौ तेन 'ओं पृं पृथिव्यै नमः' इति पृथिवीं पूजयेत् (३४ पृ०); तत्रैव--विष्णु शारद-कोटिचन्द्रसदृशं शंखं रथाङ्गं गदामम्भोजं दधतमिति विष्णुध्यानमुक्तम् (३५ पृ० । देवस्य दक्षिणहस्ते जलार्पणम् (३६ पृ०)।

न चेदं न मूर्तिपूजनमिति वाच्यम् कस्मैचिज्जडाय शिरोनमनं पूजनं मूर्तिपूजैवेति ( नानकपन्थिखण्डनप्रसङ्गे सत्यार्थप्रकाशे ११ समुल्लासे )।

ऋग्वेदभाष्यभूमिकायां ग्रन्थप्रामाण्याप्रामाण्यविचारप्रसङ्गे स्वा० दयानन्दः—

प्र०—वेदेषु प्रतिमाशब्दोऽस्ति न वा ?

उ०—अस्ति।

प्र०—किमर्थो निषेधः ?

उ०—नैव प्रतिमार्थेन मूर्त्तयो गृह्यन्ते।

किं तर्हि, परिमाणार्था गृह्यन्ते।

अत्र प्रमाणानि—

संवत्सरस्य प्रतिमां यां त्वा रात्र्युपास्महे।
सा न आयुष्मतीं प्रजां रायस्पोषेण संसृज ॥
( अथर्व० का० ३, सू० १०, म० ३ )

मुहूर्त्तानां प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येव तावन्तो हि संवत्सरस्य मुहूर्त्ताः। ( ४, श० का० १०, प्र० ३, कं० ३ )।

देवा विद्वांसः यां प्रतिमां परिमाणमुपासते वयमपि त्वा तामेवोपास्महे। अर्थाद् या संवत्सरस्य त्रीणि शतानि षष्टिश्च रात्रयो भवन्ति यत एताभिः संवत्सरः परिमीयते तस्मादेतासां प्रतिमा संज्ञेति, यथा सेयं रात्रिः नोऽस्माकं रायस्पोषेण धनपुष्टिभ्यामायुष्मतीं प्रजां संसृज सम्यक् सृजेत्। नैव तस्य प्रतिमा अर्थात् प्रतिनिधिः प्रतिकृतिं प्रतिमानं तौलनसाधनं परिमाणं मूर्त्यादिकल्पनं किञ्चिदप्यस्ति, सहस्रस्य प्रतिमासि तौलनसाधनं तु (तौलन के तुल्य); श्रीदयानन्दः।

आदित्यं गर्भं पयसा समङ्धि सहस्रस्य प्रतिमां विश्वा अस्तु।
( यजु० १३.४१ )

अत्र मन्त्रे प्रतिमा-शब्देन यजुर्वेदभाष्ये दयानन्देन प्रतिमाशब्दस्य सदसद्विवेकिनी बुद्धिरर्थो गृहीतः। 'तथात्वेन तस्य प्रतिमा अस्ति' इत्यत्रापि तथार्थे तस्य परमेश्वरस्य सदसद्विवेकिनी बुद्धिर्नास्तीत्येतदर्थः संपद्येत। न चेष्टापत्तिरिति वाच्यम्, "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" इत्यादि-श्रुतिभिस्तस्य सर्वज्ञत्वावगमविरोधात्।

गते पुरोहिते रामस्स्नातो नियतमानसः।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥
( वा० रा०; अयो० का० ६।१ )

वाग्यतः सह वैदेह्या भूत्वा नियतमानसः।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥
( वा० रा०; अयो० का० ६।४ )

शरण्यं शरणं गत्वा भगवन्त पिनाकिनम्।
मृन्मयस्थण्डिलं कृत्वा माल्येनापूजयद् भृशम् ॥
( म० भा० वनप० ३९।६४ )

नित्यं स्नात्वा शुचिः कुर्य्याद् देवर्षिपितृतर्पणम्।
देवताभ्यर्चनञ्चैव समिदाधानमेव च ॥
( मनु० २।१७६ )

## अत्र मुस्लिमादिमतम्

मुस्लिमादिमतेऽपि 'हजरूल अस्वद (पाषाण) वहिस्त (माहात्म्य) हदीश' ग्रन्थे स्पष्टम्। श्रीमुहम्मदसाहबोऽपि 'सङ्गे अस्वद' (पाषाणं) चुम्बितवान्।

( हदीस मिस कात रुब, अ० २ हदीश ५५ )

श्री मुहम्मद-साहबेनोक्तम्—'हजरूल अस्वद वहिस्त' स्थानादवतीर्णः पूर्वं सदुग्धधवलः पातकिजनसंसर्गात् कार्ष्ण्यमुपगतः। ( हदीश ५६ )

तेनैवोक्तम्—

"कस्म खुदावी हजरूल अस्वद को खुदा कयामत के दिन उठावेगा। उसके दो आँखें होंगी जिससे देखेगा और जीभ होगी। उससे जिसने बोसा दिया है उनकी गवाही देगा।"

कयामतदिनेऽस्य पाषाणस्य नेत्रे जिह्वा चोत्पत्स्यन्ते। येन येनास्य चुम्बनं कृतं तस्य तस्य साक्ष्यमयं दास्यतीति। ( हदीस ५७ )

'अलिङ्गशिव इत्युक्तः लिङ्गं शैव इति स्मृतः ।'

इति लिङ्गपुराणवचनाद् विशुद्धब्रह्मस्वरूपशिवबोधकं चिह्नं शिवलिङ्गमुच्यते ।

'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।'

इति सांख्यवचने लिङ्गपदेनानित्यमव्यापि महदादिकं लिङ्गं भवति । प्रकृते तु ब्रह्माण्डस्यैव ब्रह्मबोधकत्वेन ब्रह्मलिङ्गपदवाच्यता ।

'लूइस्' महाशयस्य 'फैलिक वर्शिप्' पुस्तके विस्तरेण सर्वत्र लिङ्गपूजा-प्रचलनमुक्तम् । इजिप्त-देशे बहुस्थलेषु नागेन्द्रहारो नन्द्यारूढस्त्रिशूलधरः शिवः पूज्यते । तत्रैव मेमफिस-स्थाने लिङ्गस्य बीजाक्षरं 'Z' भवति ।

ग्रीसयूनान-देशे 'वेकस प्रियेसस' नाम्ना शिवः पूज्यते । एरिका-करेन्थ-विनस-डापना-आदिनाम्ना देव्यः पूज्यन्ते । रोमदेशे फ्लोरेण्ड-नगरे 'हमिज् लैव वेक्स' पूजा भवति । इङ्गलैण्ड-योर्क-देशे 'स्टोनहेञ्ज' मन्दिरं विद्यते । आयरलैण्ड-नवटन-स्टीन-इर्जिसम-डरा-राङ्-उण्टिजर-स्थानदर्शनेन तत्र शिवपूजासीदित्यनुमीयते ।

आयरलैण्ड-देशे गिर्जागृहद्वाःसु देवीमूर्त्तयः पूज्यन्ते । स्काटलैण्डस्य ग्लासगो-नगरे सूर्य्यमन्दिरम् । फ्रान्स-देशे सौभाग्योदयाय शिवपूजा भवति । स्पेन-देशे 'सामेटोस' मन्दिरे देवीमूर्त्तयो भवन्ति । मेड्रिक-गिर्जागृहेषु, समाधिस्थानेषु च नग्नस्त्रीमूर्त्तयः सन्ति । एशिया-सय्यानीवाविल-नगरे शतत्रयघनहस्त-परिमितं शिवलिङ्गमस्ति ।

सीरिया-श्यामदेशे 'एकोनि एस्टर गेटिश' लिङ्गपूजा भवति । तापण्ड्रापोलिस-स्थाने बृहच्छिवमन्दिरे विशालं शिवलिङ्गं विद्यते । अरब-देशे श्रीमुहम्मदसाहबस्य जन्मस्थाने पूर्वं 'लात मनात अल्मात अल्लु आत' नाम्ना शिवपूजनं प्रचलितमासीत् । मक्का-स्थाने 'मक्केश्वर' एव पूज्यते रूपान्तरेण ।

सुमात्रा-जावा-फिनिशिया-वल-वलकदेशेषु तथैव शिवलिङ्गपूजा । 'तौरेत' ग्रन्थे इब्राहीम-भृत्यस्य भृत्याय शिवलिङ्गस्पर्शेन शपथः कारितः । जापानेऽपि साइस-नगरे सूर्य्य-लक्ष्म्यादीनां पूजनं भवति । साइबेरिया-ताशकन्द-स्थानेषु शिवलिङ्गपूजा ।

ओसिनिया-अमेरिका-देशे पेनिको-नगरे हौन्दुरास-स्थानेषु द्विमुख-शिवलिङ्गपूजनं भवति । यूक्रेन-देशे दक्षिण-अमेरिका-स्थानेष्वपि बहुत्र तथैव पूजनं भवति ।

शास्त्रेष्वपि

वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम् ।
अनभ्यर्च्य न भुञ्जीत भगवन्तं त्रिलोचनम् ॥

इति शिवपूजनस्यानिवार्य्यत्वमुक्तम् ।

'नमो हिरण्यबाहवे' (वा० सं० १६।१७), 'नीलग्रीवाय च शितिकण्ठाय' (वा० सं० १६।२८), 'हिरण्यकेशः हिरण्यश्मश्रुः' (छा० १।६।६) इत्यादि वेदेषु, 'अन्तस्तद्धर्मोपदेशात्' (ब्र० सू० १।१।२०) इत्यादि ब्रह्मसूत्रेषु च सगुणसाकारस्य ब्रह्मणो विस्पष्टं वर्णनं दृश्यते ।

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ॥ ७ ॥
यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥
अर्चायां स्थण्डिलेऽग्नौ वा सूर्य्ये वाप्सु हृदि द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥
( श्री० भा० ११।२७।७-९ )

शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ १२ ॥
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् ।
स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥
( श्री० भा० ११।२७।१२-१४ )

विस्तरस्तु तत एव ज्ञेयः । वस्तुतस्तु—

न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव' ।
( श्री० भा० ११।२७।६ )

इति रीत्या कर्मकाण्डस्य महान् विषयो मिताक्षरादायभाग-व्यवहारमयूख-हेमाद्रि-पराशर-माधव-वीरमित्रोदय-धर्मसिन्धु-निर्णयसिन्धुप्रभृतिनिबन्धग्रन्थैः पूर्वोत्तरमीमांसादिन्यायैर्यथायोग्यं विचारितः ।

आश्रमधर्माश्च मन्वादिस्मृतिषु पुराणेतिहासादिषु श्रीभागवते च निरूपिताः । तत्र वेदाध्ययनं ब्रह्मचर्यव्रतेनैव कर्त्तव्यम् । दर्शन-स्पर्शन-केलि-प्रेक्षण-गुह्यभाषण-संकल्पाध्यवसाय-क्रियानिर्वृतिलक्षणस्याष्टाङ्ग-मैथुनस्य परिवर्जनेन सर्वथोपस्थनियमनेन शुक्ररक्षणं ब्रह्मचर्य्यम् ।

ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद् बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ॥
( अथर्व० सं० ५।१७।५ )

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥
(अ० वे० सं० ११।७।१७)

**सायणभाष्यम्**—ब्रह्म वेदः, तदध्ययनार्थमाचर्यम् आचरणीयं समिदाधानभैक्षचर्योर्ध्वरेतस्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् । तेन ब्रह्मचर्येण । तपसा तत्कृतेनोपवासादिव्रतनियमेन च । राजा । राष्ट्रं स्वकीयम् । विरक्षति विशेषेण पालयति । यस्य राज्ञो जनपदे ब्रह्मचर्येण युक्ताः पुरुषास्तपश्चरन्ति तदीयं राष्ट्रम् अभिवर्धत इत्यर्थः । यद्वा, राज्ञः कर्तव्यत्वेन कालविशेषेषु श्रुतिस्मृत्युदितं ब्रह्मचर्यं तपोऽनुतिष्ठन् राजा तेनैव ब्रह्मचर्येण तपसा राष्ट्रं पालयतीत्यर्थः । आचार्यः अपि । ब्रह्मचर्येण नियमेन । ब्रह्मचारिणं शिष्यम् । इच्छते आत्मनोऽभिलष्यति । ब्रह्मचर्यनियमस्थमेवाचार्यं शिष्या उपगच्छन्तीत्यर्थः ।

ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।
अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति ॥
(अ० सं० ११।७।१८)

**सायणभाष्यम्**—अत्रापि ब्रह्मचर्यं प्रशस्यते—कन्या अकृतविवाहा स्त्री ब्रह्मचर्यं चरन्ती तेन ब्रह्मचर्येण युवानं युवत्वगुणोपेतम् उत्कृष्टं पतिं विन्दते लभते । किं बहुना, पशुजातिरपि ब्रह्मचर्येण स्वाभिलषितं फलं लभत इत्याह अनड्वान् इति । अनड्वान् अनो वहन् पुङ्गवः ब्रह्मचर्येण ऊर्ध्वरेतस्कत्वादिना धर्मेण अनो वहनादिकं स्वकार्यं निर्वर्तयन् उत्कृष्टं पतिं लभते । तथा अश्वः ब्रह्मचर्येण घासं भक्षणीयं तृणादिकं जिगीर्षति । भक्षितुमिच्छति ।

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥
(अ० सं० ११।७।१९)

**सायणभाष्यम्**—

ब्रह्मचर्येण ब्रह्मचर्यरूपेण तपसा देवा अग्न्यादयो मृत्युं मरणम् अपाघ्नत अपहतवन्तः । अमर्त्याः सम्पन्ना इत्यर्थः । इन्द्रो ह इन्द्रोऽपि ब्रह्मचर्येण एव साधनेन देवेभ्यः देवानाम् अर्थे स्वः स्वर्गम् आभरत् आहरत् ।

अत्रोपस्थसंयम एव ब्रह्मचर्यम्, न वेदाध्ययनम्;
कन्यानुडुदश्वेषु तदसंभवात् ।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

( म० ६।९२ )

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।

( श्री० भ० गी० १६।१-३ )

सर्वेषु वर्णेष्वाश्रमेषु सर्वराष्ट्रेषु चैतेषां धर्माणां प्रभावेण सामञ्जस्यमभ्युच्चयश्चानायासेन संपद्यते।

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्मयज्ञः पृथिवीं धारयन्ति।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥

( अथर्व० सं० १२।१।१ )

इति वेदमन्त्रेण बृहतः सत्यस्योग्रस्य ऋतस्य दीक्षायास्तपसो ब्रह्मयज्ञस्य च पृथिव्यादिविश्वधारकत्वं मुखत उक्तम्।

पुराणादिषु मुख्य-जाति-गौणभेदेन ब्राह्मणादिव्यवहारो भवति। यथा सिंहात्सिंह्यां जातः शौर्य्यक्रौर्य्यादिगुणोपेतो मुख्यः सिंहः, सिंहोचितगुणरहितो जातिसिंहः, सिंहोचितगुणयुक्तो जातिहीनो देवदत्तादिर्गौणः सिंहो भवति; तथैव ब्राह्मणाद् ब्राह्मण्यां जातः शमादियुक्तो मुख्यो ब्राह्मणः, शमादिरहितः स एव जातिब्राह्मणः, जातिहीनो शमादिगुणयुक्तश्च गौणो ब्राह्मणो भवति। तदुक्तं महाभाष्यकृता—

विद्या तपश्च योनिश्च त्रयं ब्राह्मणकारणम्।
विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः ॥

( म० भा० २।२।६ )

गुणकर्मादिभिरिहैव जन्मनि ब्राह्मणत्वजातिपरिवर्त्तने तु जातिव्यवस्था न संभवति, गुणकर्मणां परिवर्त्तनशीलत्वेन प्रतिदिनं जातिपरिवर्त्तनापत्त्या व्यवस्थानुपपत्तेः। जपपाठादिप्रवृत्तौ ब्राह्मण्यम्, श्वादिनिवारणाय दण्डादिग्रहणे क्षत्रियत्वम्, लवणादिक्रयणे वैश्यत्वम्, पित्रा-

दिसेवापरत्वे शूद्रत्वम्, गृहमार्जनादिप्रवृत्तावन्त्यजत्वं च स्यात्। जातेर्नित्यत्वेन यावद्व्यक्ति तत्परिवर्त्तनमसंभवमेव। तत एव मृतस्यापि मृगादेर्मृगत्वमेव, न श्वादित्वम्।

अद्यत्वेऽपि राष्ट्रोन्नतये ज्ञानविज्ञाननिष्ठानां शौर्यवीर्य्यार्जनपरायणानामुद्योग-वाणिज्य-कृषि-गोपालनादिपरायणानां शिल्पविज्ञानादिनिष्ठानामतीवोपयोगः। तेषामेव क्रमेण ब्राह्मणादित्वं विज्ञेयम्। अव्यवस्थायां तत्तत्कार्य्यसम्पादने न तादृक् सौकर्य्यं भवति, यथा वर्णव्यवस्थायाम्। तेन यत्रेदानीं जन्मना वर्णव्यवस्था न भवेत्तत्रापि कर्मणा तदुपपाद्य जन्मना व्यवस्थापनीयेति दिक्।

स्वधर्मनिष्ठो गृहस्थाश्रम एव सर्वाश्रमाणां मूलं भवति—

सर्वेषामपि चैतेषां वेदस्मृतिविधानतः।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्त्ति हि॥
(मनु० ६।८९)

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम्॥
(अ० वे० सं० ३।३०।२)

## सायणभाष्यम्—

पुत्रः तनयः। पितुरनुव्रतः। व्रतमिति कर्मनाम। अनुकूलकर्मा भवतु। यत् पिता कामयते तत्कर्मकारी भवतु। माता च सम्मनाः पुत्रादिभिः समानमनस्का भवतु। पत्ये भर्त्रे। जाया भार्या। मधुमतीं माधुर्यवतीम्। शान्तिवां सुखयुक्ताम्। वाचम्। वदतु ब्रवीतु। समानमनस्का भवत्वित्यर्थः।

मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥
(अ० सं० ३।३०।३)

## सायणभाष्यम्—

भ्राता सोदरः। भ्रातरम्। मा। द्विष्यात् दायभागादिनिमित्तेन भ्रातृविषयमप्रियं मा कुर्यात्। उत अपि च। स्वसारं भगिनीम्। स्वसा। मा। द्विष्यात्। ते सर्वे भ्रात्रादयः सम्यञ्चः समञ्चनाः समानगतयः। सव्रताः समानकर्माणो भूत्वा। भद्रया कल्याण्या वाचा वागिन्द्रियेण। वाचम्। वदत वदन्तु।

इत्यथर्ववेदे च धर्मनियन्त्रितानां पितृपुत्रयोर्जायापत्योः स्वसृभ्रातॄणाञ्च सांमनस्यम् महत् पुण्यफलम् उक्तम् ।

पञ्चमहायज्ञानामनुष्ठानं गृहस्थस्यानिवार्य्यो धर्मः । तथाहि—

स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ।
पितॄन् श्राद्धैश्च नॄनन्नैः भूतानि बलिकर्मणा ॥
( मनु० ३।८१ )

मृतस्य पित्रादेः श्राद्धतर्पणं जीवतश्चाज्ञापालनं विशेषः पुत्रधर्मः ।

यज्ञादय इष्टशब्देन वापीकूपतडागदेवतायतनान्नप्रदानारामनिर्माणप्रतिष्ठापनादयः पूर्त्तशब्देनाख्यायन्ते ।

वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते ॥

अग्निहोत्रादिधर्माङ्गत्वेन सत्पुत्रलाभार्थम् आत्मरक्षार्थञ्च भार्य्यारक्षणम्, भूषणादिभिस्तस्याः सम्माननं च अत्यावश्यकम् ।

स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वञ्च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥
( मनु० ९।७ )

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
( म० ९।२६ )

गृहिण्या च

सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥
यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥
( मनु० ५।१५०-१५१ )

वनस्थानां तपःसमुपासनम्, यतीनामुपासनम्, तत्त्वज्ञानशमाहिंसादिकमेव मुख्यो धर्मः ।

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवाभागं यथा पूर्वे संजानाना उपासते ॥
( ऋ० सं० १०।१९१।२ )

**सायणभाष्यम्** --

हे स्तोतारः, यूय सङ्गच्छध्वम्। संगताः संभूता भवत। तथा संवदध्वं सह वदत। परस्परं विरोधं परित्यज्य एकविधमेव वाक्यं ब्रूत। वः युष्माकं मनांसि संजानताम्। समानमेकरूपमेवार्थमवगच्छन्तु। यथा पूर्वे पुरातनाः देवाः संजानाना ऐकमत्यं प्राप्ताः हविर्भागम् उपासते यथा स्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेतिशेषः।

इत्यादिभिर्मन्त्रैः सामञ्जस्य-सांमनस्य-संपादनायापि सर्वैर्महान् यत्न आस्थेयः। व्यक्तीनां सांमनस्येन कुटुम्बसंघटनं सम्पद्यते। कुटुम्बानां सांमनस्येन, ग्रामनगरादीनां च तेषां सामनस्येन हि प्रान्तराष्ट्रविश्वेषामपि सामनस्य-सामञ्जस्यादिकं सम्पद्यते। व्यष्टिहितैः सार्द्धमेव समष्टिविश्वस्यापि हिताचरणमनिवार्य्यमेव भवति। तस्मिन् संकटापन्ने व्यक्तिहितान्यपि विपद्यन्ते। तदर्थं राजराज्यादिव्यवस्थाऽप्यपेक्षिता। भारतीयशास्त्रेषु राजधर्मस्यातीव माहात्म्यं दृश्यते। यस्य राज्ञः—

न मे स्तेनो जनपदे न कदर्य्यो न मद्यपः।
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुत.॥

(छा० उ० ५।११।५)

एवमुद्घोषः सफलो भवेत्, तस्य राज्ञो माहात्म्यं को नानुमन्येत? तादृशो राजैव युगादि-कालकारणं भवति—

कालो वा कारणं राज्ञो राजा कालस्य कारणम्।
इति ते संशयो मा भूद् राजा कालस्य कारणम्॥

(शा० प० ६९।७९)

कामज-क्रोधजादिव्यसनविमुक्तो धर्मनिष्ठो नीतिनिष्ठो नृपः स्वात्मानं प्रजाश्च व्यसनेभ्यः संतार्य्य महत्सुखे व्यवस्थापयति। सतां रक्षणार्थं दुर्वृत्तदमनमप्यपेक्षितं भवति, तेन दुर्वृत्तानामपि कल्याणमेव भवति। तदर्थमेव राजधर्मेषु युद्धमपि प्रमुखधर्मरूपेण परिगणितम्।

भगवता चोक्तम्—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥

(श्री० भ० गी० २।३२)

मातृभूमेर्धर्मस्य स्वत्वस्य प्रजानाञ्च रक्षणायोपस्थिताद् युद्धादपसरणं महते दोषाय भवतीत्यप्युक्तम्:—

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि ॥

( श्री० भ० गी० २।३३ )

## मोक्षनिरूपणम्

मोक्षस्तु निरावरणस्वप्रकाशनिरवच्छिन्नपरमानन्दघनः परमात्मैव, तद्भिन्नस्यार्त्तत्वेन बाधितत्वात् । तदुक्तम्—'निवृत्तिरात्मा मोक्षस्य ज्ञातत्वेनोपलक्षितः ।' इति निवृत्त्युपलक्षितः पर एव मोक्ष इत्यर्थः ।

श्रीभागवतेऽपि—

अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचिन्त्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥

( श्री० भा० १०।१४।२६ )

यथा स्वप्रकाशे सूर्ये तत्सन्निधानासन्निधानाभ्यामेवाहोरात्रकल्पना भवति, तथैवाज्ञानेनैव ब्रह्मणि बन्धकल्पना, तदपवादाच्च मोक्षकल्पना भवति । न ततो भिन्नौ बन्धमोक्षावित्यर्थः । अज्ञानबन्धादिनिवृत्त्यर्थमेव तत्त्वज्ञानापेक्षा भवति । तथा च पारमर्षसूत्रम् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ।'

( गो० सू० १।१।२ )

न्यायरीत्या तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तिस्ततो धर्माधर्मलक्षणप्रवृत्त्यपायः, ततो जन्मापायो जन्मापायादपवर्गो भवति । 'तदत्यन्तविमोक्षोऽपवर्गः' ( न्या० सू० १।१।२२ ) ।

वैशेषिकरीत्या 'तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः' ( वै० सू० ५।२।१८ ) कर्माभावे जन्माभावो मोक्षः । तदभावात् संयोगाभावो हानम् , तद्दृशेः कैवल्यम । विवेकख्यात्या प्रकृतिपुरुषसंयोगाभावस्ततो दृश्यसंसर्गाभावेन मोक्षः ।

सांख्यदृष्ट्वाऽपि प्रकृतिरेव धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यादिषु सप्तरूपैर्बध्नाति पुरुषम् , सत्त्वपुरुषान्यताख्यातिलक्षणेन ज्ञानरूपेण मोचयति च ।

रूपैः सप्तभिरेव बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ इति ।

चार्वाकस्याङ्गनालिङ्गनादिकमेव स्वर्गम्, मरणमेव मोक्षः।

जैनानां कर्मादिबन्धनिवृत्त्या पततोर्ध्वगमनम्, विशिष्टोर्ध्वाकाशेऽवस्थानं वा मोक्षः।

सौत्रान्तिकवैभाषिकयोः—प्रत्यक्षेऽनुमेये वा बाह्यार्थप्रत्यक्षे प्रवृत्त्यालयविज्ञानेषु च सर्वं शून्यम्, सर्वं क्षणिकम्, सर्वं दुःखम्, सर्वं स्वलक्षणमिति भावनाचतुष्टयाभ्यासेन सर्वनैरात्म्यवासनारूपो निरोधो भवति, स एव मोक्षः। प्रवृत्तिविज्ञानशून्य-निरुपप्लवालय-विज्ञानधाराप्रवाहो मोक्षो योगाचारस्य, तस्यापि शान्तिर्मोक्षो माध्यमिकस्य।

प्रायेण बौद्धेषु तदर्थे निर्वाणशब्दः प्रयुज्यते। दीपनिर्वाणवच्चित्ताभिज्वलनसमाप्तिरेव निर्वाणं भवति।

तदुक्तमश्वघोषेण—

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम्॥
तथाकृतो निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम्॥

(अश्वघोषः १६।२८–२९)

वेदवेदान्तदृष्ट्याऽपि तत्त्वज्ञानमेव मोक्षसाधनम्—

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥

(वा० सं० ३१।१८)

तत्त्वज्ञानेनाज्ञाननिवृत्त्या मोक्षः।

'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' (यो० सू० सा० पा० ५)। तादृगविद्योच्छेदेन स्वस्थतैव मुक्तिः, इति योगदृष्ट्या सर्ववृत्तिनिरोधे द्रष्टुः स्वरूपेऽवस्थानं भवति। इतरत्र शान्तघोरमूढवृत्त्युपरागात् तत्सारूप्यं भवति। 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' (यो० सू० १।३) 'वृत्तिसारूप्यमितरत्र' (यो० सू० १।४)।

शैवानां वैष्णवानाञ्च तत्तदिष्टदेवतानां सालोक्य-सारूप्य-सामीप्य-सायुज्यप्राप्तिरेव मोक्षः।

## अद्वैतरीत्या

एवं भगवच्चरणपङ्कजसमर्पणबुद्ध्या निष्कारणानुष्ठितवर्णाश्रमानुसारिभिर्यः श्रौतस्मार्तैश्च विशुद्धसत्त्वः, नित्यानित्यवस्तुविवेकेनातिक्रान्तैषणश्च य इहामुत्रार्थविरक्तः शान्तो

दान्त उपरतस्तितिक्षुः श्रद्धासमाधानसम्पन्नो मुमुक्षुः सद्गुरुमुपसद्य यथाविधि वेदान्तपद्वाच्यानां वेदमूर्धन्यानामुपनिषदां प्रत्यक्चैतन्याभिन्ने परस्मिन् ब्रह्मणि तात्पर्यमुपक्रमोपसंहारादिभिः षड्विधैर्लिङ्गैर्निर्धार्य्य न्यायवैशेषिकोक्तैर्बादरायणीयब्रह्मसूत्रतर्कपादोक्तैस्तर्कैः सुव्यवस्थाप्य सांख्ययोगानुगतैर्वैदिकैर्विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपैर्निदिध्यासनैः स्वात्माभिन्नभगवत्स्वरूपमधिगम्य भगवद्भावापन्नो ब्रह्मविद्वरिष्ठः कृतार्थो भवतीति ।

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।
वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके कुतोऽपरान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥

( कैवल्योपनिषदि ३ )

कं सुखं तद्भिन्नमकं दुःखम् । न अकं दुःखं विद्यते यस्मिन् तन्नाकं निरतिशयसुखात्मकं ब्रह्मैव नाकम् । परेण नाकम्-परमनन्तं सजातीयविजातीयस्वगतभेदशून्यं परमानन्दैकरसं ब्रह्मैव तत्त्वम् , तच्च बुद्धिरूपायां गुहायां निहितम्, तत् साक्षित्वेन स्थितं विभ्राजते । अवेद्यत्वे सत्यपरोक्षतया राजते प्रकाशते । यतयो जितेन्द्रिया निर्जितमातरिश्वनः शान्ताध्यायिनो यद्विशन्ति, तत्त्वज्ञानजनिता विद्या तत्कार्यनिवृत्त्या ब्रह्मात्मनैवाविर्भवन्ति । ते च वेदान्तविज्ञानसुनिश्चितार्था सन्यासयोगात् शुद्धसत्त्वा यतयः परान्तकाले परामृतात् सर्वे परिमुच्यन्ते । भूतभौतिकप्रपञ्चस्य प्रलयेऽन्तो भवतीति । प्रलयोऽन्तकालो भवति, तन्मूलभूतस्याज्ञानस्य तत्त्वज्ञानेन नाशः परान्तकालः । परान्तकाले परं निरतिशयममृतत्वं प्राप्यते येन तस्मात् परामृतात् तत्त्वज्ञानात् सर्वे परिमुच्यन्ते परितो बन्धनेभ्यो जीवन्नेव मुक्तो भवति । घटभङ्गेन घटाकाशस्य महाकाशत्वमिवाज्ञानान्तःकरणाद्युपाधिबाधेन निरुपाधिकब्रह्मात्मभावप्राप्तो भवतीत्यर्थः ।

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥

( कै० ८ )

स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥

( कै० ९ )

तस्यैव ब्रह्मणो ब्रह्मशिवेन्द्रविष्ण्वादिरूपेण प्रादुर्भावो भवति । किं बहुना, भूतं भव्यं सर्वमपि तद् ब्रह्मैव, तस्यैव सर्वात्मस्वरूपत्वात् 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति श्रुतेः ।

रज्वादिसर्पादिमिव सर्वभूतानि चात्मनि सर्पादिविभ्रमेष्वधिष्ठानभूतं गुणमिव सर्वभूतस्थमात्मानं पश्यतो ब्रह्मप्राप्तिर्भवति ।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन् परमं ब्रह्म याति नान्येन हेतुना ॥
( कै० १० )

'ओमित्येतदक्षरमिदं सर्वम्'इत्यादिरीत्या व्यष्टिसमष्टिस्थूलसूक्ष्मकारणस्वरूपं सर्वं जगत् तदुपहितविश्वविराट्तैजसहिरण्यगर्भाव्याकृतात्मकं चैतन्यं चाकारोकारमकारात्मकं प्रणवमात्रं भावयित्वा वाच्यवाचकमयं सर्वं प्रपञ्चं सर्वाधिष्ठाने प्रणवलक्ष्ये ब्रह्मणि प्रविलाप्य निरुपमसत्सुख-संविद्रूपब्रह्मसाक्षात्कृत्य साधको ब्रह्मैव सन् ब्रह्माप्येति । तदेव प्रकारान्तरेणोक्तम्—

आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्याननिर्मन्थनाभ्यासात् पापं दहति पण्डितः ॥
( कै० ११ )

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियान्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥

सूतसंहितायां यज्ञवैभवखण्डेऽस्य व्याख्यानम्—

स एव भगवानीशो माययैवात्मभूतया ।
मुह्यमान इव स्थित्वा स्वस्वातन्त्र्यबलेन च ॥
शरीरमिदमास्थाय करोति सकलं पुनः ।
जाग्रत्संज्ञमिदं धाम प्रकल्प्य स्वीयमायया ॥
राजपुत्रादिवत् तस्मिन् क्रीडया केवलो हरः ।
अन्नपानादिभिः स्त्रीभिः तृप्तिमेति सुरर्षभाः ॥

स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥
( कै० १३, सूतसंहितायाम् )

स्वप्नकाले स वै शंभुर्जीवत्वेन प्रकाशितः ।
सुखदुःखादिकान् भोगान् भुङ्क्ते स्वेनैव निर्मितान् ॥
सुषुप्तिकाले सकले विलीने तमसावृतः ।
स्वस्वरूपमहानन्दं भुङ्क्ते दृश्यविवर्जितः ॥

तत्र देवतानुगृहीतैरिन्द्रियैर्विषयोपलब्धिर्जागरणजाग्रत्संस्कारव्याप्तेऽर्धनिद्रासमावृते साक्षिचैतन्योद्दीपिते मनसि बाह्येन्द्रियनिरपेक्षवासनामयप्रपञ्चोपलम्भः स्वप्नः 'नाहं किञ्चिदवेदिषम्, सुखमहमस्वाप्सम्' इति तमोऽभिभूतस्य विषयविशेषानुपलम्भः प्रस्वापः। समष्टिजाग्रत्प्रपञ्चाभिमानिचेतनो विराट्, व्यष्ट्यभिमानी विश्वः; तथैव स्वप्नाभिमानिनौ तैजसहिरण्यगर्भौ, सुषुप्त्यभिमानिनौ प्राज्ञेश्वरौ भवतः। सर्ववाच्यवाचकातीतं सर्वाधिष्ठानं तुरीयशुद्धमात्मतत्त्वं भवति।

तदप्युक्तम्—

पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः।
पुरत्रये क्रीडति यश्च जीवः ततस्तु जातं सकलं विचित्रम्॥
आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च॥
(कै० १४)

सूतसंहितायां तत्रैव—

इदं धामत्रयं शम्भोर्विभेदेन न विद्यते।
शम्भुरेव तथा भाति नह्यन्यत् परमेश्वरात्॥
जाग्रत्स्वप्नसुषुप्त्याख्यावस्थारूपेण भाति यः।
स विश्वतैजसप्राज्ञ-समाख्यः क्रमशो भवेत्॥
विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक्।
प्राज्ञस्त्वानन्दसाक्षी सन् केवलः सुखलक्षणः॥
त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः।
उभयं ब्रह्म यो वेद स भुञ्जानो न लिप्यते॥
तस्मिन्नेव लयं याति पुरत्रयमिदं ततः।
यत् परब्रह्म सर्वात्मा विश्वस्यायतनं महत्।
सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्॥
(कै० १६)

अत्र तत्त्वं पदार्थयोः स्पष्टमैक्यं बोधितम्। सूतसंहितादिषूपबृंहितं तदेवेति विस्तरस्तत एवावगन्तव्यः।

सच्चिदानन्दघनाद्भगवत एवाव्यक्तमहदहमादीनि भूतानीन्द्रियाणि मनश्च जायन्ते। जाग्रदादीनि धामानि भोग्यानि, भोक्तारश्च तस्मिन्नेव प्रलीयन्ते।

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम्॥
(कै० १९)

एवं ब्रह्मात्मबोधे चिन्मात्रव्यतिरिक्तं बन्धमोक्षादिकमपि नावशिष्यते। तदुक्तं श्रीभागवते—

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्॥
शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया।
स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी॥
विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्।
मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते॥
देहस्थोऽपि न देहस्थः विद्वान् स्वप्नाद् यथोत्थितः।
अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग् यथा॥
(श्री० भा० ११।११।१-३, ८)

एतेन सर्वाधिष्ठानभूतस्यात्मनो मायिकगुणवशादेव बन्धमोक्षकल्पना। वस्तुतस्तु नात्मनो बन्धो न वा मोक्षः। तत एवोक्तं कारिकायाम्—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥

शोकमोहसुखदुःखशुभाशुभदेहादयश्च मायिका एव।

भगवदनिर्वचनीयमायाशक्तिसमुद्भूताभ्यां विद्याऽविद्याभ्यामेव बन्धमोक्षव्यवस्था भवति। स्वप्नख्यातिवदेव संसृतिख्यातिरपि मायिक्येव, न वास्तवी। कुमतिः स्वप्नदृगिवादेहस्थोऽपि देहस्थो भवति। तत्त्ववित् स्वप्नोत्थित इव देहस्थोऽप्यदेहस्थो भवति।

गुणात्मकैरिन्द्रियैर्गृह्यमाणेषु गुणात्मकेषु विषयेषु निर्विकार आत्माभिमानशून्यत्वादलिप्त एव भवति। एवमेव गुणभाव्येन कर्मणा दैवाधीनशरीरे वर्तमानोऽबुधस्तादात्म्याभिमानवान् भूत्वा बद्ध्यते।

एवं विरक्तः शयने आसनाटनमज्जने।
दर्शन-स्पर्शन-घ्राण-भोजन-श्रवणादिषु॥
न तथा बद्ध्यते विद्वांस्तत्र तत्रादयन् गुणान्।
प्रकृतिस्थोऽप्यसंसक्तः यथा खं सवितानिलः॥
(श्री० भा० ११।११।११-१३)

वैशारद्येक्षयासङ्गशितया छिन्नसंशयः ।
प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्त्तते ॥

तत्रैव—

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ।
कथमन्योऽन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥
( श्री० भा० ११।१३।२७ )

इति सनकादिप्रश्नस्योत्तरप्रसङ्गे भगवता हंसेनोक्तम्—

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥

अत एव—

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ।
जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥
गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥
जाग्रत् स्वप्नः सुषुप्तञ्च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥
यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ।
मयि तुर्य्ये स्थितो जह्यात् त्यागस्तद्गुणचेतसाम् ॥
अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्य्ययम् ।
विद्वान् निर्विद्य संसारचिन्तां तुर्य्ये स्थितस्त्यजेत् ॥
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥
ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥
( श्री० भा० ११।१३।२४-३४ )

प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।
अन्योऽन्यपाश्रयात् कृष्ण दृश्यते न भिदा तयोः ॥

प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ।
एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि ॥
छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ।
( श्री० भा० ११।२२।२६-२७ )

इति उद्धवप्रश्नस्य समाधानावसरे भगवता सर्वमेतन्मयि मायाविकल्पोत्थं मत्तः पराधियां व्यर्थमपि नोपरमते ।

दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिद्ध्यति यः स्वतः खे ।
आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः ॥
आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥
( श्री० भा० ११।२२।३१-३३ )

विकल्पोपशान्तये भगवता सजातीयादिभेदत्रयशून्याद् ब्रह्मात्मस्वरूपान्नित्यज्ञानादेव सर्वस्योद्भवमुक्त्वा तत्रैव सर्वाप्ययः प्रदर्शितः । तत्र 'आसीज्ज्ञानमथो ह्यर्थं एक एवाविकल्पितम्' इति रीत्या पूर्वं ज्ञानं ब्रह्मात्मकमथो ह्यर्थः, अर्थोपादानभूता शक्तिः तत्त्वान्वयत्वाभ्यां निर्वचनानर्हा ब्रह्माभिन्नैवासीत्, तत एवार्थाविकल्पितमेव ज्ञानमासीत् । तदेव द्विधाभूतम्, तत्रैकतरो ह्यर्थः, सैवोभयात्मिका प्रकृतिः, ज्ञानमेव पुरुषो व्यपदिश्यते—

तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥
( श्री० भा० ११।२४।४ )

भगवदधिष्ठितायाः प्रकृतेस्तमो रजः सत्त्वमिति गुणा जातास्तेभ्यः सूत्रात्मको महान्, महतोऽहङ्कारः । वैकारिकतैजसतामसभेदभिन्नादहङ्कारादेव तन्मात्रेन्द्रियमन आदीनामुद्भवः, ततश्च ब्रह्माण्डादिक्रमेण सर्वप्रपञ्चोत्पत्तिः—

यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य तत् ।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥
यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम् ।
आदिरन्तो यदा यस्य तत् सत्यमभिधीयते ॥
प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।
सतोऽभिव्यञ्जकः कालः ब्रह्मतत्त्रितयं त्वहम् ॥

अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ।
अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ।
लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥
रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ।
अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ॥
योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ।
शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥
स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।
तेऽव्यक्ते प्रलीयन्ते तत् काले लीयतेऽव्यये ॥
कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥
( श्री० भा० ११।२४।१७–२७ )

यद्यप्येवमेवानुलोमविलोमाभ्यां सृष्टिप्रलयपारम्पर्यमनादिकालमारभ्य प्रवृत्तम्, तथापि सत्त्वपुरुषान्यताप्रसंख्यानलक्षणाद् वेदान्तविज्ञानाद् वैकल्पिको भ्रमः सर्वथैव प्रलीयते। तदपि तत्रैवोक्तम्—

एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥
( श्री० भा० ११।२४।२८ )

किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
वाचोदितं तदनृतं मनसा ध्यानमेव च ॥
तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः ।
मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥
आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥
( श्री० भा० ११।२८।४–६ )

इत्यादिप्रपञ्चेन स्वप्रकाशनित्यानन्तज्ञानानन्दस्वरूपिणः प्रत्यगभिन्नब्रह्मण एव वस्तुत्वं तद्भिन्नस्यावस्तुत्वं मिथ्यात्वं चोक्तम्। विवेकविज्ञानवतस्तत्त्वविदुषो जीवतोऽपि बाह्यदृष्ट्या व्यापारवतोऽपि निर्विकारत्वमेवोक्तम् ।

समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ।
विक्षिप्यमाणैरुत किन्नु दूषणं घनैरुपेतैर्विगतै रवैः किम् ॥
( श्री० भा० ११।२८।२५ )

मयि सुविविक्ते परमात्मनि धामनिवासो यस्य तस्य गुणपरिणामैः करणैः मन इन्द्रियैः समाहितैः को गुणो भवेत्, विक्षिप्यमाणैस्तैः किं दूषणं भवेत् ? एवं वस्तुस्थितौ सत्यामपि ब्रह्मात्मनिष्ठासम्पत्तये सङ्गः परिवर्जनीयः ।

तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन यावद् रजो निरस्येत मनःकषायः ॥
( श्री० भा० ११।२८।२७ )

नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ।
अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते ॥
आत्मा गुणोऽव्ययः शुद्धः स्वयं ज्योतिरनावृतः ।
अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥
( श्री० भा० ११।२८।१०।११ )

इत्युद्धवप्रश्नस्योत्तरे भगवता देहेन्द्रियप्राणादिभिरात्मनः सन्निकर्षमूलकः संसारोऽपार्थ एवाविवेकिनो भवतीत्युक्तम्—

यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।
संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥

संकल्पमूलः प्रपञ्चोऽविद्यमानोऽपि ध्यायमानस्य स्वप्नेऽनर्थागम इवाभाति ।

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥

अप्रतिबुद्धस्यानर्थकरोऽपि प्रपञ्चः प्रबुद्धस्य मोहाय न कल्पते तद्वत्—

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥

जन्ममृत्युजरादयः शोकहर्षभयक्रोधलोभमोहस्पृहादयश्च अहङ्कारविशिष्टस्यैव चिदात्मनः साभासस्याहङ्कारस्यैव वा भवन्ति, नात्मनः शुद्धस्य ।

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥
( श्री० भा० ११।२८।१२-१५ )

निर्गुणोपासनया श्रवणादिभिरात्मसाक्षात्कारो जायते । सगुणसाकारपरब्रह्मोपासनया भगवदनुग्रहेण तादृग्ब्रह्मात्मसाक्षात्कारो भवति ।

तदुक्तम्—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
( गीता, १०।१०-११ )

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
( गीता, १८।५५ )

ननु भक्तिप्रसंख्यानादिभावनाजनितस्य साक्षात्कारस्य विधुरपरिभावितकामिनीसाक्षात्कारवदप्रमात्मकत्वेन कथमविद्यातत्कार्य्यनिवर्त्तकत्वम् ? येषामेकाग्रमनःसहकृतमहावाक्यहेतुकत्वम्, येषां वा महावाक्यसध्रीचीनसमाहितमनोहेतुकत्वं साक्षात्कारस्य, तत्रोभयोः प्रमाणत्वाङ्गीकारः प्रामाणिकसम्मतः । यथा रत्नसामान्यज्ञानप्रमाणस्यैव चक्षुषो रत्नशास्त्राभ्यासजन्यसंस्कारसध्रीचीनस्य तस्य रत्नतत्त्वसाक्षात्कारहेतुत्वम् । यथा वा शब्दसामान्यज्ञानजनकस्य श्रोत्रस्य गान्धर्वशास्त्राभ्यासजसंस्कारसचिवस्य तस्यैव षडजत्वादिबोधहेतुत्वं भवति । तथैव आत्मसामान्यबोधजनकस्य मनसो वेदान्ताभ्याससंस्कारसचिवस्यैकाग्रमनस आत्मयाथात्म्यबोधजनकत्वं नानुपपन्नम् । न चैव भक्तेः प्रसंख्यानस्य वा प्रमाणत्वमिति चेत् , न;

"भक्त्या मामभिजानाति, ददामि बुद्धियोगम्" इत्यादिप्रमाणैर्भक्त्यनुकूलितभगवदनुग्रहेणाविर्भूतमहावाक्येन, तत्सहकृतेन मनसैव वा साक्षात्कारोत्पत्तौ बाधाभावात् । न च तन्न संभवतीति वाच्यम् ; 'यो वै ब्रह्माणं विदधाति पूर्वम्' इति मन्त्रेण यथा ब्रह्मणो हृदि वेदाविर्भावः श्रूयते तथा महावाक्याविर्भावेऽपि बाधाभावात्, आत्मबुद्धिप्रकाशमिति रीत्या भगवत एवात्मबुद्धिप्रकाशकत्वोक्तेश्च ।

किञ्च, तपःसमाधिभिर्मन्त्रमन्त्रार्थद्रष्टृत्वं महर्षीणां प्रमाणसिद्धमेव, "ऋषिर्दर्शनात्, ऋषयो मन्त्रद्रष्टारः" इति निरुक्तादिवचनेभ्यः। न च मन्त्रदर्शनादीनां भ्रान्तिमूलकत्वं संभवति, प्रमाणसिद्धत्वात्। अपि च सर्वान्तर्यामिणो भगवतोऽनुग्रहेणैवाग्नेर्दाहकत्वं वायोश्चालयितृत्वं केनोपनिषदि प्रसिद्धम्। चक्षुःश्रोत्रमनआदीनामपि स्वविषयप्रकाशकत्वं तदनुग्रहेणैवेत्यपि 'श्रोत्रस्य श्रोत्रम्, चक्षुषश्चक्षुः, मनसो मनः' इति श्रुतिसिद्धमेव। माण्डूक्योपनिषदर्थसाक्षात्कारार्थं वाक्यमनोयुक्तस्यापि गौडपादस्य तपसा नारायणप्रसादनं प्रसिद्धमद्वैतसम्प्रदायेऽपि।

श्रीभागवते च—

अथापि ते देव पदाम्बुजद्वयं प्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्॥

गीतायां सगुणोपासकस्य योगवित्तमत्वं तदभिप्रायेणैवोक्तम्—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्तमा मताः॥ इति।

(गीता, १२।२)

वेदान्ताभ्याससाध्यनिर्गुणनिष्ठायाश्चरमफलरूपत्वेऽपि देहवतां तत्राधिकतरक्लेशवहत्वान्न तथोत्कर्षः। श्रीभागवते श्लोकद्वयेन भगवत्स्वरूपसाक्षात्कारस्य प्रकारद्वयं स्पष्टमुक्तम्—

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये।
वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसान्वीयुरकुण्ठधिष्ण्यम्॥
तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते॥

अत्र प्रथमेन सगुणोपासकस्यापि बुद्धि-शुद्धि-वैराग्य-परमात्मबोधप्रतिलम्भपूर्वकमकुण्ठधिष्ण्यभगवत्पदप्रतिपत्तिरुक्ता। द्वितीयेनात्मसमाधियोगबलेन बलिष्ठप्रकृतिविजयपूर्वकभगवत्प्रतिवेश उक्तः। एवं फलसाम्येऽपि 'तेषां श्रमः स्यान्न तु सेवया ते' इति क्लेशराहित्यसाहित्याभ्यामेव वैषम्यं बोधितम्। तथा च निरावरणब्रह्मात्मनावस्थानम्। निरावरणब्रह्मैव मोक्ष इत्येव निष्कर्षः। सुषुप्तौ ब्रह्मप्राप्तावपि निरावरणत्वाभावात् पुनरुत्थानम्।

यदुक्तम्—"सुषुप्तिरपि न सर्वात्मना अद्वैतब्रह्मात्मभावोदाहरणं सम्भवति, अज्ञानादिसत्त्वादिति"; तच्चेष्टमेव। तथापि जागरस्वप्नापेक्षया निष्प्रपञ्चत्वेन तस्येष्यमाणता भवत्येव।

अत्यन्तनिष्प्रपञ्चस्य अद्वितीयब्रह्मात्मभावस्य इष्यमाणता तु कैमुतिकन्यायेन सिद्ध्यति। यथा निम्बकीटो निम्बरसाभिज्ञ एव भवति, न तद्व्यतिरिक्तसितादिरसाभिज्ञः, प्रत्युत स तमपलपति, द्वेष्टि वा; तथैव विषयिणो विषयरसाभिनिविष्टाः सन्तो न जानन्ति निर्विषयसुखम्, प्रत्युत तमपलपन्ति; द्विषन्ति च।

यदि निर्विशेषब्रह्मात्मके मोक्षे पुण्ड्रेक्षुदण्डः, आम्रफलम्, कान्ता कटाक्षादिर्वा नास्ति, तर्हि स निरर्थकः। यथा भिक्षुक्या भिक्षात्यागभयात् सम्राज्ञीपदमपि त्यज्यते, तथैव विषयत्यागभयादज्ञैर्मोक्षपदमपि व्यक्तुं प्रयत्यते।

अपि दुर्गे महारण्ये शृगालत्वं स इच्छति।
न तु निर्विषयं मोक्षं कामयेय कदाचन॥

इति हि रागिगीतम्। तेषां रागिणां बुद्धौ निर्विषयमपि सुखं भवतीति प्रत्याययितुं सुषुप्त्युपन्यासः। तत्र विषयाभावेऽपि विषयान् परित्यज्यापि इन्द्रादयः प्रवर्तन्ते। सुषुप्तिमन्तरा सुधा-कल्पवृक्ष-चिन्तामणि-कामधेनु-विमानाप्सरोऽधरामृतादिसम्पन्ना अप्युद्विजन्ते, भिषक्प्रवरांश्चान्वेषन्ते। श्रुतिरपि "सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति' इति सत्सम्पत्त्यैव सषुप्तेराश्रयणीयतामाह—'यथा सूत्रेणानुबद्धः शकुनिर्दिशं विदिशं प्रेत्यान्यत्र आयतनमलब्ध्वा विश्रान्तये बन्धनाधारमुपाश्रयते;

तथैव जागर-स्वप्नपरिभ्रमणपरिश्रान्तो जीवो विश्रमाय प्राणात्मकं सद्रूपं परमात्मानमेवोपाश्रयत इत्युक्तम्। 'प्राणबन्धनं हि सौम्यमनः' इति प्रसिद्धम्। अत्र बध्यतेऽस्मिन्निति बन्धनम्, बन्धनाधारः प्राणः, अव्याकृतो बन्धनं यस्य तन्मनः, मन उपाधिको जीव इत्यर्थः।

यदुक्तम्—"आत्मनो यदि सुखरूपत्वं तर्हि संसारदशायामपि कुतो न सुखोपलब्धिः" इति। तदपि तुच्छम्; आवरणविक्षेपप्रतिबन्धेन तदनुपलब्धेः। सुषुप्तौ विक्षेपराहित्येन आंशिकसुखोपलब्धिः। मुक्तौ त्वावरणविक्षेपयोरुभयोरप्यभावेन नितरां सुखरूपताभिव्यक्तिः।

यदुक्तम्—"अज्ञाननिवृत्तिरूपमोक्षस्य आत्मस्वरूपत्वेन तस्येदानीमपि सत्त्वेन कथं न सुखाभिव्यक्तिः? तद्भिन्नत्वे तस्य मिथ्यात्वेन संसारतुल्यतैव स्यादिति।" तदपि न; घटाभावस्य यथा स्वाधिकरणभूतलरूपत्वेऽपि घटसत्त्वे न तदभिव्यक्तिः। तथैव अज्ञानसत्त्वेऽज्ञाननिवृत्त्यधिकरणभूतात्मनोऽनभिव्यक्तिरिति। अत एव ज्ञातत्वोपलक्षितस्य आत्मनो मोहनिवृत्तिरूपतोक्ता। "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति। ज्ञानेन अज्ञाननिवृत्तौ

तु ज्ञातता भवति। वृत्त्यात्मकज्ञानस्य नाशाद् यद्यपि ज्ञातताऽपि विनश्यति, तथापि ज्ञातताया उपलक्षणत्वेन ज्ञातत्वोपलक्षितस्यात्मनो मोहनिवृत्तिरूपतोक्ता।

यदुक्तम्—"मोक्षेऽन्यस्यासत्त्वाद् व्यावर्त्यासत्त्वेन उपलक्षणत्वानुपपत्त्या शून्यभावस्य अपुरुषार्थत्ववद् अद्वितीयाखण्डात्मभावस्यापि अपुरुषार्थत्वमेवेति। तत एव शून्यवादिनामिव अद्वैतिनामपि अज्ञानावशेष एव मन्तव्यः, इति।" तत्तुच्छम्; संसारकालिक-मोहविशिष्टस्य आत्मन एव तद्व्यावर्त्यसत्त्वेन उक्तदोषनिरवकाशात्।

यदप्युक्तम् "शून्यवादिरीत्या ब्रह्मणोऽपि मिथ्यात्वेन बाध्यत्वमेव, परं मिथ्यात्वस्यापि सत्यत्वे सर्वशून्यत्वानुपपत्त्या मिथ्यात्वमेव। तेन ब्रह्मवादिसम्मतं ब्रह्मसत्यत्वमेवाङ्गीकृतं स्यात्। तथैव अद्वैतिभिरपि ब्रह्मणोऽबाध्यत्वमङ्गीक्रियते। ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वेन ब्रह्मभिन्नस्य अबाध्यत्वस्यापि मिथ्यात्वेन ब्रह्मणोऽपि बाध्यत्वेन मिथ्यात्वमेवाङ्गीकृतं स्यादिति, जगन्मिथ्यात्वं तु उभयसम्मतमेवेति"। तदपि तुच्छम्; अबाध्यत्वादिधर्माणां मिथ्यात्वेऽपि अबाध्यत्वोपलक्षितस्यात्मनो बाधकप्रमाणाभावादेव सत्यत्वोपपत्तेः। एवमेव सत्यत्वस्यापि मिथ्यात्वं यद्यपि; तथापि निरधिष्ठानकल्पनासम्भवेन सर्वदाधिष्ठानबाधाभावाभिप्रायेण परमार्थसत्यत्वव्यवहारः।

वस्तुतस्तु स्वरूपभूतमेव सत्यत्वादिकम्। अन्यथा सत्यत्वादेः सत्यत्ववति वृत्तिस्तद्रहिते वा? नान्त्यः; व्याहतत्वात्। नाप्याद्यः; अनवस्थाऽऽत्माश्रयादिदोषदूषितत्वात्। तस्मात् स्वरूपभूतमेव मन्तव्यम्। जगतस्त्वसत्त्वं मिथ्यात्वं शून्यवादिनये। तत्त्वान्यत्वाभ्यां निर्वचनानर्हत्वं मिथ्यात्वम् अद्वैतिनये।

न हि ब्रह्मणोऽबाध्यत्वमिथ्यात्वेन वेदप्रामाणिकत्वमिथ्यात्वेन वा ब्रह्मणो बाध्यत्वम्, वेदाप्रामाणिकत्वं वा सिद्ध्यति। एकस्मिन् धर्मिणि विरुद्धयोर्धर्मयोरन्यतरनिषेधेऽन्यतरसत्त्वनियमानभ्युपगमस्योक्तत्वात्। यत्र निषेध्यतावच्छेदकभेदो भवति, तत्रैव तन्नियमसत्त्वात्।

यत्र त्वेकस्मिन् गजे गोत्वाश्वत्वयोरुभयोरपि गजत्वात्यन्ताभावव्याप्यत्वरूपस्य निषेध्यतावच्छेदकस्यैक्यम्, तत्र तत्रोभयोरेव निषेधः। यथा वा स्वप्ने गजतदभावयोरुभयोरपि निषेध्यतावच्छेदकस्य स्वाप्नत्वस्य समानत्वेन निषेधः। सर्वस्यैव स्वप्नस्य मिथ्यात्वनिश्चयेन गजतदभावयोरुभयोरपि स्वाप्नत्वेन मिथ्यात्वमेव। नात्रैकमिथ्यात्वेन अपरसत्त्वमावश्यकम्। तेन बाध्यत्वाबाध्यत्वप्रामाणिकत्वाप्रामाणिकत्वादीनां निषेध्यतावच्छेदकस्य दृश्यत्वस्य समानत्वेन समेषां मिथ्यात्वमेव। तेन नाबाध्यत्वप्रामाणिकत्वमिथ्यात्वेन बाध्यत्वाऽप्रामाणिकत्वसिद्धिः। नेह नानाऽस्तीति श्रुत्या दृश्यमात्रस्य निषेधात्।

यदुक्तम् "दृश्यत्वेन मिथ्यात्वे ब्रह्मणोऽपि ज्ञेयत्वेन दृश्यत्वाद् मिथ्यात्वं प्रसज्येत, ज्ञातत्वेनोपलक्षित इति ब्रह्मणोऽपि ज्ञातत्वाभ्युपगमात्" इति, तदपि तुच्छम्; फलव्याप्यत्वस्यैव दृश्यत्वेन ब्रह्मणो वृत्तिविषयत्वेऽपि फलव्याप्यत्वाभावेन दृश्यत्वानभ्युपगमात् वृत्त्यावरणभङ्गेन स्वप्रकाशत्वेन ब्रह्मणः फलव्यक्तिमन्तराऽपि प्रकाशमानत्वात्। प्रकाशसंसर्गेण प्रकाशमानस्य दृश्यत्वेऽपि ब्रह्मणः प्रकाशरूपत्वेन प्रकाशमानस्यापि दृश्यत्वाभावात्। तदुक्तम्—

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥ इति।

## भक्तिनिरूपणम्

भक्तिः पञ्चमः पुरुषार्थः, धर्मार्थकाममोक्षविमुखैरप्यर्थमानत्वात्;

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा समञ्जसत्वाविरहय्य काङ्क्षे ॥

इति भागवतवचनात्। यथा बन्धनिवृत्त्युपलक्षितं ब्रह्मैव मोक्षाख्यः पुरुषार्थो भवति, तथैव द्रुतचित्ताभिव्यक्तिमत्पूर्णतम पुरुषोत्तम एव भक्त्याख्यः पुरुषार्थः। तदुक्तं भगवद्भक्तिरसायनकृता—

भगवान् परमानन्दस्वरूपः स्वयमेव हि।
मनोगतस्तदाकाररसतामेति पुष्कलम् ॥

नवरसमिलितं वा केवलं वा पुमर्थं
परममिह मुकुन्दे भक्तियोगं वदन्ति।
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं
तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ॥ इति।

भक्तिरसे भगवान् परमानन्दस्वभावः सर्वदा विद्यमान एव आलम्बनविभावः, तस्य नित्यत्वात् सर्वगतत्वाच्च। श्रवणादिना सगुणसाकाररूपेणापि रसिकानां हृत्सरोजे तत्प्रादुर्भावस्मरणात्। तदुक्तम्—

त्वं भावयोगपरिभावितहृत्सरोजे
आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम्।
यद्यद्धिया त उरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥

"प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।"

अतो भगवद्रसानुभवः सुन्दर उक्तः ।

"कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वं हृदि छिद्रवत् सतः ।।"

रसिकानां हृदये भगवद्गुणगणवर्णनश्रवणादिभिर्भावराज्यस्याऽऽविर्भावो भवति । यत्र भावमयः सोपकरणो भगवान् व्यज्यते, यथायोग्यं विभावाद्यभेदबुद्धिरपि तत्र जायते । भावनाबलादेव विभावादीनां साधारण्यादिकम् ।

यद्यपि भक्तिः आह्लादिनी शक्तिरूपा, नित्या, विभ्वी च; तथापि कथासारश्रवणजनितद्रुतचित्तजनितवृत्तावेव अभिव्यज्यत इति तदर्थं वृत्तिरपेक्षिता ।

सविकल्पकं ज्ञानं चाक्षुषादिभेदेन बुद्धिवृत्त्या जन्यते । तत्र नेत्रनिमीलने कृते बहिर्दृष्टिपदार्थस्येव कश्चिदाकारो नेत्रान्तर्भासते । स आकारो बाह्यवस्तुनः आश्रयमविहाय, तत्र तस्या शक्यवचनत्वात् । अतः स आन्तरस्यैव कस्यचन भवितुमर्हतीति तदाश्रयत्वेन साङ्ख्यैराहङ्कारिकं तत्त्वान्तरं वृत्तिनामकं कल्प्यते ।

नैयायिकादयस्तु—नयनकिरणानां निर्गमनेन विषयसन्निकर्षात् ज्ञानम् । तेन च भावना–संस्काराख्यं गुणान्तरं चरमस्मृतिनाश्यमात्मनि अङ्गीकुर्वन्तो वृत्तिपदार्थमेव नेच्छन्ति । तत्तु नेत्रान्तरानुभवस्य सार्वजनीनत्वादप्रयोजकमिति वृत्तिः सर्वथाऽभ्युपेयैव ।

भक्तिरसायनरीत्या तु यथा स्वभावकठिनं जतुद्रव्यं तापकाग्न्यादिसम्बन्धेन जलमिव द्रुतं चीनांशुकशतक्षालितं निर्मलं भवति । तत्र निक्षिप्तहिङ्गुलादिरङ्गस्य सर्वांशप्रवेशः स्थिरता च भवति । पुनः काठिन्ये, पुनर्द्रवतायां वा न रङ्गविश्लेषो जतुनो रङ्गस्य वाञ्छायां सत्यामपि । तथैव सावयवं मध्यमपरिमाणं चित्तमपि काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादिभिस्तापकैर्द्रुतं भवति, तच्छान्तौ पुनः कठिनं भवति । तत्र द्रुते चित्ते वस्तुनो यः स्वाकारः क्षिप्यते, स एव संस्कार-वासना-भाव-भावनादिशब्दैर्व्यपदिश्यते । द्रवीभावपूर्वकं चित्तस्य विषयाकारतापत्तिर्भवति । तदुक्तं भगवद्भक्तिरसायने—

मूषासिक्तं यथा ताम्रं तन्निभं दृश्यते तथा ।
घटादि व्याप्नुवच्चित्तं तन्निभं जायते ध्रुवम् ।।
चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ।।

काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादयः ।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं तु तत् ॥
द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुनः ।
संस्कार-वासना-भाव-भावना-शब्दभागसौ ॥
शिथिलीभावमात्रं तु मनो गच्छत्यतापकैः ।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥
द्रवतायां प्रविष्टं सत् यत् काठिन्यदशां गतम् ।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥

यथा तत्तत्प्रतिमाद्याकारघटितोदरे मृदादिसंस्थानविशेषे मूषा-[पुटपाकयन्त्रादि-] निषिक्तं द्रुतताम्रादितत्तदुदरस्थसंस्थानाकारं भवति, तथैव रागद्वेषादिना द्रवीभूतं चित्तं चक्षुरादिद्वारा यत्रैव घटादिविषये सिक्तं भवति, तत् तद्विषयाकारं सम्पद्यते। यथा वा व्यञ्जकः सौराद्यालोको व्यङ्ग्यस्याकारतां याति, तथैव सर्वार्थव्यञ्जकत्वात् मनोऽपि तत्तद्व्यङ्ग्याकारं भवति। तेन विषयस्य बाह्याकारवद् आन्तरोऽपि मनोमयः कश्चनाऽऽकारो भवति। बाह्यस्याभेदेऽपि मनोमयाकारस्य भेदेनैव एकस्यामेव योषिति भार्या, स्वसा, ननान्दा, मातेत्यादयो भेदा लक्ष्यन्ते। तत्र बाह्यपिण्डस्य नाशेऽपि मनोमयपिण्डाकारस्तिष्ठति। तेन स एवाकारः 'स्थायी' इत्युच्यते।

यद्विषये कामादीनामुद्रेकस्तद्विषय एव द्रवीभावः। कामाद्यभावे सौरालोकादिभिरल्पतापकैरिव विषययोगे शिथिलीभावमात्रं भवति। वासनारूपेण तत्र वस्तुप्रवेशो न भवति। द्रवतायां प्रविष्टो वस्त्वाकारः काठिन्यदशापर्यन्तं स्थितः पुनर्द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि प्रकाशमानत्वात् चेतसा न त्यज्यते। शैथिल्यावस्थायां तु न प्रविशति। प्रविष्टोऽपि त्यज्यते। तेन वासनाभासादिशब्दैस्तद्व्यपदेशः।

द्रवावस्थाप्रविष्टविषयाकारस्य अनपायित्वेन स्थायिभावशब्देन व्यवहारः। विभावादिसंयोगेन अभिव्यक्तस्थायिभाव एव श्रोतृवर्ण्ययोः सभ्याभिनेययोर्वा भेदतिरोधानेन सभ्यश्रोतृगत एव सन् परमानन्दसाक्षात्कारेण रसतामाप्नोति। तदुक्तमेव—

स्थायिभावगिरातोऽसौ वस्त्वाकारोऽभिधीयते ।
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥ इति ।

ननु कान्तादिविषयाणां शृङ्गारादिरसानां तदाकारस्य सुखरूपत्वाभावेन कथं सुखरूपत्वमिति चेत्, न; "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति" ( तैत्ति० उप० ३।६ ) इत्यादिश्रुत्या परमानन्दरूपस्य ब्रह्मण एव सर्वजगदुपादानत्वाद् मृदभिन्नघटवत् सर्वस्यैव प्रपञ्चस्य परमानन्दरूपत्वेन कान्ताद्याकारस्थापि सुखरूपत्वेन दोषाभावात्। 'सर्वं खल्विदं ब्रह्म' ( छान्दो० ३।१४।१ ), 'इदं सर्वं यदयमात्मा' ( बृह० २।४।६ ), 'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( ब्रसू० २।१।१४ ) इति श्रुतिसूत्रेभ्यः। न च तर्हि प्रपञ्चस्य अखण्डाद्वयानन्दाकारेण भानं स्यादिति वाच्यम्; अविद्यानिमित्तावरणविक्षेपाभ्यां कार्याकारतया भानेन पूर्णानन्दात्मना अभानात्।

ननु तर्हि कथं तद्भानमिति चेन्न; तदर्थमेव प्रमाणवृत्त्यपेक्षणात्। तथा हि अज्ञातज्ञापकत्वेनैव प्रमाणानां प्रामाण्येन जडस्य भानाप्रसक्त्या तत्रावरणकृत्याभावेन अज्ञातत्वासम्भवात्, स्वप्रकाशतया भासमानचैतन्यस्यैव आवृतत्वाभ्युपगमेन सत्त्वस्थया कान्ताद्याकारया प्रमाणवृत्त्या तदावरणभङ्गेन कान्ताद्यवच्छिन्नचैतन्यस्य स्वप्रकाशसुखरूपत्वेन भानोपपत्तेः। अनवच्छिन्नचैतन्याभानान्न सद्यो मुक्तिः, स्वप्रकाशत्वभङ्गो वा। कान्ताद्यवच्छिन्नचैतन्यमेव द्रवावस्थ-सात्त्विकमनोवृत्त्युपारूढतया भावत्वं प्राप्य रसतामाप्नोति इति न लौकिकरसस्यापि परमानन्दरूपत्वानुपपत्तिः।

लौकिकरसे विषयावच्छिन्नस्य चैतन्यस्य स्फुरणादनवच्छिन्नचिदानन्दाप्रस्फुरणाद् न्यूनतैव। भक्तिरसे तु अनवच्छिन्नचिदानन्दघनस्य स्फुरणात् तद्वैशिष्ट्यम्। तत्र लौकिकरत्यादेर्लौकिकमेव कारणं काव्यनाट्योपदर्शितमिति 'विभावाः' उच्यन्ते, कार्यञ्च तदुपदर्शितम् 'अनुभावाः'। सहकारिणश्च लौकिका एव तथोपदर्शिताः 'व्यभिचारिणः' उच्यन्ते। तदेतत् त्रयमेव सभ्यनिष्ठस्य अलौकिकरत्यादेः समुच्चितमुद्बोधकम्। ज्ञातस्वपरसम्बन्धात् लौकिकाद्भावादन्यमेवास्य अलौकिकं भावं सभ्यनिष्ठं सामान्यतः पुरुषनिष्ठस्त्रीगोचररतित्वादिरूपेण त्रयोऽप्यमी बोधयन्ति। तेन विभावादिभावत्रितयसंसृष्टस्थायिभावावगाहिनी समूहालम्बनात्मिकैका सात्त्विकी मतिरुत्पद्यते, केषाञ्चिन्मते सैव।

सिद्धान्तरीत्या तु तदभिव्यक्तं सुखं रसः। सुखस्य रसत्वमते रसव्यञ्जकता तस्याः। विभावानुभावव्यभिचारिभावानां प्रत्येकं विज्ञानं रसस्वरूपाभिव्यक्तौ कारणम्। उभयत्र स्थायिभावो रस इति प्रयोगस्तु लाक्षणिक एव। तदुक्तम्—

विभावैरनुभावैश्च व्यभिचारिभिरप्युत।
स्थायिभावः सुखत्वेन व्यज्यमानो रसः स्मृतः॥

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥
ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम् ।
उपकृत्य च गच्छन्ति ते मवा व्यभिचारिणः ॥

विभावैरीषद्रसाभिव्यक्तिः, अनुभावैः स्फुटा, व्यभिचारिभिश्च स्फुटतरा। तेन विभावादित्रितयसंसृष्टस्थायिभावावगाहिसमूहालम्बनात्मक - सात्त्विकमत्यभिव्यक्तसुखरूपो रसः, तादृशी मतिरेव वा रसः। तादृशरसस्य सुखरूपत्वात्तस्य चात्मरूपत्वात् यद्यप्याधारो न भवति, तथापि तद्व्यञ्जिकाया वृत्तेः सामाजिकमनोनिष्ठत्वव्यपदेशः। तत्र काव्यार्थानुकार्य-नायकादिनिष्ठा रत्याद्याः स्थायिनो लौकिकाः, तद्बोद्धृसभ्यनिष्ठास्त्वलौकिकाः। आद्या यथायोग्यं सुखदुःखादिहेतवः। अन्त्यास्तु सुखमात्रैकहेतवः। बोद्धृनिष्ठानां दुःखाहेतुत्वादेव सुखमात्रकहेतुत्वात् करुणादीनामपि रसत्वाभ्युपगतिः।

अभिव्यक्तत्वेन स्वप्रकाशत्वात् काव्यजन्या वैयञ्जनिकी निर्विकल्पकसुखात्मिका प्रतीतिर्जायते। नित्यस्वप्रकाशात्मरूपत्वाभ्युपगमरूपेणैव तत्र कार्यज्ञाप्यवैधर्म्यमपि सङ्गच्छते।

श्रुतिदुष्टादिदोषाभावोऽपि रसव्यञ्जकसामग्र्यामन्तर्भूतः। तेन गुणालङ्काररीतीनां विभावादिभावानां बोधको निर्दुष्टः काव्यरूपः शब्दो व्यञ्जनया रसस्य व्यञ्जकः। नाट्यस्थले तु नाट्यमेव रसत्वव्यञ्जकम्। 'दशमस्त्वमसि' इति वाक्योत्थाऽपरोक्षवृत्तिवत् तादृक्काव्य-रूपशब्दजन्या सुखगर्भिणी अपरोक्षरूपा वृत्तिरुत्पद्यते। एतेन शाब्दत्वेऽपि रसप्रतीतेरप-रोक्षता युज्यते। 'रसो वै सः' इत्यादिश्रुत्यनुरोधेन नित्यं सुखमेव रसः सिद्ध्यति।

विभावानुभावसञ्चारिभिर्व्यक्तः स्थायी भावो रसः। तत्र साङ्ख्यरीत्या आहङ्कारिके चित्ते कारणविशेषादुद्बुद्धसत्त्वे स्वेतरगुणावभिभूय प्रकाशमाने जातुचिदनुभूतरत्यादिस्थायि-संस्कारोऽपि उद्बुद्धीभूय प्रतीयमान उपचीयमानः पुष्यमाणोऽभिन्नायमानो द्विष्टचिच्छक्त्या स्वीयत्वेन भुज्यमानो रसो भवति, जडत्व-परप्रकाश्यत्वादिना उपनिषदुक्तरसाद् भिन्न एव पर्यवस्यति।

अन्येषां तु भौतिके द्रुते चेतसि मुद्रितो रत्यादिस्थाय्याकारः स्वोद्बोधकमहिम्ना तिरस्कृतावरणचिद्विशिष्टो रसः।

अन्यैस्तु स्थाय्यवच्छिन्नभग्नावरणचिदेव रसः स्वीक्रियते।

यदुक्तम्—अत्र पक्षे 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति वाक्यघटकायम्पदार्थ-कर्तृकलाभकर्मण एव रसत्वेन विवक्षणे स्वारस्यभङ्गः स्यात्, भग्नावरणचैतन्यस्यैव अयम्पदार्थतया कर्तृकर्मणोरभेदापत्तेः इति, तन्न; सावरणस्यैवाऽयंत्वेन कर्तृतयाऽनावरणस्य कर्मतया औपाधिकभेदाभ्युपगमे कर्तृकर्मविरोधाभावात् ।

यदुक्तम्—स्वप्रकाशवादे आवरणभङ्गमन्तरेण इतरस्यानपेक्षणात् तस्मादेव आनन्दीभवनसम्भवात् पूर्वांशवैयर्थ्यमिति । तदपि न; आवरणभङ्गेन चिदात्मना प्रकाशेऽपि रसात्मना प्रकाशाय पूर्वांशस्य सार्थक्यात् । अतः स्वान्तःकरणादिसाक्षितया आत्मनो भानेऽपि अनाद्यविद्याप्रतिबन्धेन पूर्णानन्दात्मनाऽभानमुपपद्यते । तदुक्तम्—"अतो भानेऽप्यभाताऽसौ परमानन्दताऽऽत्मनः" । तत्र पूर्णानन्दात्मना भाने तत्त्वसाक्षात्कारोऽपेक्षितः । रसात्मना भानाय विभावादिभिर्व्यक्तः स्थायी भावोऽपेक्षितः । चिदात्मना भानाय आवरणभङ्गमात्रमपेक्षितम् । अत एव 'सावरणोऽनावरण रसं लब्ध्वाऽऽनन्दीभवति' इत्यपि युक्तमेव । न चानावरणः सन्नित्यनेनैव तत्सिद्धमिति वाच्यम्; तत्त्वसाक्षात्कारमन्तरा सावरणस्य सर्वथाऽनावरणत्वासम्भवात् । केनचिदंशेन तथात्वे तु पूर्वोक्तव्यवस्थैव युक्ता । विषयावच्छिन्नचैतन्यनिष्ठस्यावरणस्य भङ्गे विषयप्रकाश एव । स्थाय्यवच्छिन्नचैतन्यप्रकाशे तु रसात्मना भानम् ।

न च चेतनस्य निरंशत्वेन तस्मिन्नेव कथमंशांशिभावः ? कथं चांशेन भानमंशान्तरेणाभानमिति वाच्यम्; वृक्षयोर्भानेऽपि तदभिन्नस्य भेदस्याभानवत् प्रकृतेऽपि तदुपपत्तेः । यथा त्वन्मते निरंशस्य निर्विकारस्यापि रससिन्धोर्बिन्दुः स्वल्पानन्दो जीवः संभवति, तथैव प्रकृतेऽपि तत्सम्भवात् ।

एतावांस्तु विशेषः—त्वन्मते स परमार्थभूतः, अत्र त्वविद्योपाधिनिबन्धन एव । अयं स प्रकृतपरमात्मैव रसः रसपदार्थः । तमेव नापरं पूर्णात्मनांशेन वा लब्ध्वा अयं सोपाधिको जीवः आनन्दीभवति ।

न चेदृशस्य स्थाय्यवच्छिन्नस्य भग्नावरणस्य चैतन्यस्योत्तरमीमांसया गतार्थता; तत्रानवच्छिन्नचैतन्यस्यैवोपेयत्वाद् गुडजिह्विकान्यायेन परमोपेयप्रतिपत्त्यर्थत्वाद् रसशास्त्रस्यात्रापि सार्थक्यात् । त्वन्मते तु उत्तरमीमांसयाऽपि सविशेषस्यैव प्रतिपत्तव्यत्वेन रसशास्त्रस्याप्यप्राकृतरसपर्यवसायित्वेन उत्तरमीमांसया अनारम्भ्यत्वापत्तेश्च ।

न चापारमार्थिकत्वापत्त्या न रसशास्त्रस्य तत्र पर्यवसानमिति वाच्यम्; धर्मशास्त्रवत्तथात्वेऽपि दोषाभावात् । अप्राकृतरसपर्यवसायित्वे तु ब्रह्मपर्यवसायित्वमेव । भक्तिरसस्य निरुपमसुखसंविद्रूपस्य अस्पृष्टदुःखानर्थव्रातस्य भक्तियोगस्य भगवद्रूपत्वोक्तेः ।

न च तथात्वे स्थायिभावालम्बनविभावयोरैक्यापत्तिरिति वाच्यम्; बिम्बप्रतिबिम्बवदभेदेऽपि सोपाधिकभेदसत्त्वात्। न च तर्हि निर्विशेषस्यैवास्यापि पारमार्थिकत्वे सद्वितीयत्वापत्त्या निर्विशेषत्वहानिः स्यादिति वाच्यम्; तस्योपाधेः परमार्थसत्तापेक्षया किञ्चिन्न्यूनसत्ताकत्वेऽपि बाधाभावात्। भगवद्गुणानां तद्भूषणाद्यपेक्षयोत्कर्षेऽपि सर्वनिरपेक्षस्वरूपापेक्षया किञ्चिन्निकर्षवत्तददोषात्। बिम्बप्रतिबिम्बयोरिव स्थाय्यवच्छिन्नविभावालम्बनचैतन्योर भेदेन तत्रापकर्षाभावात्।

एवं प्राकृतरसवर्णनेन भगवदालम्बनके अप्राकृतरसेऽवतार एव तु मुख्यं रसशास्त्रतात्पर्यम्, तस्यैव सर्वशेषित्वप्रसिद्धेः। तत्र—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्॥

इत्यादिरीत्या भगवद्गुणश्रवणादिना द्रुतस्य स्निग्धस्य मनसो धारावाहिकतां गतायां भगवदाकाराकारितायां वृत्तौ तदभिव्यक्ते निरुपमसुखसंविद्रूपे भगवत्येव वा भक्तिशब्दप्रयोगः।

"देवादिविषया रतिर्भावो न रसः" इति यदुक्तम्, तद्भगवदतिरिक्तदेवान्तरविषयत्वेन ज्ञातव्यम्। तदुक्तं भक्तिरसायने—

रतिर्देवादिविषया व्यभिचारीति व्यञ्जितः।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः॥
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।
तद्योज्यं परमानन्दरूपे न परमात्मनि॥ इति।

देवान्तराणां जीवत्वेन मलिनसत्त्वप्रधानाविद्योपाधिकत्वेन तत्र परानन्दाप्रकाशनाद्रसत्वाभावोक्तिः सङ्गच्छते। परमानन्दस्वरूपे भगवति तु परमसुखस्फुरणात् तत्र रसत्वमस्त्येवेति तत्र रसत्वाभावोक्तिर्न सङ्गच्छते। न च तर्हि देवातिरिक्तनायकेष्वपि जीवत्वात् तद्रतीनामपि परानन्दास्फुरणाद् रसत्वाभावापत्तिः स्यादिति वाच्यम्; परमानन्दरूप-भगवत्सम्बन्धापेक्षया जाड्यमिश्रणेन तत्र न्यूनरसत्वाभ्युपगमेन तदिष्टापत्तेः। तदप्युक्तम्—

कान्तादिविषया वा ये रत्याद्यास्तत्र नेदृशम् ।
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥

ननु तर्हि तद्वदेव देवान्तरविषया रतिरपि रस एवेत्यायातम्, तत्र परिपूर्णसुखाभावेऽपि नायकान्तरादिसाधारण्येन न्यूनरसाभिव्यक्तेः, तथा च देवान्तरविषयत्वेऽपि तदुक्तेः कुतो विरोधपरिहार इति चेत्, न; देवेषु पूज्यत्वातिशयबुद्ध्या सभ्याभिनेययोर्भेदतिरोधानाभावेन तत्र रसत्वाभावोक्तेः समञ्जसत्वात् ।

न च तर्हि भगवद्रतावपि तदापत्तिः समानैवेति वाच्यम्; तस्याः परमानन्दविषयकत्वेनैव तत्र परमानन्दस्फुरणसम्भवात्, नरलीलानुकारिणि भगवति भेदतिरोधानस्यापि सम्भवाच्च । अत एव पूर्वोक्तसाधारणीकरणव्यापारेण राधादिविषयक-रतिमत्कृष्णाभेदभावनया तद्विषयिणी रतिर्मा भूदित्येतदर्थं साधारणानां तच्छ्रवणनिषेधः । उपासनया गोपसीमन्तिनीभावापन्नानां तु कृष्णविषयक-रतिमद्राधाद्यभेदेन तद्विषयरतिमत्त्वं तु न दोषाय । अतः प्राकृतरसवैलक्षण्यबोधनायैव अप्राकृते दिव्यरसे 'भाव' पदप्रयोगः । रसत्वनिषेधकस्य वाक्यस्य प्राकृतरसत्वनिषेध एव तात्पर्यम् ।

कान्तासम्मितरसवद्वाक्यस्य धर्मार्थादिपरत्वेन अन्यशेषत्वात् तद्विशेषणीभूतरसस्याप्यन्यशेषत्वमेव । भगवद्विषयकवाक्यस्य तु भगवत्प्रीतिमात्रपरत्वेन अनन्यशेषत्वेन तद्वैलक्षण्यद्योतनाय तत्र भावशब्दप्रयोगः । तदुक्तम्—

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ।
वैराग्यविज्ञानविवक्षया विभो वचोविभूतिर्न तु पारमार्थ्यम् ॥
यस्तूत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥

वस्तुतस्तु—कान्ताद्यवच्छिन्नचैतन्यस्य परिच्छिन्नत्वेन तद्विषयासु रतिषु परिपूर्णस्य रसस्यानभिव्यक्तया तत्र क्षुद्ररसत्वमेव । भगवद्रतौ तु परिपूर्णस्य अनवच्छिन्नपरमानन्दस्याभिव्यक्त्या तत्रैव मुख्यरसत्वं युक्तम् । खद्योतेभ्य इव क्षुद्रकान्तादिरसेभ्यो भगवद्रसस्तु प्रचण्डमार्तण्ड इव महत्तमः ।

किञ्च, यदि साक्षात् सुखविरोधिनां क्रोध-शोक-भयादीनामपि रसत्वमनुभवबलादभ्युपेयते, ततोऽनुभवसिद्धे ततः सहस्रगुणितरसे कुतस्तदपलापसम्भवः ? तदुक्तं भक्तिरसायने—

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥

क्रोधलोभभयादीनां साक्षात् सुखविरोधिनाम् ।
रसत्वमभ्युपगतम् तथानुभवमात्रतः ॥
इहानुभवसिद्धोऽपि सहस्रगुणितो रसः ।
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥

पुरुषार्थानां भगवत्प्राप्तौ पर्य्यवसानम्

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
अर्थस्य धर्मैकान्तस्य कामो लाभाय न स्मृतः ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥

( १।२।९-१० )

लौकिकास्तु धर्मादर्थस्ततः कामस्ततः सुखमिति मन्यते। धर्मेण भूमिरत्नकाञ्चनाश्वगजव्रीहियवाद्यर्थप्राप्तिः, ततो विषयोपभोगलक्षणः कामः सिद्ध्यति, तत इन्द्रियतर्पणलक्षणसुखं भवति, तेन जीवनम्, तेन पुनः कर्मादिकरणम्, तदर्थं पुनर्धर्मादौ प्रवृत्तिः।

"कुर्वते कर्म भोगाय कर्म कर्त्तुञ्च भुञ्जते" इति वचनात् कर्मभिर्भोगप्राप्तिर्भोगेन पुनः कर्मप्रवृत्तिः; "धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इति वचनाच्च। तदत्र भागवतशास्त्रेऽन्यथैव प्रतिपाद्यते। अपवर्गे साधुरापवर्ग्यस्तस्मान्तःकरणशुद्धिवैराग्यविवेकक्रमेणापवर्गसंपादनकुशलस्यापवर्ग एव मुख्यं फलम्, नार्थभूमिरत्नादिकम्, तस्यार्थाय फलत्वाय कल्पते। अर्थस्तु धर्मस्य गौणमेव फलम्। एवमेव धर्मैकान्तस्य धर्माव्यभिचारिणोऽर्थस्य कामो लाभाय फलत्वाय नहि स्मृतो मुनिभिः। अर्थादर्थस्य धनस्य धर्मानुष्ठानमेव मुख्यं फलम्, कामस्तु गौणमेव फलम्। एवमेव कामस्यापीन्द्रियप्रीतिस्तर्पणं सुखं न लाभफलम्। किन्तु यावता जीवेत तावानेव कामस्य लाभः, जीवपर्य्याप्त एव कामः सेव्य इत्यर्थः। प्राणधारणमेव विषयग्रहणफलमितीन्द्रियप्रीतिस्त्वानुषङ्गिकी। जीवनस्यापि तत्त्वजिज्ञासा फलम्। धर्मार्थकामादिकं लोके य इह कर्मभिरर्थोऽभीष्टः स न युक्तः। एवमत्र धर्मार्थकामजीवनानां क्रमेणार्थकामेन्द्रियतृप्तिधर्मार्थत्वं निरस्य, क्रमेणापवर्गधर्मदेहधारणतत्त्वजिज्ञासार्थत्वमुक्तम्। एवं यथाधिकारं वर्णक्रमानुसारिश्रौतस्मार्त्तधर्मानुष्ठानेन सकामस्य तानि तानि शास्त्राणि फलानि लभ्यन्ते। निष्कामस्य भगवदाराधनबुद्ध्या स्वधर्मानुष्ठानेन सत्त्वशुद्धिक्रमेण भक्तितत्त्वज्ञानादिना भगवत्पदप्राप्तिर्भवति। तथा च सति वित्ते भगवदाराधनबुद्ध्या निष्काम-

कर्मानुष्ठानेन धर्मं संपाद्य तेन धर्मेणापवर्गसाधनं भक्तियोगमुपकुर्य्यात्। सति तु कामे तेन देहधारणमात्रोपयुक्तेन देहं धृत्वा तेन देहेन भजनीयतत्त्वजिज्ञासा कार्य्या।

## राज्योत्पत्तिः।

"यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत्।" इति शान्तिपर्वणि ५९ अध्याये कृतयुग एव राज्योत्पत्तिरुक्ता। ततः पूर्वं—

न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः।
धर्मेणैव प्रजाः सर्वाः रक्षन्ति स्म परस्परम्॥ १४॥

राजराज्यदण्डाद्यभावेऽपि धर्मेणैव परस्परं पालनमुक्तम्। कालक्रमेण ते मनुष्याः खेदमापन्ना मोहमुपजग्मुः।

पाल्यमानास्तथाऽन्योऽन्यं नरा धर्मेण भारत।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत्॥ १५॥

मोहवशमापन्नानां कर्तव्याकर्त्तव्यविवेकशून्यत्वेन तेषां धर्मो ह्यनीनशत्।

नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम॥ १७॥

मोहवशमापन्नानां विवेकशून्यानां च लोभाधीनता जाता। तत एवाप्राप्तवस्तुप्राप्तये प्रयतमानानां कामः समागतः।

अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो॥ १८॥

ततो रागो जातः। रक्ताश्च ते कार्य्याकार्य्ये अजानन्तो यथेष्टचेष्टा जाताः।

तांस्तु कामवशं प्राप्तान् रागो नाम समस्पृशत्।
रक्ताश्च नाभ्यजानन्त कार्य्याकार्य्ये युधिष्ठिर॥ १९॥
अगम्यागमनञ्चैव वाच्यावाच्यं तथैव च।
भक्ष्याभक्ष्यञ्च राजेन्द्र दोषादोषं च नात्यजन्॥ २०॥

एतावतेदं स्पष्टं ज्ञायते यत् तेषां ततः पूर्वं कर्त्तव्याकर्त्तव्यविवेकवदेव गम्यागम्य-वाच्यावाच्य-भक्ष्याभक्ष्य-दोषादोषविवेकाः शास्त्रोक्ता आसन्नेव। अत एव धर्मेण परस्परं रक्षणमपि पूर्वोक्तं संगच्छते। ततश्च कम्युनिस्टानां साम्यसंघे भक्ष्याभक्ष्य-गम्यागम्यविवेको मा भूत्। भीष्मवर्णितकृतयुगीयपुरुषेषु तु गम्यागम्यादिविवेक आसीदेव।

एतेन तदानीमनियतो यौनसम्बन्ध आसीत्। नरमांसादिभक्षणप्रथा चासीदित्यादि डांगे-महाशयस्य जल्पनं निराधारमेव ।

विलुप्ते नरलोके वै ब्रह्म चैव ननाश ह।
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ॥ २१ ॥

अत्र डांगे-रीत्या 'ब्रह्म ननाश' इत्यस्य आदिमसाम्यसङ्घो ननाश इत्यर्थः। स च पूर्वापरविरुद्धोऽर्थः, पूर्वत्र सङ्घस्याप्रकृतत्वात्। नरा मनुजा इत्येव तु प्रकृतम्। सिद्धान्ते तु प्रकृते ब्रह्मपदस्य वेद एवार्थः, व्याख्यातृभिस्तथैवाङ्गीकृतत्वात्। अत एव ब्रह्मणो वेदस्य नाशाद् धर्मनाशोक्तिः संगच्छते, धर्मस्य वेदमूलकत्वात्। तथा नरलोके धर्मह्रासाल्लोभ-रागादिविस्ताराद् वेदाभ्यासलोपाद् वेदलोपो जातः। ततश्च ब्रह्मणि धर्मे च नष्टे देवानामपि त्रासः संजातः।

नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत्।
ते त्रस्ताः कुरुशार्दूल ब्रह्माणं शरणं ययुः ॥ २२ ॥

तैश्च प्रसाद्य ब्रह्मा उक्तः—

भगवन् नरलोकस्थं ग्रस्तं ब्रह्म सनातनम्।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥
ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वरः।
ततः स्म समतां याताः मर्त्यैस्त्रिभुवनेश्वर ॥ २५ ॥

अत्र स्पष्टं वेदात्मब्रह्मनाशेन यज्ञादिरूपधर्मविनाशात्, यज्ञैर्देवानां यजनाद्यसंभवात्, देवानां महत्त्वनाशात्, देवेष्वपि मनुष्यसाम्यमापद्यते। एतेन 'मनुष्येभ्यो भिन्ना देवाः' इत्यपि सिद्ध्यति। तदुक्तम्—

अधो हि वर्षमस्माकं नरास्तूर्ध्वप्रवर्षिणः।
क्रियाव्युपरमात्तेषां ततो गच्छाम संशयम् ॥

यज्ञीयदुग्धाज्यसोमाद्याहुतिभिर्नरा ऊर्ध्ववर्षिणो भवन्ति। वयं च वृष्टिभिरधो-वर्षिणो भवामः। वेदयज्ञविलोपाच्चास्माकं जीवनमपि संकटग्रस्तं जातम्। त्वत्प्रभावोत्थो दैवस्वभावोऽस्माकं यथा न नश्येत्तथा प्रयतितव्यमिति देव प्रार्थनया ब्रह्मणा—

ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्।
यत्र धर्मस्तथैवार्थः कामश्चैवोपवर्णितः ॥
त्रिवर्ग इति विख्यातो गण एव स्वयंभुवा।

अत्र त्रिवर्गेऽपि गणपदप्रयोगात् सर्वत्र गणशासने न गणपदप्रयोगः। "चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गणः" इति चतुर्थो मोक्षोऽपि तत्रैव गणो वर्णितः। तत्र सत्त्वं रजस्तम इति मोक्षस्यापि त्रिवर्ग उक्तः। स्थानवृद्धिक्षयरूपेण दण्डजस्त्रिवर्ग उक्तः। दण्डेन धनिनां स्थितिः, धार्मिकाणां वृद्धिः, दुष्टानां क्षयो भवति। तत्रैव आत्मदेश-काला उपायाः कृत्यं सहायाः कारणञ्चेति षड्वर्गोऽपि निरूपितः।

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च वर्णिता।
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ॥
दण्डनीतिश्च विपुला विद्यास्तत्र प्रदर्शिताः॥ ३२॥
(शा० पर्व०, अ० ५९)

पुनश्च नीतिशास्त्रस्य कार्यान्वयनार्थं शासको विशिष्टो नरोऽपेक्षित इति देवप्रार्थनया भगवान् नारायणो विरजसं पुत्रं सृष्टवान्।

अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम्।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्यं वै तं समादिश॥ ८६॥
ततः संचिन्त्य भगवान् देवो नारायणः प्रभुः।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम्॥ ८८॥

विरजस्तु राज्यसिंहासनं नैच्छत्—

विरजस्तु महाभागः प्रभुत्वं भुवि नैच्छत।
न्यासायैवाभवद् बुद्धिः प्रणीता तस्य पाण्डव॥ ८९॥

तत्पुत्रोऽपि मोक्षाभिमुखो जातः, तत्पुत्रः कर्दमः, तस्य त्वनङ्गो नाम वै सुतो दण्डनीतिविशारदः प्रजापालको जातः। अनङ्गपुत्रोऽतिबलो राज्यं प्रतिपेदे। स चेन्द्रियवशो जातः।

अनङ्गपुत्रोऽतिबलो नीतिमानाभिगम्य वै।
प्रतिपेदे महाराज्यं यथेन्द्रियवशोऽभवत्॥ ९२॥

मृत्योऽस्तु मानसी दुहिता सुनीथा तस्य पत्नी जाता। सैव च वेनमजीजनत्।

तं प्रजासु विधर्माणं रागद्वेषवशानुगम्।
मन्त्रपूतैः कुशैर्जघ्नुः ऋषयो ब्रह्मवादिनः॥ ९४॥

तस्य दक्षिणोरुमथनान्निषादविशेषो जातः, दक्षिणपाणिमथनात् पृथुर्जज्ञे।

भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः ।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ।। ९८ ।।
······बद्धनिस्त्रिंशः सशरः सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ।।
तं दण्डनीतिं सकला श्रिता राजन्नरोत्तमम् ।
ततस्तु प्राञ्जलिर्वैन्यो महर्षींस्तानुवाच ह ।।
सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी ।
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत ।।
यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वै करिष्यामि नात्र कार्य्या विचारणा ।।

एवं महर्षीणां प्रभावेणाविर्भूय वेदवेदान्तविचक्षणो नीतिनिपुणो वैन्यः पृथुः तदाज्ञापालनाय संनद्धो जात इति युक्तमेव ।

तमूचुस्तत्र देवास्ते ते चैव परमर्षयः ।
नियतो यत्र धर्मो वै तमशङ्कः समाचर ।।
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु ।
कामं क्रोधं च लोभं च मानं चोत्सृज्य दूरतः ।। १०४ ।।
यश्च धर्मात् प्रविचलेल्लोके कश्चन मानवः ।
निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्ममवेक्षता ।।

किमतः सुन्दरम् । शश्वद्धर्मदृष्ट्यैव रागरोषशून्यस्य स्वार्थरहितस्य शासकस्य सर्वाः प्रवृत्तयः प्रतिज्ञा च कारिता ।

प्रतिज्ञाञ्चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ।।

अत्र भूतलवर्त्तिनो ब्रह्मणो वेदस्य मनसा वाचा कर्मणा पालनं करिष्यामीति त्रिः प्रतिज्ञा कारिता ।

यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ।। १०७ ।।

पुनश्च—

अदण्ड्या मे द्विजाश्चेति प्रतिजानीहि हे विभो।
लोकञ्च संकरात् कृत्स्नं त्रातास्मीति परन्तप ॥ १०८ ॥
वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान् ।
ब्राह्मणा मे महाभागा नमस्याः पुरुषर्षभाः ॥ १०९ ॥

वालीवल्यादीनृषीन् मन्त्रिणः कृत्वा गर्गञ्च सांवत्सरं कृत्वा शशास। तेनैव च राज्ञा कृषियोग्या वसुधा चक्रे। समतां वसुधायाश्च स समुदपादयत्।

वैषम्यं हि परं भूमेरासीदिति च न श्रुतम्।
मन्वन्तरेषु सर्वेषु विषमा जायते मही॥
उज्जहार ततो वैन्यः शिलाजालान् सहस्रशः।
धनुष्कोट्या महाराज तेन शैला विवर्धिताः॥

स विष्णुना च देवेन शक्रेण विविधैः सह।
ऋषिभिश्च प्रजापालैर्ब्राह्मणैश्चाभिषेचितः॥ ११६ ॥
तं साक्षात् पृथिवी भेजे रत्नान्यादाय पाण्डव।
सागरः सरितां भर्त्ता हिमवांश्चाचलोत्तमः॥

शक्रश्च धनमक्षय्यं प्रादात्तस्मै युधिष्ठिर।
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः॥
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम्।
हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा॥
प्रादुर्बभूवुः वैन्यस्य चिन्तनादेव पाण्डव।
तस्य प्रभावातिशयान्न क्वापि [कस्यचिद्] कुतश्चिद्भयम्॥
न जरा न च दुर्भिक्षं नाधयो व्याधयस्तथा।
सरीसृपेभ्यः स्तेनेभ्यः न चान्योऽन्यात् कदाचन॥

भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात्।
आपस्तस्तम्भिरे चास्य समुद्रमुपयास्यतः॥
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत्।
तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च॥

यक्षराक्षसनागैश्चाभीप्सितं यस्य यस्य तत् ।
तेन धर्मोत्तरश्चायं कृतो लोको महात्मना ॥
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥
(शा० प०, ५९।१२५)
स्थापनं चाकरोद् विष्णुः स्वयमेव सनातनः ।
नातिवर्त्तिष्यते कश्चिद्राजंस्त्वामिति भारत ॥
तपसा भगवान् विष्णुराविवेश च भूरियम् ।
देववन्नरदेवानां नमतेऽयं जगन्नृप ॥ १२८ ॥

६७ अध्याये तत्रैव शान्तिपर्वणि प्रकारान्तरेण राज्यव्यवस्थोक्ता ।

तथाहि—

"अनिन्द्रमबलं राज्यं दस्यवोऽभिभवन्त्युत ।" इत्यादिभिः शान्तिपर्वणि ६७ अध्याये अराजकतानिन्दापूर्वकं राज्यव्यवस्थापनमुक्तम् ।

अराजकाणि राष्ट्राणि हतवीर्याणि वा पुनः ।
नहि पापात् परतरमस्ति किञ्चिदराजकात् ॥ ७ ॥
अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥ १७ ॥

मात्स्यन्यायपीडितैर्मनुष्यैः संघीभूय सदाचारसम्बन्धिनः केचिन्नियमा निर्धारिताः ।

वाक्शूरो दण्डपुरुषः यश्च स्यात् पारजायिकः ।
यः परस्वमथादद्यात् त्याज्या नस्तादृशा इति ॥
समेत्य तास्ततः चक्रुः समयानिति नः श्रुतम् ॥

भीष्मवर्णितमिदं समाजनिर्माणं सामाजिकानुबन्धाधृतम् । परन्तु नियामकाभावान्नियमपालनमशक्यं जातम् । यथेच्छं नियमोल्लंघनेन पुनरपि मात्स्यन्यायप्रवृत्तिर्जाता । ततः शासकप्राप्त्यर्थं ब्रह्माणमुपजग्मुः ।

सहितास्तास्तदा जग्मुरसुखार्त्ताः पितामहम् ।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥
यं पूजयेम सम्भूय यश्च नः प्रतिपालयेत् ।
(शा० प० ६७।२०-२१)

ब्रह्मणा च प्रजापालनाय राजत्वेनाष्टलोकपालशक्तिनिर्मितो मनुर्नियुक्तः। चोक्तवान्—

बिभेमि कर्मणः पापाद्राज्यं हि भृशदुस्तरम्।
विशेषतो मनुष्येषु मिथ्या वृत्तेषु नित्यता॥
तमब्रुवन् प्रजा मा भैः कर्तृनेनो गमिष्यति।
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च॥
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम्।
कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च॥

(शा० प० ६७।२२-२४)

सुखेन शतपत्रेण ये मनुष्याः प्रधानतः।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः॥
यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं वै भविष्यति॥ २७॥
विजयाय हि निर्याहि प्रतपन् रश्मिवानिव।
मानं विधम शत्रूणां जयोऽस्तु तव सर्वदा॥

(शा० प०, ६७।२६)

अत्रोभयोः समन्वयेनेदमेव निर्णेतुं शक्यते यत् पूर्वं कृतयुगे सत्त्वप्रधानाः प्रजा ज्ञानविज्ञानसम्पन्ना धर्मनिष्ठा आसन्। धर्मप्रभावादेव परस्परपोषका एवासन्निति राज्यराजादिव्यवस्था अनपेक्षितासीत्। कालक्रमेण सत्त्वह्रासात् तमसो रजसश्चोद्भवे प्रतिपत्तिविमोहात् कामरागादिविस्ताराद् वेदधर्मविनाशान्मात्स्यन्यायप्रवृत्तिः, ततः सामाजिकानुबन्धेन नियमनिर्माणम्। नियामकाभावान्नियमोल्लंङ्घनम्। ततश्च ब्रह्मोपसदनं तदनुग्रहेण मनुराजप्राप्तिः। तस्मिन्नेव मनुवंशे वैन्यपृथोराविर्भावः। विरजोऽपि मनुरेव। ततोऽपि पूर्वतनः कश्चिदिति वा वेदितव्यम्।

यस्य सत्रम्याश्रयेण साम्यसंघो मार्क्सीयानां सिषाधयिषितः, ततः पूर्वं व्यक्तिगतसंपत्तिपरिवाराद्यभावश्च सिषाधयिषितः, तस्य सोमप्रकृतिकत्वं कथं न ज्ञायते तैः, अकृतसोमानां तत्रानधिकारात्। सोमश्च व्यक्तिगतो व्यक्तिगतसम्पत्तिमूलकश्च। सोमे षोडशसंख्याका ऋत्विजो भवन्ति, दक्षिणाऽपि न समेषां समाना।

किन्तु—

अध्वर्युगणानां होतृगणानामुद्गातृगणानां ब्रह्मगणानाञ्च श्रमविभागः। तेषु गणेषु अर्धिनः, पादिनः, अध्यर्धिनः, इति रीत्या श्रमफलभेदोऽपि दृश्यते। अयञ्च विभागो दक्षिणास्वेव, न यज्ञफलेषु; दक्षिणापरिक्रीतत्वेन तेषां तत्रानधिकारात्। यज्ञफलं तु यजमानस्यैव। सत्रेष्वेव बहुयजमानकर्त्तृकत्वं समफलभागित्वञ्च, ततः पूर्वतनेषु सोमादिषु तदभावात्। वर्णभेदोऽपि सृष्ट्यादावेवोत्पन्न इत्युक्तमेव। अतः श्रमविभागमूलिका वर्णसृष्टिरित्यादिकं सर्वमपि निष्प्रमाणं कपोलकल्पितमेव। प्रातिस्विकसम्पत्तिसिद्धान्तोऽपि पूर्वोक्तयुक्त्या सत्रकालोपलक्षित-स्वदभिमतसाम्यसङ्गात् पूर्वमेवोत्पन्न इति दक्षिणाभिर्ऋत्विकक्रयणाद् दक्षिणासु विभागवैचित्र्याच्च स्पष्टं ज्ञायते।

विष्णुदेवयुद्धप्रसङ्गस्तु प्रवर्ग्यरूपयज्ञशिरःप्राशस्त्यार्थमर्थवादे एव तस्य स्वार्थे तात्पर्याभावात्। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्', 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति जैमिनिसूत्राभ्यां तथैव निर्णयात्।

अन्यथा कथं साधारणपुरुषस्य हस्ताभ्यामेव धनुष इषूणाञ्च प्रादुर्भावः सम्भवति। सम्भवे कथं वाऽन्यैर्देवैः तथा कर्तुं न पारितम्। "एकेन बहूनां पराभवे विष्णोर्गर्वः सञ्जातस्तेनैव प्रयत्नशैथिल्यं जातम्, तस्मात् स्मयो (गर्वो) न कार्य्यः" इत्यपि तत्र विधित्सितम्।

महाभारते सभापर्वणि त्रयोदशेऽध्याये—

## वैदिकशासनव्यवस्थोक्ता

भूयश्चाद्भुतवीर्य्यौजा धर्ममेवानुचिन्तयन्।
किं हितं सर्वलोकानां भवेदिति मनो दधे॥ ६॥
अनुगृह्णन् प्रजाः सर्वाः सर्वधर्मभृतां वरः।
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः॥ ७॥
सर्वेषां दीयतां देयं मुष्णन् कोपमदावुभौ।
साधुधर्मेति धर्मेति नान्यच्छ्रूयेत भाषितम्॥ ८॥
एवं गते ततः स्वस्मिन् पितरीवाश्वसन् जनाः।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता॥ ९॥
अविग्रहा वीतभयाः स्वकर्मनिरताः सदा॥ ११॥

निकामवर्णाः स्थिताश्च आसञ्जनपदास्तथा ।
वार्धुषी यज्ञसत्त्वानि गोरक्षं कर्षणं वणिक् ॥ १२ ॥
विशेषात् सर्वमेवैतत् संजज्ञे राजकर्मणा ।

वार्धुषी वृद्ध्युपजीविका, यज्ञसत्त्वानि क्रतूनां सामर्थ्यानि सद्यः पुष्कलफलप्रदत्वादिविषयाणि ।

अनुकर्षञ्च निष्कर्षं व्याधिपावकमूर्छनम् ॥ १३ ॥
सर्वमेव न तत्रासीद्धर्मनित्ये युधिष्ठिरे ।
दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रतिपरस्परम् ॥ १४ ॥
राजवल्लभतश्चैव नाश्रूयत मृषाकृतम् ।
प्रियकर्त्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ॥ १५ ॥
अभिहर्त्तुं नृपाः षट्सु पृथक्जात्यैश्च नैगमैः ।
ववृधे विषयस्तत्र धर्मनित्ये युधिष्ठिरे ॥ १६ ॥

दारिद्र्याद् अतीतवर्षस्य राजकीयद्रव्यस्य ऋणत्वेन धारणम् अनुकर्षः । करार्थं प्रजापीडनं निष्कर्षः । मूर्छनं वृद्धिः । षट्सु सन्धिविग्रहादिषु यस्य प्रियादिकं कर्त्तुं नैगमैर्वणिग्भिः सह आसन् इति शेषः । इतरे नृपा वणिग्वद् येन करदीकृता इत्यर्थः, तत्र तस्मिन् इत्यादिरीत्या युधिष्ठिरादिशासनानां सर्वकल्याणकारित्वमेव ज्ञायते । तथापि दारिद्र्यमैश्वर्यञ्च पापपुण्यहेतुके एव । केचिद् ब्राह्मणाः क्षत्रिया वैश्याश्च दरिद्रा अपि भवन्त्येव । श्रमं विना निर्वाहासम्भवात् तेषां श्रमोऽप्यनिवार्य्य एव भवति । ब्राह्मणक्षत्रियौ शोषकौ विट्छूद्रौ शोषितौ इति भेदस्तु मार्क्सवादिमस्तिष्कविकार एव । भारतीयसंस्कृतौ विशां वाणिज्याश्रयत्वेन, शूद्राणाञ्च शिल्पपतित्वेन सम्पत्तिशालित्वमेव, न शोषितत्वम् । राष्ट्र-धर्म-स्वत्वादिरक्षणार्थं 'युद्धं धर्मः' इति तु शास्त्रसिद्धम् ।

यच्च गणेषु बाह्यैः शत्रुभिरेव युद्धं भवति स्म, गणसदस्यैः सार्द्धं युद्धप्रसङ्ग एव नासीदिति, तन्मृषैव । त्वदभिमतगणसदस्यानामिव पशूनां शुनाञ्चापि व्यक्तिगतसम्पत्तिदासप्रथादयो न सन्ति । तद्वदेव गम्यागम्यविचारोऽपि नास्ति, तेषां मातृदुहितृभगिन्यादिगमनदर्शनात् । तथापि परस्परं युद्धं तेषां भवति । तस्माद्विवेकविज्ञानाभावेन सत्त्वोद्रेकाभावे तमउद्रेकेण कामक्रोधादिवृद्ध्याऽऽदिमसाम्यसंघेष्विव सर्वत्रैव संघर्षो युद्धञ्चानिवार्य्यमेव भवति । तस्माद्दुर्वृत्तानां सम्बन्धिनामसम्बन्धिनाञ्च समेषां युद्धे वधो धर्म एवेति नात्र तर्काभावः । प्रत्युत दुर्वृत्तानामपि स्वीयानामनुग्रहः सुवृत्तैरपि परकीयैर्युद्धे तेषां वध इत्यत्रैव समुचितस्तर्को नोप-

लभ्यते। वैश्यानां शूद्राणां शोषणार्थं युद्धप्रवृत्तिरिति कल्पनं तु मौढ्यमूलकमेव, दुर्वृत्तवृत्त-शमनादीनामेव युद्धोद्देश्यस्योक्तत्वात्। गीतया न किमपि नव्यधर्मस्थापनाय यतितम्, वेदादि-शास्त्राणामेव तत्रासकृन्नामदर्शनात्। युधिष्ठिरस्य शासने शोषणकथापि नासीत् सर्वजन-सुखाय सर्वजनहितायैव तत्र प्रयासदर्शनात्। अत एव वैदिकानाम्—

सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥

इत्युद्घोषः।

"अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्।" अत्र नास्तिकानामपि नानिष्टः काम्यते। तत एवोदयनाचार्येणोक्तम्—

इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते।
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः॥
किन्तु प्रस्तुतविप्रतीपविधयाऽप्युच्चैर्भवच्चिन्तकाः।
काले कारुणिकत्वयैव कृपया ते तारणीया नराः॥

प्रह्लादेन च "स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथोधिया।" इति सर्वभूतसामञ्जस्यमेव कामितम्।

गीतायां च "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि" इति सर्वत्रैव ब्रह्मदृष्टिर्विहिता।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः॥

इति सर्वभूतसाम्यदर्शनानुरोधेनैव धर्मस्य गौरवमुक्तम्—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥

इति परप्रातिकूल्याभावेनैव शास्त्रोक्तधर्मानुष्ठानमुक्तम्। भारतीयदण्डविधानेऽपि न वैरनिर्यातनमुद्देश्यम्। किन्तु दुर्वृत्ततानिवृत्त्याऽपराधिपातकनिवृत्त्यात्मशुद्धिरेवोद्देश्यः।

भोगार्थपर्याप्त्या विनिमयार्थमन्यलाभार्थमुत्पादनपारम्पर्यं नापराधः, तस्य सामान्य-गृहस्थैरप्याहतत्वात्। हिरण्यरत्नादिकं परेशसृष्टौ विद्यमानं दुर्वृत्तानामनर्थकरमपि न सद्वृत्ता-नामनर्थकरम्। एवं श्रमोऽपि नैकविधो भवति। तदनुरोधेनैव फलवैविध्यमपि। अत एवेष्ट-कावाहकानाम्, विधिविशेषज्ञानाम्, न्यायवादिनाम्, शिल्पादिविशेषज्ञानाम् 'इञ्जीनियर'

प्रभृतीनाम् श्रमिकाणाम् यथायोग्यं फलप्राप्तये तु वैदिकेषु वाङ्मयेषु विपुला व्यवस्था विद्यत एव ।

श्रम एव विनिमयमूल्स्याधार इति तु मार्क्सीयानामेव मतम्, न वैदिकानाम् । लिप्सा तत्पूर्तिश्च तदाधार इति 'रिकार्डो' प्रभृतयः । यस्य लोके लिप्साबाहुल्यं पूर्त्यल्पता च तस्य मूल्यं वर्धते, वैपरीत्ये ह्रसति । प्राकृतसाधनानि, तद्गुणाः श्रमाश्चोभयसमुच्चय एव तदाधार इति वैदिकाः । यथा दातृग्रहीतॄणां क्रेतृ-विक्रेतॄणां परस्परसम्मत्या वस्तुमूल्यमापणे निश्चीयते, तथैव श्रममूल्यमपि परस्परसम्मत्यैव निर्णीयते । अनिश्चये तु न्यायाधीशैर्धर्मशास्त्रेषु निर्णीयते। अत एव यागादिश्रममूल्यभूता दक्षिणा शास्त्रेणैव निर्णीयते ।

यद्यपि स्वायत्तेन केनचिच्छ्रमिकेण सूत्राणि क्रीत्वा वस्त्रं निर्माय तद्विक्रयेण यन्मूल्यं लभ्यते, ततः सूत्रमूल्यातिरिक्तं सर्वं श्रमफलमेव; तथापि यत्र श्रमो वेतनेन क्रीयते रुप्यकैश्च मुद्राभिर्यन्त्राणि प्रकृतिद्रव्याणि ( कच्चामाल ) च क्रीयन्ते, तत्र संबद्धव्ययोपयुक्तमूल्यातिरिक्तं क्रेतुरेव फलं लभ्यते, साधनश्रमसमुच्चयेनैव वस्तूत्पादनसम्भवात् ।

यद्यपि चेतनश्रममन्तरा प्राकृतवस्तूनि यन्त्राणि मुद्राश्च शवोपमान्येव, परमुपर्युक्तसाधनान्यन्तरा श्रमोऽपि निरर्थको भवति । तेनैव प्रजासु निरुद्योगत्वं निष्कार्यत्वनिरर्थकत्वादयो दोषा भवन्ति ।

किञ्च यन्त्राणां तूत्पादने माहात्म्यातिशयः सुतरां स्फुटः । लक्षसंख्याकैः श्रमिकैर्यदुत्पाद्यते, तद्यन्त्रसाहाय्येन द्विसहस्रसंख्याकैरेवोत्पादयितुं शक्यते । यन्त्राणि च धनवद्भिरेव निर्माप्यन्ते क्रीयन्ते च । तथापि शेषाणां निष्कार्यत्वापत्त्या क्रयशक्तिहान्योत्पादितवस्तूनामापणे विक्रयासम्भवेन नैरर्थक्येन गतिरोधसम्भावना भवति । तदर्थं क्रयशक्तिरक्षणाय निष्कार्यत्वावरोधाय कार्यसमयनियत्या प्राकृतोत्पादनकेन्द्रेषु वस्त्वन्तरोत्पादनकेन्द्रेषु बहूनां श्रमिकाणामुपयोगो युक्तः । "अष्टागवं धर्महलम्" इति रीत्या यथा द्विगवेन दशघण्टानिर्वर्त्ये कार्ये अष्टानां गवामुपयोगस्तथैव प्रकृतेऽपि कर्त्तव्यम् ।

प्रत्यतिरिक्तायं पञ्चधा विभक्त्या ज्योतिष्टोमाद्युष्ठित्याऽसाधुसम्पत्तेः साधुषु वितरणेन चासंतुलितवैषम्यनिवारणं सर्वथा सम्पद्यते । करग्रहणमपि सर्वजनकल्याणोपयोगिव्यवस्थार्थं सर्वाप्यायनार्थञ्च । यथा सविता तीक्ष्णै रश्मिभिः पृथिव्या रसं कर्षति, यथाकालं वृष्ट्या तदाप्यायनायैव; तथैव प्रजापोषणार्थमेव ततः करादानमिति राजधर्मेषु सुस्पष्टं विवृतम् । शल्यकवदाखुदृष्टान्तोऽपि तत्रैव चरितार्थः । साम्यवादाभिमतगणेषु तु दानस्य न किमपि

वैशिष्ट्यम्। अर्जकार्जितवस्तूनामर्जकेभ्यस्तद्भागविभाजनमेव तत्। परमत्र तु सवितृदृष्टान्तेन किञ्चिन्मात्रमादाय प्रभूतं जलं यथा प्रत्यर्पयति सविता, तथैव स्तोकं स्तोकं करमादाय प्रजाभ्यः प्रभूतं प्रार्पयन्ति धार्मिका राजानः।

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥
(रघुवंशे)

धर्महीना उच्छृङ्खलास्तु भौतिकवादिन एव शोषका भवन्ति। देवाः किञ्चिदेव चरु-पुरोडाशादिकं गृहीत्वा बहुतरानभीष्टान् भोगान् ददति। परमेश्वरस्तु पत्रपुष्पादिकमेव गृहीत्वा सर्वस्वं प्रयच्छति। परं तत्सर्वं भौतिकवादिबुद्ध्याऽगम्यमेव। सुभिक्षता समृद्धिश्च राज्यव्यवस्थायां निर्विशेषं वितायते, तेनान्त्यजादीनामपि दारिद्र्यं नेष्यते। तत एव प्रसिद्धो हरिश्चन्द्रो राजा काशीस्थस्यान्त्यजस्य भृत्यो भूत्वा श्मशानकार्यकरः संवृत्तः। कोटिस्वर्णमुद्राभिश्च तेन क्रीतः स राजा। दारिद्र्ये कथं तत् स्यात्। तुलसीदासेनाप्युक्तम्—

जो संपदा नीच गृह सोहा। सो बिलोकि सुरनायक मोहा॥

अधिकारस्तु शास्त्रानुसारिणो न स्वेच्छया। तैः सार्धं कठोरकर्त्तव्यानामपि सम्बन्धोऽनिवार्य्यः। ब्राह्मणप्राप्यानधिकारान् वाञ्छन्त्याधुनिकाः, परं तदीयकठिनत्यागतपस्यादिभ्यो बिभ्यति। सर्वेऽपि क्षत्रियाणां साम्राज्याद्यधिकारं कामयन्तीतरेऽपि जनाः, परं तदुचितशौर्य्यं त्यागञ्च कर्तुं न प्रभवन्ति। स्वीयभूमिसम्पत्त्यादिस्वत्वकलत्रपुत्रादिरक्षणार्थमपि रक्तं पातयितुं शिरश्छेदयितुं च न पारयन्तीतरे। क्षत्रियास्तु महामहाभागाः प्रजाजन-स्वत्व-कलत्रादिरक्षणार्थमनायासेन स्वसर्वस्वं रक्तं प्राणं शिरश्च हस्ते गृहीत्वैव भ्रमन्ति।
तथैव रामेण प्रतिज्ञातम्—

स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

व्यवहृतञ्च तथैव।

"शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भ-दर्प-लोभ-मोह-क्रोधवर्जिताः।"

(बौ० ध० सू० १।५)

इति वचनेन मात्सर्याहङ्कारदम्भदर्पलोभमोहक्रोधशून्या कुम्भमात्रधान्यपरिग्रहा निस्पृहा एव शिष्टा भवन्ति। तेषामेव प्रशंसा वैदिकधर्मे—

कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥

(म० स्मृ० ४।७)

"ज्यायान् परः परो ज्ञेयः……।"

(मनु० ४।८)

इत्यादिरीत्या ब्राह्मणानां तपःप्रधानानां अब्भक्षाणां वायुभक्षाणां कन्दमूलाशिनां शोषकत्वकल्पनं नास्तिकानामेव शोभते। कुसूलधान्यको ब्राह्मणो निकृष्ट एव परिगण्यते। कुम्भीधान्यः श्रिष्टो भवति। स शिलवृत्त्या भूतानभिद्रोहेणैव वृत्तिं चिनोति, स शिलवृत्तिः। ततोऽपि श्रेष्ठ उञ्छवृत्तिर्यस्य दिनत्रयभोजननिर्वाहार्थं भोजनसामग्री स्यात्। ततोऽपि श्रेष्ठः स ब्राह्मणो यो ह्यश्वस्तानिको भवति। यस्य श्वः कृते न किमप्यवशिष्येत। एतादृशानां तेषां शोषकत्वं किं सम्भवति ? भारतीयवैदिकपद्धत्या वैधेष्वायेषूद्योगादिस्वरूपनिर्वर्तकव्यय-राजकीय-करादिभागान् पृथक्कृत्य, अवशिष्टेषु सर्वेष्वायेषु धर्माय, यशसे, अर्थाय, कामाय, स्वजनाय च पञ्चधा विभागः उक्तः। स्वात्मकामार्थे भागेऽपि--

यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥

(११।७)

इति मनुरीत्या तस्य सोमयागप्रसङ्गेन सर्ववितरणमुक्तम्--

तत्रापि--

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥

(श्री० भा० ७।१४.२)

इति रीत्या यावदर्थतोक्ता। सतां धनहीनानां जीविका-निर्वाहार्थं दण्डरूपेणासाधु-पुरुषधनापहारो राज्ञां पुण्यमेवोक्तम्।

योऽसाधुभ्योऽर्थमादाय साधुभ्यः सम्प्रयच्छति।
स कृत्वाप्लवमात्मानं सन्तारयति तावुभौ ॥

(मनु० ११।१९)

तादृग्व्यवस्थायाः शोषकत्वोक्तिरज्ञानमूलिकैवेति मन्तव्यम्। रन्तिदेवेन पुल्कसादि-निम्नजातीयजनरक्षणाय स्वात्मोत्सर्गः कृतः। शिविना च राज्ञैव कपोतरक्षणार्थमपि स्वात्मा

श्येनकवलीकृतः। न च मन्वादिभिर्विधायकैः शूद्राणां निर्धनत्वापादनमावश्यकमुक्तमिति वाच्यम्, तदुक्तेर्दुर्वृत्तशूद्रपरत्वात्, ब्राह्मणादिसेवापरायणानां धनानपेक्षणाच्च।

महाभारते केनचिन्मुनिना स्वपार्श्ववर्त्ती भक्तः श्वा वृकाद्भीतः तपोबलाद् वृकः सम्पादितः। स एव व्याघ्राद् भीतो व्याघ्रो निर्मितः। एवं सिंह त्वं नीतो मुनिमेव भक्षयितुम् प्रवृत्तः। तदा मुनिना स श्वैव पुनर्निर्मितः। तथैव कुलहीनो दुर्वृत्तः साधून् बाधते। धनं लब्ध्वा दुर्वृत्ता शूद्रा अपि विप्रादीन् बाधन्ते, न सद्वृत्ताः।

महाभारते एव कश्चिच्छूद्रो दस्यूनां शासक आसीत्। तन्नियमिता दस्यवोऽपि धर्मपरायणा जाताः। तदाज्ञया ब्राह्मणाः, साधवः, तपस्विनः, स्त्रियो दीनाश्च सर्वदा तैः पाल्यन्ते स्म। तस्य चैश्वर्य्यमुत्तरोत्तरं वृद्धिमुपगतम्। पैजवनसंज्ञकः शूद्रश्च स्वधर्मानुसारेण बहून् पाकयज्ञान् कृतवान्। प्रसिद्धो हरिश्चन्द्रो राजा यस्य काशीमहाश्मशानाधिपतेश्चाण्डालस्य हस्ते विक्रीतः, सोऽपि बहुधन आसीत्। तथा हि—

व्यास उवाच।

एवमुक्ते तदा तेन श्वपचो हृष्टमानसः।
आगत्य सन्निधौ तूर्णं विश्वामित्रमभाषत॥

चाण्डाल उवाच—

दशयोजनविस्तीर्णे प्रयागस्य च मण्डले।
भूमिं रत्नमयीं कृत्वा दास्ये तेऽहं द्विजोत्तम॥

व्यास उवाच—

ततो रत्नसहस्राणि सुवर्णमणिमौक्तिकैः।
चाण्डालेन प्रदत्तानि जग्राह द्विजसत्तमः॥

(श्रीदेवीभा०, स्क० ७ अ० २३)

उपर्युक्तवचनैस्तस्य बहुधनरत्नमुक्तादिसम्पन्नत्वं विज्ञायते। मिथिलायां सीताविवाहप्रसङ्गे स्पष्टमुक्तम्—

जो सम्पदा नीच गृह सोहा।
सो विलोकि सुरनायक मोहा॥
जनक भवन की शोभा जैसी।
गृह गृह प्रति पुर देखिय तैसी॥

(तुलसी—राम० मा०, बा० का०)

किञ्च, अदत्तानामनादानमनादिकालाद् भारतीयपारम्पर्य्यमासीत्। पथि पतितानां रत्नादीनामप्यदत्तानाम् अनादानं सार्वजनिको धर्म आसीत्। तथात्वे शूद्राणां वैश्यानां धनापहारेण निर्धनत्वापादनमित्यारोपो द्वेषमूलक एव।

परान्नं परद्रव्यं वा पथि वा यदि वा गृहे।
अदत्तं नैव गृह्णीयादेतद् ब्राह्मणलक्षणम्॥

ब्राह्मणशब्दोऽत्र सद्वृत्तपरः। दण्डरूपेणासाधुधनापहारस्तु लोकहितौपयिकत्वेनापवाद एव।

शोषणापाकरणमेव प्रधानतो राजकृत्यम्। स्वायत्तश्रमोपार्जितैर्भोजनैर्वस्त्रैश्चाद्यापि श्रमिकायत्त एवोपयोगः कर्तुं शक्यते। वेतनक्रीतश्रमिकोपार्जितैर्वस्तुभिस्तु वेतनदातृणामिच्छानुसारेणैवोपयोगो युक्तः। एवं पूर्वोक्तरीत्याऽर्थेषु पञ्चधाविभक्तिनियमैः, असाधुसम्पत्तिवितरणैः, सोमादियज्ञानुष्ठितिभिः, लघूद्योगादिभिः, उत्पादनसाधनानां विकेन्द्रीकरणैः सर्वसामञ्जस्यं सम्पद्यते। उत्पादनतदनुबन्धिव्ययादिसामञ्जस्यानुसारमेव श्रमिकवेतनादिनिर्धारणं युक्तम्, येन श्रमसाधनस्वामिनां समुचितं सामञ्जस्यं स्यात्। तदेतत् सर्वं शास्त्रानुसारेणैव युक्तम्। "ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि।" इत्युक्त्यैव गीतया समाहितम्।

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय········॥

( म० ४।२ )

इत्यादिवचनान्यत्रानुकूलानि। "अभयं सत्त्वसंशुद्धिः" इति गीतया स्पष्टं निर्भयतोपदिश्यते। न केवलं स्वस्वत्वरक्षणायैव क्षत्रियैर्युद्ध्यते। किन्तु प्रजाया येषां केषाञ्चिदपि स्वत्व-संस्कृति-धर्म-स्त्रीसम्मानरक्षणार्थं क्षत्रियैर्युद्ध्यते। यत्र धर्मोपरोधः स्यात् तत्र क्षत्रियेतरैरपि योद्धुं शक्यते। न्यायालयेषु च निष्पक्षाः न्यायाधीशाः धार्मिकास्तिष्ठन्ति। सर्वथापि शोषणनिराकरणप्रकारा अनेकशः शास्त्रोक्ताः सन्ति।

यत्तु "उत्पादनं श्रमिकाणां कर्त्तव्यम्। लाभलोभं त्यक्त्वा कर्त्तव्यबुद्ध्या चोत्पादनं कर्त्तव्यम्। फले तवाधिकारो नास्ति। फलमनुद्दिश्यैवोत्पादनं कर्त्तव्यम्" इत्येव गीतया श्रमिकेभ्य उपदिष्टमिति जल्पितम्; तत् सर्वं मूढजनप्रतारणमेव, गीतातात्पर्यविरुद्धत्वात्। तथाहि—

लौकिकानि शास्त्रीयाणि च द्विविधानि कर्माणि। तत्र लोकप्रमाणगम्यानि लौकिकानि, शास्त्रैकगम्यानि शास्त्रीयाणि। यथा चाक्षुषं रूपं चक्षुषैव गम्यम्, न तदतिरिक्तश्रोत्रादिभिः;

तथैव शास्त्रगम्यान्यग्निहोत्रादीनि शास्त्रेणैव ज्ञाप्यन्ते, न प्रत्यक्षादिभिः। भोजनं लौकिकमेव। क्षुन्निवृत्तिकामनयैव तत्र समेषां प्रवृत्तिः। तत्प्रकारविशेषे तु विधिनिषेधौ उपसंक्रामतः।

शुचिना शुद्धस्थले शुद्धनिर्मितं शुद्धान्नं भोक्तव्यम्, नाशुद्धमशुद्धपुरुषस्पृष्टं च। यथैतत्, तथैव युद्धमपि स्वत्वरक्षणाद्यर्थं लौकिकं भवति। तथापि नान्यायार्थं योद्धव्यम्। शस्त्रहीनः, भग्नास्त्रः, भीतः, पलायमानो न हन्तव्यः। कट्यधोभागे न हन्तव्यम्। इत्येवमादिषु प्रकारांशेषु विधिनिषेधाः प्रवर्त्तन्ते। लौकिकप्रमाणैरप्राप्तांशेष्वेव विधानम्। तदंशेष्वेव धर्मयोगः। तत एव धर्म्यं युद्धम्, धर्म्यं भोजनमित्युच्यते। शास्त्रगम्येषु कर्मसु तत्फलेषु तेऽधिकारिणो भवन्ति ये 'अविद्यया मृत्युं तीर्त्वा" इति वेदवचनानुसारेण वैदिककामकर्मज्ञानलक्षणयाऽविद्यया पाशविककामकर्मज्ञानलक्षणं मृत्युमतितरीतुमिच्छन्ति।

"विषस्य विषमौषधम्, कण्टकेन कण्टकोद्धारः" इत्यादिन्यायैर्वैदिककामकर्मज्ञानपरायणतायां दृढायां पाशविकलौकिककामकर्मज्ञानानि स्वतः प्रविलीयन्ते। ततोऽप्युच्चस्तरीयास्तु कामरहितानि ( फलकामनारहितानि ) कर्मज्ञानान्येवानुष्ठेयानि मन्यन्ते। ततोऽप्युच्चतमास्तु ब्रह्मसमाध्यभ्यासप्रभावेण सर्वाणि कर्माणि ज्ञानानि च परित्यज्य ब्रह्मनिष्ठा एव भवन्ति। ये धर्मविरुद्धैर्लौकिकैरन्याययुक्तैर्मार्गैरभीष्टधनरत्नादिभोगसाधनान्युपार्जयन्ति, ते निन्द्या भवन्ति। ये तु शास्त्राविरुद्धैर्न्यायोपेतैर्मार्गैरभीष्टं साधयन्ति, तेऽनिन्द्या भवन्ति। ये खलु शास्त्रोक्तैर्मार्गैरभीष्टं साधयन्ति ते प्रशस्ताः, निष्कामकर्मानुष्ठायिनोऽतिप्रशस्ताः। सर्वकर्मतत्फलत्यागिनो ब्रह्मनिष्ठास्तु प्रशस्ततमाः।

न च फलकामनाराहित्ये किमर्थं कर्मानुष्ठेयमिति वाच्यम्, तादृक्कर्मानुष्ठानस्य चित्तशुद्धिक्रमेण नैष्कर्म्यज्ञानहेतुत्वेन सर्वतः सम्प्लुतोदकस्थानीयब्रह्मप्राप्तिफलकत्वेन महाफलत्वात्।

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥

( गी० २।४६ )

इति गीतावचनात्। न च प्रथमत एव कर्मत्यागेन तत्संभवति, विकर्मगर्ते विनिपातसम्भवात्।

नाचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः॥

इत्युक्तेः। निष्कामकर्मानुष्ठानेन तु बुद्धिशुद्धया तत्त्वज्ञानं जायते।

वेदोक्तमेव कुर्वाणो निःसङ्गेऽर्पितमीश्वरे ।
नैष्कर्म्यसिद्धिं लभते रोचनार्था फलश्रुतिः ॥

इति वचनात् ।

"कुरु कर्मैव तस्मात्त्वम्; कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इत्याद्युपदेशो न श्रमिकाणां कर्मकराणां कृते, न वाऽविद्यया मृत्युमतितितीर्षूणां सकामानां कर्मिणां कृते किन्तु अर्जुनस्तादृशोऽन्ये वा ये पाशविककामकर्मज्ञानमृत्युमविद्ययाऽतितीर्णास्तान् प्रति ततोऽप्युत्कृष्टब्रह्मनिष्ठाप्राप्त्यर्थमयमुपदेशः ।

भो अर्जुन ! त्वं न ब्रह्मनिष्ठो न वा पूर्णविरक्तः, अतः कर्मत्यागानधिकारित्वात् कर्म कुरु । पाशविककामकर्मातिक्रान्तत्वात् फलकामनैरपेक्ष्येण तव कर्मण्येवाधिकारो न कर्मफले । फलकामनाराहित्येऽपि ते अकर्मणि कर्माकरणे संगो मास्तु, तथात्वे पूर्णसंयमतत्त्वज्ञानाप्राप्त्या विकर्मभ्रंशसम्भवात् । 'मा ते सङ्गोऽस्त्वकर्माणि' इति वचनात् । धैर्येण विवेकेन समाजघटकानां समेषामपि स्वधर्मपरायणतायामन्याप्रतिरोधपूर्विका न्यायनिष्णता जागर्ति । तत एव सङ्कटपूर्णेषु सर्वेष्वपि क्षणेषु समाश्वासनं जायते । न सर्वापहारप्रचारेण तत् संभवति, संघर्षपारम्पर्यस्यैव ततो वृद्धिसम्भवात् । भारतीयराजानश्च कदाचिदपि शोषका नासन् । प्रजापालनापेक्षितधनातिरिक्तधनग्रहणनिरपेक्षा आसन् । तथाहि—

लोमश उवाच

ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु ।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥

( म० भा०, व० प० ९८।१ )

अगस्त्य उवाच—

वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ मे ॥

लोमश उवाच—

तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत् ।
अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे ॥
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥
स श्रुतर्वाणमादाय व्रध्नश्वमगमत्ततः ।

( म० भा०, व० प० ९८।४-६ )

अगस्त्य उवाच—

वित्तकामाविह प्राप्तौ विद्धयावां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ तौ ॥

लोमश उवाच—

तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत् ।
अतो ज्ञात्वा तु गृह्णीतं यदत्र व्यतिरिच्यते ॥
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥
पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम् ।
अगस्त्यश्च श्रुतर्वा च ब्रध्नश्वश्च महीपतिः ॥

(म० भा०, व० प० ९८।६-१२)

अगस्त्य उवाच—

वित्तकामानिह प्राप्तान् विद्धि नः पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः ॥

लोमश उवाच—

तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ।
एतज्ज्ञात्वा ह्युपादध्वं यदत्र व्यतिरिच्यते ॥
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥
ततः सर्वे समेत्याथ ते नृपास्तं महामुनिम् ।
इदमूचुर्महाराज समवेक्ष्य परस्परम् ॥
अयं वै दानवो ब्रह्मन्निल्वलो वसुमान् भुवि ।
तमतिक्रम्य सर्वेऽद्य वयं चार्थामहे वसु ॥

लोमश उवाच—

तेषां तदासीदुचितमिल्वलस्यैव भिक्षणम् ।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥

(म० भा०, व० प० ९८।१५-२०)

अत्र धर्मनिष्ठेषु सर्वेषु नृपेषु शोषणकथापि कल्पयितुं न शक्यते ।

मदालसया च स्वपुत्राय राज्ञे उपदिष्टम्, तेनापि राज्ञामपि त्यागप्रधानो धर्मो ज्ञायते—

धरामरान् पर्वसु तर्पयेथाः समीहितं बन्धुषु पूरयेथाः ।
हितं परस्मै धृति चिन्तयेथा मनः परस्त्रीषु निवर्तयेथाः ।।
सदा मुरारिं हृदि चिन्तयेथास्तद्ध्यानतोऽन्तः षडरीन् जयेथाः ।
मायां प्रबोधेन निवारयेथा ह्यनित्यतामेव विचिन्तयेथाः ।।
अर्थागमाय क्षितिपान् जयेथा यशोऽर्जनायार्थमपि व्ययेथाः ।
परापवादश्रवणाद् विभीथा विपत्समुद्राज्जनमुद्धरेथाः ।।
राज्यं कुर्वन् सुहृदो नन्दयेथाः साधून्रक्षंस्तात यज्ञैर्यजेथाः ।
दुष्टान्निघ्नन् वैरिणश्चाजिमध्ये गोविप्रार्थे वत्स मृत्युं भजेथाः ।।

वैदिका आर्या न वन्याः, न वा अर्धवन्याः, किन्तु ज्ञानविज्ञानसम्पन्नाः, इति वेदार्थ-परिशीलिनां न तिरोहितम् । अन्तरिक्षगामिन्यः शतारित्रा नावश्चाश्विनोः सूक्ते ऋग्वेदीये स्पष्टं वैदिकानां प्रगतिवैशिष्ट्यं सूचयन्ति । मृतानामप्युज्जीवनं कर्त्तुं प्राभवन् वैदिका इत्यपि—

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमाहरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय ॥

(अथर्व० सं० ३।११।२)

यदि क्षीणायुर्यदि वा परेतो मृत एव स्यात्, मृत्योरन्तिकं समीपं प्राप्तः स्यात्, तमेनं निर्जीवं निर्ऋतेरुपस्थादङ्कात् शतवर्षजीवनायाहरामि, इति मन्त्रलिङ्गात् सिद्धयति ।

"सहस्रायुः सुकृतश्चरेयम् ।" (अथर्व० सं० ७।१।२७) सहस्रायुरहं सुकृतश्चरेयम् ।

"सहस्रं प्राणा मय्यायतन्ताम् ।" (अथर्व० सं० १७।१।३०) सहस्रं वर्षाणि मयि प्राणा व्यापारवन्तो भवन्तु । "इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानम्"

(ऋ० सं० ७।१०४।२४)

हे इन्द्र, मायया कपटाचारेण शाशदानं दुःखप्रदं यातुधानं राक्षसं पुमांसं स्त्रियं वा जहि नाशय ।

इति मन्त्रतन्त्रादिभिः यातुधानादिनाशनशक्तिरप्यासीद्वैदिकेषु, इत्यपि सिद्धयति ।

"पुनश्च्यवानं चक्रथुर्युवानम्" । (१।११८।६) हे अश्विनौ, युवां च्यवानं च्यवनर्षिं युवानं चक्रथुः । "च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत् । सोऽजीर्यत् । तमेतेन साम्नाप्सु व्यैङ्कयतान्तं पुनर्युवानमकुरुताम्" । (ताण्ड्यब्रा० १४।६।१०)

"तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेष आवामनुप्रेहीति । सा होवाच । यस्मै मां पिताऽदात्तन्नैवाहं तं जीवन्तं हास्यामि" इति (शत० ब्रा० ४।१।५।६)

अत्र मन्त्रेण ब्राह्मणेन च च्यवनस्य वृद्धस्यापि यौवनप्राप्तिरश्विकृपयोच्यते । किमेतत् साम्यसंधीयमनुष्याणामेव कृत्यम्? दिव्यशक्तिदेवाद्यनङ्गीकारे कथमुक्तब्राह्मणस्य मन्त्रस्य च संगतिः? श्रुत्यर्थस्तु दाधीचश्च्यवनोऽश्विनोः प्रिय आसीत्। सो जीर्यात् वृद्धो जीर्णः सञ्जातः, तमेतेन साम्ना स्नानौषधादिभिः पुनर्युवानमकुरुताम् युवाम् ।

"आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्" ।

(ऋ. सं. १।११७।२२)

तदर्थस्तु अश्विनौ आथर्वणाय दधीचे अश्वशिरः प्रत्यैरयतम् प्रतिसन्ध्यानं कृतवन्तौ ।

"दध्यङ् ह वा आथर्वणः" (श. ब्रा. १४।१।१।१८)

तौ होपनिन्ये । तौ यदोपनिन्ये । अमास्य शिरश्छित्वा अन्यत्रापनिदधतुः । अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः । (श. ब्रा. १।४।१।२४)

किं छिन्नस्य शिरसः पुनः प्रतिसन्धानेनोज्जीवनं ज्ञानविज्ञानशून्यानां कार्यं संभवति? यदि साम्यसाधनाय तादात्विकवृत्तवेदनाय वेदमन्त्राणां प्रामाण्यमास्थीयते तदोक्तप्रगतिबोधकमन्त्राणां कथं न प्रामाण्यम्? तस्माद् वैदिका ऋषयः प्रगतिशीला आधुनिका इव विज्ञानसम्पन्ना नासन्निति मुधैव कल्पना । तदेवं भारतीयमर्थशास्त्रं सर्वाङ्गपूर्णं सर्वहितकरं सर्वोपरि वर्वर्त्ति ।*

—क्रमशः

---

* वाराणसेयसंस्कृतविश्वविद्यालयस्य द्वादश (१२) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां पूज्यपादैः विद्वन्मूर्धन्यैः अनन्तश्रीविभूषितैः स्वामिश्रीहरिहरानन्दसरस्वती (श्रीकरपात्र) महोदयैः प्रदत्तमिदं विशिष्टव्याख्यानम्—सम्पादकः ।

# श्रीमद्भागवतदर्शनं पुरुषार्थश्च*

( निगमकल्पतरुः )

द्वितीयं प्रवचनम्

नमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ।

विश्वसर्गविसर्गादि नवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥
वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ते हृदये संवित् तं नृसिंहमहं भजे ॥
निर्गुणं व्यापकं ब्रह्म निरञ्जनमजं परम् ।
लीलयानन्तकन्दर्पलावण्यं सुमनोहरम् ॥
स्वतन्त्रं सर्वगं शान्तं भक्तवश्यं गुणाकरम् ।
सर्वशक्तिनुमोऽनन्तं कौसल्यानन्दवर्धनम् ॥
निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥
(श्री० भा० १।१।३)

इति पद्योक्तरीत्या श्रीमद्भागवतस्य निगमकल्पतरो रसात्मकफलत्वात् सर्वपुरुषार्थसार-सर्वरससार-निर्गुण-सगुणब्रह्मपर्यवसायित्वेन तदभिन्नत्वमेव। सर्वशास्त्रफलरूपमिदम्, अतः परमा-

---

* वाराणसेयसंस्कृतविश्वविद्यालयस्य द्वादश (१२) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां पूज्यपादैः विद्वन्मूर्धन्यैः अनन्तश्रीविभूषितैः स्वामीश्रीहरिहरानन्द-सरस्वती (श्रीकरपात्र) महोदयैः प्रदत्तेषु विशिष्ट प्रवचनेषु द्वितीयमिदम्—सम्पादकः।

दरेण सेव्यमित्याह भगवान् बादरायणः—निगमो वेदः स एव कल्पतरुः, सर्वपुरुषार्थोपायत्वात्, तस्य फलं भागवतं नाम। तत्तु वैकुण्ठगतं नारदेनानीय मह्यं दत्तम्। मया च शुकमुखे निहितम्। तन्मुखाद्भुवि गलितम्। शिष्यप्रशिष्यादिरूपपल्लवपरम्परया शनैरखण्डमेवावतीर्णम्, न तूच्चनिपातेन स्फुटितम्। भविष्यमप्येतद्भूतवन्निर्दिष्टम्, अनागताख्यानेनैवास्य शास्त्रस्य प्रवृत्तेः। श्रुतिस्मृतिषु वेदपूर्विकाया अर्थसृष्टेरुक्तत्वात्। तेनास्य भागवतस्य श्रीव्यासदेवात् प्राकट्यमेव, न व्यासकर्तृकत्वम्। तत्कल्पितत्वे तु लौकिकगाथावद् नास्य संसारनिस्तारकत्वं सेत्स्यति, तस्माद्वेदोपबृंहकस्य तत्सारभूतस्य भागवतस्यापि वेदवदेव नित्यत्वम्। केवलमानुपूर्वीपरिवर्तनराहित्यसाहित्याभ्यां वेदानां पुराणानाञ्च परस्परं वैलक्षण्यम्। एतस्मादेवामृतरूपेण द्रवेण संयुतम्। शुकतुण्डस्पृष्टं फलममृतमिव स्वादु भवतीति लोके प्रसिद्धम्। शुको मुनिः। अमृतं परमानन्दः। स एव द्रवो रसः। 'रसो वै सः', 'रसᳪ ह्येवायं लब्ध्वानन्दीभवति' इति श्रुतेः। अतो भो रसिकाः! अहो भुवि गलितमिति अलभ्यलाभोक्तिः। इदं भागवतं फलं मुहुः पिबत।

ननु फलं चोष्यते, न पीयते इति चेन्नात्र त्वगस्थ्यादेर्हेयांशस्याभावात्, रसतादात्म्येन फलस्य रसरूपत्वात्, रसरूपस्य फलस्य पेयत्वसम्भवात्। एतच्च जीवन्मुक्तैरपि सेव्यत्वाद् मोक्षेऽपि पेयमिति न स्वर्गादिसुखवन्मुक्तैरुपेक्ष्यते—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥
(श्री० भा० १।७।१०)

इति वचनात्।

अयमभिप्रायः—आम्रादिबीजाङ्कुरशाखोपशाखापत्रपुष्पाद्यपेक्षया तत्फले तत्रापि पक्के सौन्दर्यं माधुर्यञ्चातिशयं व्यज्यते। तत्रापि तृणादिजनितोष्मादिनैरपेक्ष्येण स्वतः परिपक्के पक्त्वा च स्वयं गलिते, तत्रापि शुकतुण्डसंस्पृष्टे फले निरतिशयमेव माधुर्यं व्यज्यते। कल्पतरुस्तु मनःप्रार्थितं लोकोत्तरमपि फलं राति। कल्पतरोस्तु फलं ततोऽपि पत्रपुष्पाद्यपेक्षयातीव मधुरं भवति। निगमकल्पतरुस्तु प्राकृतकल्पतर्वपेक्षयापि महामहिमवैभवः। नितरां गमयति चतुर्विधपुरुषार्थसाधनानीति निगमः। स च प्रमाणमूर्धन्यो वेदः। तादृशस्य निगमकल्पतरोः स्वतः परिपक्वं सद् गलितं शुकमुखस्पृष्टं भागवताख्यं फलं परममधुररसात्मकमेवेति मन्तव्यम्। लौकिकोऽपि शुकोऽमृतमुखोऽभिप्रेयते। ततस्तन्मुखं प्राप्य तत्तत्फलं विशेषतः स्वादु यथा भवति, तथैव ब्रह्मविद्वरिष्ठपरमभागवतवृन्दमहेन्द्रश्रीशुकदेवमुखसम्बद्धं किमुतेति।

अत्र श्रीमज्जीवगोस्वाम्युद्धृतहयशीर्षपञ्चरात्रवचनानि—

द्रव्यतत्त्वं शृणु ब्रह्मन् प्रवक्ष्यामि समासतः ।
सर्वभोगप्रदा यत्र पादपाः कल्पपादपाः ॥
गन्धरूपं स्वादुरूपं द्रव्यं पुष्पादिकञ्च यत् ।
हेयांशानामभावाच्च रसरूपं भवेच्च तत् ॥
त्वग्बीजञ्चैव हेयांशं कठिनांशञ्च यद्भवेत् ।
सर्वं तद्भौतिकं विद्धि नह्यभूतमयं हि तत् ॥

श्रीमज्जीवगोस्वामिरीत्या निगमकल्पतरोः सर्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुण्ठ-मप्यध्यारूढस्य वेदरूपतरोर्यत्खलु रसरूपं भागवताख्यं फलं तदेव भुवि स्थितानामपि प्राप्तम् ।

श्रीमद्वल्लभाचार्यरीत्या व्यापकवैकुण्ठे प्रणवबीजो वेदतरुरस्ति । ततो वयासाख्य-भगवदवतारे, आदिनारायणावतारे वा सर्वजनाह्लादनार्थं मूर्तिभूतं देवतात्मकं तस्य फल-मानीतम् । यथादित्यो देवमधु, यथा चास्माकं सारघं मधु, यथा च स्वर्गे कल्पवृक्षः, तथा वैकुण्ठेऽपि वेदैकसमधिगम्ये शब्दरसात्मकः कल्पवृक्षः । स च नितरां ब्रह्म गमयति, तेन निगमः । स च सर्वफलदानसमर्थत्वात् कल्पः, स चासौ तरुः कल्पतरुः । अतिपक्वं फलं गलति ( स्वयमेव पतति ) । शब्दात्मके वृक्षे शब्दात्मकमेव फलं सर्ववेदार्थविचारे भगवद्धृदय एव फलितम् । निर्धारितार्थप्रतिपादकशब्दराशिः । अयमर्थो गोप्योऽपि भक्त-चिन्तया परवशस्य भगवतो हृदयादागतमिति गलितम् ।

यथा गीताया भगवन्मुखपङ्कजनिःसृतत्वेऽपि वेदोपनिषन्मूलकत्वेनैव प्रामाण्यम्, न सर्वज्ञभगवदुक्तत्वेन, तथा सति बुद्धस्यापि भगवदवतारत्वेन तदुक्तेरपि प्रामाण्यापातात् । भगवत्सर्वज्ञदायास्तूपनिषद्धेनुदोग्धृत्वेनैवोपयोगः । वेदानान्तु भगवन्निःश्वसितत्वेन निःश्वास-वदेव बुद्धिप्रयत्नविशेषनिरपेक्षत्वेनाकृत्रिमत्वात् पौरुषेयत्वेनैवापास्तसमस्तपुंदोषशङ्काकलङ्कत्वेन स्वतः प्रामाण्यमेव । तथैव श्रीमद्भागवतस्यापि निगमकल्पतरुफलत्वोक्त्या निगममूलकत्वेनैव प्रामाण्यं निगदव्याख्यातम् । अत एव—

वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् ।
भक्तिज्ञानविरागाणां नोदतिष्ठत् त्रिकं तु यत् ॥
श्रीमद्भागवतालापात् तत्कथं बोधमेष्यति ।
तत्कथासु तु वेदार्थः श्लोके श्लोके पदे पदे ॥

( श्री० भा० मा० अ० २ श्लो० ६४-६५ )

इति नारदप्रश्ने कुमारैरुक्तम्—

वेदोपनिषदां साराज्जाता भागवती कथा।
अत्युत्तमा ततो भाति पृथग्भूता फलोन्नतिः॥
आमूलाग्रं रसस्तिष्ठन्नास्ते न स्वदते यथा।
सम्भूय स पृथग्भूतः फले विश्वमनोहरः॥
यथा दुग्धे स्थितं सर्पिर्न स्वादायोपकल्पते।
पृथग्भूतं हि तद्दिव्यं देवानां रसवर्धनम्॥
इक्षूणामादिमध्यान्तं शर्करा व्याप्य तिष्ठति।
पृथग्भूता च सा मिष्टा तथा भागवती कथा॥

(श्री० भा० मा०, अ० २, श्लो० ६७-७०)

यथेक्षुसारभूताः शर्करा-सिता-कन्दादय इक्षुमूलका एव सन्तो वैलक्षण्यतारतम्योपेता भवन्ति, यथा वा दुग्धमूलकमेव दुग्धसारसर्वस्वं सर्पिरुत्कृष्टं भवति, तथैव वेदमूलकमेव वेदसारसर्वस्वभूतं श्रीमद्भागवतं वेदमूलकत्वेनैव प्रमाणतमं भवति।

इदमिह विशेषतोऽवधारणीयं यदैहिकामुष्मिकः सर्वोऽपि साध्यसाधनभावः प्रमाणमूलक एव प्रसिद्ध्यति। प्रमाणञ्च प्रमाकरणमेव। प्रमात्वञ्चानधिगताबाधितविषयज्ञानत्वमेव। वेदान्तरीत्या प्रपञ्चस्य मिथ्यात्वेऽपि संसारदशायामबाधितत्वस्याव्याहतत्वात्। प्रत्यक्षप्रमा चात्र चैतन्यमेव, तस्यैव स्वतोऽपरोक्षत्वात्। यद्यपि तस्यानादित्वेन न तत्करणत्वं चक्षुरादेः सङ्घटते, तथापि तदभिव्यञ्जिकाया अन्तःकरणवृत्तेश्चक्षुरादिजन्यत्वसम्भवेन वृत्तिविशिष्ट-चैतन्यस्य सादित्वोपपत्त्या चक्षुरादीनां तत्करणत्वे बाधाभावात्। मनसः सावयवत्वेन मध्यम-परिमाणस्य चक्षुरादिसन्निकर्षद्वारावरके तमस्यपनीते तडागोदकस्य कल्यात्मना केदारान् प्रविश्य तत्तदाकारवच्चक्षुरादिप्रणालिकया घटादिविषयदेशमुपगतस्य तत्तदाकारतापत्तिः।

घटमठयोरिव विभाजकयोरुपाध्योरेकदेशस्थत्वेन विभेदाजनकत्वादुपहितयोरभेद एव। तथा च वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वमेव घटांशे घटज्ञानस्य प्रत्यक्षत्वम्, विषयस्य तु प्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वाभावत्वमेव प्रत्यक्षत्वम्। घटादेः स्वावच्छिन्न-चैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्तातिरिक्ताया आरोपित-सत्ताया अनङ्गीकारात्।

यथा प्रकाशः स्वतः प्रकाशते, तदन्यत्तु तत्संसर्गेण चैतन्यस्यासङ्गत्वेन तस्याध्यासिक-संसर्गमन्तरा नान्यः संसर्गः सम्भवतीति विषयस्य विषयावच्छिन्नचैतन्येनाध्यासिकसम्बन्धसत्त्वेऽपि

न प्रमातृचैतन्येन तत्सम्बन्ध इति तत्संसर्गसाधनायैव चक्षुरादिव्यापारः। अन्तःकरणघटयोरेकदेशस्थत्वेनान्तःकरणावच्छिन्नचैतन्यरूपप्रमातृचैतन्येन विषयावच्छिन्नचैतन्यरूपप्रमेयचैतन्यस्यैक्यं भवति। तथा च विषयावच्छिन्नचैतन्याध्यस्तमपि घटादिकं प्रमातृचैतन्याध्यस्तं भवति। तावतैव विषयस्य प्रमातृचैतन्येनाध्यासिकसंसर्गत्वात् चैतन्येन घटादिविषयप्रकाशः सम्पद्यते।

अनुमित्यादिस्थले तु चक्षुराद्यसंसर्गेणान्तःकरणस्य वह्न्यादिदेशगमनाभावेन विषयान्तःकरणभेदाभावेन न प्रत्यक्षत्वम्, किन्तु व्याप्तिज्ञानादिजन्या परोक्षवृत्तिरेव जायते। सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य नियमेनैकत्रास्थितोपाधिद्वयावच्छिन्नत्वान्नियमेनाहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वमेव।

धर्माधर्मयोरन्तःकरणनिष्ठत्वेऽप्योग्यत्वादेव शब्दादिना तदाकारवृत्तौ जातायामपि न वृत्ति-तदवच्छिन्नचैतन्ययोरभेदः, योग्यत्वस्यापि विषयविशेषणात्। योग्यत्वायोग्यत्वयोस्तु फलबलकल्प्यस्वभावत्वस्यैव शरणत्वात्।

वर्तमानदशायां त्वं सुखीति वाक्यजन्यस्यापि ज्ञानस्य प्रत्यक्षतैव। अत एव 'दशमस्त्वमसि' इतिवत् 'तत्त्वमसि'इति महावाक्यजन्यस्याप्यहं ब्रह्मेति ज्ञानस्य प्रत्यक्षत्वमेव।

'रूपी घटः' इत्यत्र रूपाकारवृत्तिदशायां तत्र परिमाणसत्त्वेऽपि परिमाणाद्याकारवृत्त्यभावेन प्रमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभेदाभावेन न तत्प्रत्यक्षता।

सांख्यादिदृष्ट्या प्रमीयतेऽनेनेति प्रमाणमिति व्युत्पत्त्या प्रमां प्रति करणत्वमेव प्रमाणलक्षणम्। 'असन्दिग्धाविपरीतानधिगतविषयाचित्तवृत्तिः' प्रमाणम्। बोधश्च पौरुषेयः। फलं प्रमा। एतेन संशयविपर्ययस्मृतिसाधनेषु नातिव्याप्तिः। चैतन्यप्रतिबिम्बविशिष्टबुद्धिवृत्तिः, वृत्तिप्रतिबिम्बितचैतन्यं वा फलपदार्थः। स एव मुख्यप्रमापदवाच्यः। तत्करणत्वेन वृत्तेः प्रमाणत्वम्। वृत्तिकरणत्वेनेन्द्रियादीन्यपि प्रमाणपदवाच्यानि भवन्ति।

नैयायिकादिरीत्या त्विन्द्रियत्वेन रूपेणेन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। अनुमितौ व्याप्तिज्ञानस्य, शाब्दे पदज्ञानस्य, स्मृतावनुभवस्य कारणत्वात् तत्र नाव्याप्तिः। इदञ्चेश्वरज्ञानसाधारणं लक्षणम्। पूर्वं तद् व्यावृत्तमेव। आलोके सति महत्त्वे सति उद्भूतरूपवत्त्वं चाक्षुषद्रव्यप्रत्यक्षे कारणम्। द्रव्यसमवेतरूपप्रत्यक्षे तु स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतरूपत्वादेः प्रत्यक्षे तु स्वाश्रयसमवेतसमवायसम्बन्धेनेति। एवं गन्धप्रत्यक्षे

घ्राणसंयुक्तसमवायः, गन्धसमवेतस्य प्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम्। शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम्, शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम्।

वेदान्तिरीत्या वृत्तिजननेऽप्येतेषां सम्बन्धानामुपयोगः। सांख्यदृष्ट्या प्रतिविषयाध्यवसायः प्रत्यक्षलक्षणम्। श्रीमद्भागवते त्वेकादशवृत्तयोऽङ्गीकृताः—

एकादशासन् मनसो हि वृत्तय आकूतयः पञ्च धियोऽभिमानः।
मात्राणि कर्माणि पुरञ्च तासां वदन्ति हैकादश वीर भूमीः॥

(५।११।९)

श्रोत्रादीनि दश, एकञ्च स्वयं मन इत्येकादशेन्द्रियाणि, तैरिन्द्रियैर्बहिः रूपादिषु प्रवर्तमानस्यैकादशवृत्तयो भवन्ति। तदुक्तम्—

एकादशेन्द्रियद्वारा स्युरेकादश वृत्तयः।

तत्राकूतयः क्रियाकाराः पञ्च, धियो ज्ञानाकाराः पञ्च, अभिमानश्च, मात्राणि शब्दादयो विषयाः, विसर्गादीनि कर्माणि, पुरं शरीरम्, तासां वृत्तीनां भूमीर्विषयान् वदन्ति। वीरेति सम्बोधनम्।

अन्यत्र च श्रीमद्भागवते जाग्रदादयोऽवस्था अपि बुद्धिवृत्तिरूपा एवोक्ताः—

जाग्रत्स्वप्नः सुषुप्तञ्च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः॥

(श्री० भा० ११।१३।२७)

सत्त्वोद्रेके प्रमारूपा वृत्तयो भवन्ति। रजसा दोषैश्च संशयविपर्ययौ भवतः। तमसा निद्रारूपा वृत्तिर्जायते।

दैवस्य फलाभिमुखस्य प्राक्तनकर्मणो दैवस्य देवसमूहस्य परमेश्वरस्य देहादेश्च सर्वकार्येष्विवात्रापि हेतुत्वम्।

अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्।
विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्॥

(१८।१४)

इति श्रीमद्भगवद्गीतावचनात्।

ननु प्रत्यक्षेणैव सर्वव्यवहारोपपत्तौ तदतिरिक्तानुमानादिप्रमाणोपगमो व्यर्थ एव, न च देहातिरिक्तात्मपरमात्मस्वर्गमोक्षादिसिद्ध्यर्थं तदुपगम इति वाच्यम्, तत्सिद्धेरेवासिद्धेः। न चानुमानादिसमुत्पत्तिसम्भवः यतो व्याप्तिपक्षधर्मताशालिलिङ्गमनुमितिकारणमित्यनुमानप्रामाण्यवादिभिरुपेयते। व्याप्तिश्चोपाधिविधुरसम्बन्ध एव। स च न चक्षुरादिवत्सत्तया हेतुत्वमुपगच्छति, किन्तु ज्ञाततयैव। न च तत्र प्रत्यक्षप्रसरस्तस्य वर्तमानगोचरत्वेन भूतभविष्यतोस्तदसम्भवात्। नाप्यनुमानं व्याप्तिज्ञानोपायः, तत्राप्येवमित्यनवस्थानात्। नापि शब्दस्तत्साधनम्, तस्यापि वृद्धव्यवहाररूपलिङ्गावगतिसापेक्षतया पूर्वोक्तदूषणग्रासात्। न च वचनमात्रविश्वासेन धूमवह्न्योरविनाभावनिश्चयः। न वा विविधदेशकालवर्तिधूमवह्निव्यक्तिज्ञानसम्भवः, तदभावे च कुतो व्याप्तिग्रहः, उपाध्यभावोऽपि दुर्बोधः। उपाधीनां प्रत्यक्षत्वनियमासम्भवेन प्रत्यक्षाणामुपाधीनामभावस्य प्रत्यक्षत्वेऽप्यप्रत्यक्षाणामुपाधीनामभावस्याप्रत्यक्षतयानुमानाद्यपेक्षायामुक्तदूषणानतिवृत्तेः। किञ्च, साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणमास्थीयते। तत्रोपाधिज्ञानार्थमपि साध्यव्यापकत्वज्ञानमपेक्षितम्, तदपि च व्याप्तिज्ञानाधीनमेवेति कुतो नान्योन्याश्रयतेति चेन्न, तादात्म्य-तदुत्पत्तिभ्यामविनाभावस्य सुज्ञानत्वात्। तदुक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽदर्शनान्न न दर्शनात्॥

ननु कार्यकारणभावेऽपि व्यभिचारशङ्का भवत्येवेति वाच्यम्, कारणं कार्यव्यभिचारि स्यात् चेत्, तर्हि कारणं विना कार्यमुत्पद्येत। न च कारणमन्तरा कार्यमुत्पद्यते, दृष्टविरोधादिति व्यभिचारशङ्कानिवर्तकस्य तर्कस्य सत्त्वात्। तदेवाशङ्क्यं यस्मिन्नाशङ्क्यमाने व्याघातादयो न भवेयुः। अत्र तु भवत्येव व्याघातः। कार्यस्य कारणोत्पत्तेः प्रागनुपलम्भः। कारणोपलम्भे सति कार्योपलम्भः। कारणानुपलम्भादनुपलम्भश्चेति धूमवह्न्योः कार्यकारणभावोपलम्भः।

एवमेव यदि निम्बो वृक्षत्वमतिपतेत्, तर्हि स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः।

निम्बवृक्षयोस्तादात्म्यनिश्चयस्तु निम्बो वृक्ष इति सामानाधिकरण्यबलात्। न ह्यत्यन्ताभेदे तत्सम्भवति, पर्यायत्वेन यौगपद्येन, तयोः प्रयोगासम्भवात्। नाप्यत्यन्तभेदे गवाश्वयोरनुपलम्भात्। नैयायिकरीत्या तु सामान्यलक्षणप्रत्यासत्त्या धूमत्वेन सन्निकर्षेण धूम इत्येवं सकलधूमविषयकं ज्ञानं जायते। वह्नित्वेन सन्निकर्षेण वह्नय इति सकलवह्निविषयकं ज्ञानं भवति, तेन व्याप्तिज्ञानं नासंभवमिति, अपि चानुमानं न प्रमाणमित्यत्र किमपि प्रमाणमस्ति न वा? नान्त्यः, प्रतिज्ञामात्रेण तदसिद्धेः। अनुमानप्रामाण्यं तु न वक्तुं शक्यते त्वया तदनभ्युपगमात्।

किञ्च, नानुमानं प्रमाणमिति वदता चार्वाकेण कथमन्यगता विप्रतिपत्तिः, प्रतिपित्सा, संशीतिर्विपरीतावगतिरनवगतिश्च प्रत्यक्षेणावगन्तुं शक्या ? अनुमानन्तु तेन नाभ्युपगम्यते। अनवधृताज्ञानसंशय-विपर्ययस्तु यं कञ्चन प्रति प्रतिपादयितुं प्रवर्तमानः प्रमत्त एव स्यात्। मुखाकृत्या व्यवहारेण, वचनेन वा तदनुमानेऽनुमानप्रामाण्याभ्युपगम एव बलाच्छिरसि निपतितः।

एवमेव शब्दप्रामाण्याभ्युपगमोऽप्यावश्यकः।

## शब्दस्य स्वतन्त्रप्रामाण्यम्

केश्चिदुच्यते यत् "शब्दो नानुमानाद्भिद्यते, तदभिन्नविषयत्वात्, तदभिन्नसामग्रीसमन्वितत्वाच्च। उभयोरपि सामान्यगोचरत्वात् सम्बद्धार्थबोधकत्वाच्च समानतैव भवति। धूमस्येव सम्बद्धार्थबोधकत्वाच्छब्दस्यापि लिङ्गत्वमेव। यो हि शब्दो यत्रार्थे लोके दृश्यते, स तस्य वाचको भवति, यत्र तु न दृश्यते, न तद्वाचकः। यथा प्रत्यक्षेण धूमं दृष्ट्वा वह्निं प्रत्येति, तथैव शब्दं श्रुत्वा तदर्थं प्रत्येति। न च शब्दे दृष्टान्तानपेक्षत्वम्, अनुमाने तु तदपेक्षत्वमिति वैधर्म्यमिति वाच्यम्, अभ्यस्तविषये द्वयोरपि तन्निरपेक्षत्वात्। विलक्षणामेव शब्दः प्रमाणं न बाह्ये व्यभिचारात्" इति, तन्मन्दम्, शब्दानुमानयोर्विषयादिभेदसिद्धेः। तथाहि—शब्दस्यार्थमात्रं विषयः, साध्यविशिष्टो धर्मस्त्वनुमानविषयः। तदुक्तं न्यायमञ्जरीकृता—विषयस्तावद्विसदृश एव पदलिङ्गयोः। तद्वन्मात्रं पदस्यार्थः, अनुमानं तु वाक्यार्थविषयम्, 'अग्निमान् पर्वतः' इति प्रतिपत्तेः। सामान्यगोचरत्वेन शब्दस्यानुमानत्वे तु प्रत्यक्षस्यापि सामान्यगोचरत्वेनानुमानापत्तिः स्यात्। सम्बद्धार्थप्रतिपत्तिहेतुतापि प्रत्यक्षे भवत्येवेति, तेनापि तत्त्वं स्यात्। न चाभिन्नसामग्रीत्वं पक्षधर्मतादिरूपत्रितयस्य शब्देऽसम्भवात्। नहि शब्दे पक्षधर्मता सम्भवति, कस्यचिद्धर्मिणस्तत्रासम्भवात्। न शब्दो धर्मी, तस्यैव च हेतुत्वे हेतोः प्रतिज्ञार्थैकदेशत्वप्रसङ्गात्। न च शब्दत्वं हेतुः, तथाप्यनुपपत्तेः। शब्दस्य धर्मिणोऽर्थविशिष्टत्वे वह्निपर्वतयोरिव शब्दार्थयोरभिन्नदेशस्थत्वाभावेन धर्मधर्मिभावासम्भवः। न चार्थविशिष्टं शब्दं कश्चिदवैति। अर्थप्रत्यायनशक्तियुक्तत्वस्य साध्यत्वेऽपि नोपपत्तिः, शब्दस्यार्थावगत्यर्थमेव प्रयोगदर्शनेन शक्तिसिद्धये तदप्रयोगात्। अर्थप्रतीतिविशिष्टस्य साध्यत्वमपि न सम्भवति, असिद्ध्यार्थप्रतीत्या शब्दस्य तद्वत्त्वेऽतिप्रसङ्गः, तत्सिद्धावनुमानवैयर्थ्यम्। न चार्थप्रतीतिहेतुत्वादर्थस्यैव पक्षधर्मता सम्भवति, अन्योन्याश्रयात्। पक्षधर्मत्वसिद्धौ शब्दस्यार्थप्रतीतिहेतुत्वसिद्धिस्तत्सिद्धौ च पक्षधर्मत्वसिद्धिः। तत्प्रतीतिहेतुत्वेन चार्थस्य तद्धर्मत्वे चक्षुरादेरपि पक्षधर्मतासिद्धेस्तदुत्पन्नापि प्रतीतिरनुमितिर्भवेत्।

देशे काले च शब्दार्थयोरननुगमान्नान्वयव्यतिरेकावपि सम्भवतः। न हि यत्र पिण्डखर्जूरादिशब्दस्तत्र पिण्डखर्जूराद्यर्थः सम्भवति। यथा यत्र धूमस्तत्राग्निः, न तथा देशकृतोऽन्वयः शब्दार्थयोः नापि कालकृतः, रावणादिशब्दानां वर्तमानत्वेऽपि तदर्थानामविद्यमानत्वात्। रावणादिव्यक्तिमन्तरा रावणादिजातेरपि विद्यमानता दुर्निरूपैव। यत्रार्थे शब्दो दृष्ट इतीदृगन्वयादिभिस्तु वाच्यवाचकभावनिर्णय एव। नैतावतास्यानुमानत्वम्, तथात्वे प्रत्यक्षस्यापि तदापत्तेः। 'घटसत्त्वे प्रत्यक्षत्वम्, तदभावे त्वप्रत्यक्षत्वम्' इत्यन्वयादेस्तत्रापि सत्त्वात्। सम्बन्धस्मृतिसंशयोपमानादिष्वपि नातिप्रसक्तिः। सम्बद्धार्थप्रतिपत्तिहेतुत्वन्तु प्रत्यक्षादावतिव्याप्तम्।

शब्दो नानुमानम्, तद्भिन्नविषयत्वात्, तद्भिन्नसामग्रीकत्वाच्च प्रत्यक्षवत्। ऋष्यार्यम्लेच्छादिभिः शब्दस्य यथेष्टं नियुज्यमानस्याप्यर्थप्रतीतिहेतुत्वं दृश्यते। न तथा कृतकत्वं नित्यत्वसाधनाय धूमत्वादिकं वा जलादिसाधनाय नियुज्यमानं तत्प्रतीतिहेतुर्भवति।

शब्दो नानुमानम्, अनाप्तप्रणीतत्वेनैवाव्यभिचारिज्ञानजनकत्वात्। कृतकत्वादिहेतोस्तु साध्याव्यभिचारिज्ञानेऽविनाभाव एव निमित्तं नानाप्तप्रणीतत्वादिकम्। अस्मिन्नेव प्रसङ्गे न्यायदर्शने पूर्वपक्षः–"शब्दोऽनुमानम्,अर्थस्यानुपलब्धेरनुमेयत्वात्" (अ० २ आ० १।४६) इत्यत्रोक्तं शब्दोऽनुमानम्, न प्रमाणान्तरम्, कस्मात्? शब्दार्थस्यानुमेयत्वात्। यथानुपलभ्यमानो लिङ्गी मितेन लिङ्गेन, पश्चादनुमीयते, तथैव मितेन शब्देन पश्चान्मीयतेऽनुपलभ्यमानोऽर्थ इत्यनुमानं शब्द उपलब्धेरद्विप्रवृत्तित्वाच्च (५० तदेव)। यथाऽनुमानोपमानयोरन्यथाऽन्यथोपलब्धिर्द्विप्रवृत्तिः, तथा शब्दानुमानयोर्द्विप्रकारोपलब्धिर्भवति संबन्धाच्च (५१) यथा सम्बद्धयोर्लिङ्गलिङ्गिनोः सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणम्, तथैव शब्दार्थयोः सम्बन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणम्। एवं पूर्वपक्षं प्रदर्श्य सिद्धान्ते शब्दस्य स्वतन्त्रप्रामाण्यमुक्तम्। आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः (५२)। स्वर्गः, अप्सरसः, उत्तराः कुरवः, सप्तद्वीपाः, समुद्रः (क्षीरसमुद्रादिः), लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात् प्रत्ययः, किं तर्ह्याप्तैरयमुक्तः शब्द इत्यतः संप्रत्ययः, विपर्ययेण सम्प्रत्ययाभावान्न त्वेवमनुमानं सम्भवति। अत एवोपलब्धिप्रकारभेदोऽपि तयोः सिद्ध्यत्येव। उपलब्धिभेदरूपत्वादेव न तयोरैक्यम्। सूत्रार्थस्तु–आप्तस्य–भ्रमादिशून्यस्य य उपदेशः शब्दस्तत्र यत्सामर्थ्यम्, आकाङ्क्षायोग्यतादिमत्त्वं ततोऽर्थसंप्रत्ययः। तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे संप्रत्ययः शाब्दबोधो भवति। शब्दादमुमर्थं प्रत्येमि, न त्वनुमिनोमीत्यनुव्यवसायात्। शब्दार्थयोः सङ्केतरूपसंबन्धसत्त्वेऽपि न प्राप्तिलक्षणः सम्बन्धः। येनेन्द्रियेण शब्दो गृह्यते, न तेनार्थः। अतीन्द्रियोऽप्यर्थः शब्दस्य विषयो भवति, तयोः प्राप्तिलक्षणे सम्बन्धे गृह्यमाणे शब्दान्तिकेऽर्थः स्यादर्थान्तिके-

वार्थः स्यादुभयं वोभयं स्यात्। न च शब्देन सहार्थस्य व्याप्तिसम्बन्धः, तथात्वे मोदकाग्न्यसि-शब्दैर्मुखपूरणमुखदाहमुखपाटनानि स्युः, शब्दस्य व्याप्यस्य सत्त्वेनान्नादेरर्थस्यापि सत्त्वात्। ननु शब्दार्थव्यवस्थानादप्रतिषेधः (५४) शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयते, अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम्, कश्चिदेकः शब्दः कञ्चिदेवार्थं बोधयति, न सर्वः सर्वम्। इत्थं सम्बन्धेऽङ्गीकृते तेन सम्बन्धेन व्याप्तिरावश्यकी। स च सम्बन्धो न मुखपूरणादिनियामक इति चेन्न, शब्दार्थसम्बन्धस्य साङ्केतिकत्वेन व्याप्त्यप्रयोजकत्वात्।

तदाह—सामयिकत्वादर्थस्य (५५) शक्तिग्रहाधीनत्वात्, शक्तिरूपसम्बन्धेन न व्याप्तिः, तस्या वृत्तिनियामकसम्बन्धाधीनत्वात्। जातिविशेषे चानियमात् (५६) ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते, तेन सामयिकः सम्बन्धो न स्वाभाविकः। यथा तैजस-प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरति, न तथात्र। आर्या यवशब्दाद् दीर्घ-शूकं प्रतियन्ति, म्लेच्छास्तु कङ्गुम्। नानाशक्तावपि यस्य यत्र शक्तिग्रहः, तस्य तदर्थोपस्थितिः। तथा च सिद्धान्तेऽप्यर्थव्यवस्थोपपत्तिः।

तस्माच्छब्दस्य स्वतन्त्रमेव प्रामाण्यमव्याहतम्। शब्दमन्तरा मातापित्रादिज्ञानस्या-प्यसम्भवात्। सर्वत्रैव मनुष्येषु दायविवाहादिप्रथा विद्यते। नानाविधिनिषेधा अपि तत्र तत्र दृश्यन्ते। न च पित्रादिज्ञानमन्तरा तन्निर्वाहः। तेन सर्वत्रैव शब्दप्रामाण्यव्यवस्था दृश्यते। किञ्च, पश्वाद्यपेक्षया मनुष्येषु धर्ममूलकमेव वैशिष्ट्यम्। धर्मज्ञानञ्च न शब्दमन्तरेति सर्वत्रैव शास्त्रप्रामाण्यमपि। तदुक्तम्—

मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः॥ इति।

तत्रापि प्राकृताद्यपभ्रंशमयशब्दापेक्षया तत्प्रकृतिभूतसाधुसंस्कृतशब्दानां कोऽपि विलक्षणो माहात्म्यातिशयः, येषामधिकारिकर्तृकोच्चारणेनापि पुण्यजनिः; दोष-बाधविधुरस्य शब्दविशेषस्य कोऽपि माहात्म्यविशेषः सुख्यात एव। तदभ्यासे वाचां क्रियाफलाश्रयत्वं सम्पद्यते।

लौकिकानां हि साधूनामार्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥

( उ० रा० च० १।१० )

तेनैव कस्यचित् तपोधनस्य वाचैव नहुषस्य सर्पत्वम्, कस्यचित् सत्यव्रतस्य वाचैव नन्दिनस्तेनैव देहेन देवत्वं सम्पन्नमिति पौराणिकाः। 'नास्ति सत्यसमं तपः।'

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते ॥

इति तन्माहात्म्योक्तिः सुस्फुटैव । मृषावादिनामपि सत्योक्तिरादि्रयते, किमुत सत्यवादिनां तथोक्तयः; सत्यव्रतानामृषीणां सुसिद्धानामृतसत्यनिष्ठानां देवानां देवदेवानामीश्वरस्य चोक्तयो दोषबाधवैधुर्यतारतम्येनोत्तरोत्तरं विशिष्यन्ते । तदपेक्षयापि स्वप्रकाशपरब्रह्मनिःश्वसितप्रायाणाम्, पुरुषमात्रबुद्धिप्रयत्ननिरपेक्षाणामपास्तसमस्तपुंदोषशङ्काकलङ्कपङ्कानाम्, तदीयनित्यानन्तज्ञानानुविद्धाकृत्रिमनित्यानन्तापौरुषेयशब्दराश्यात्मकमन्त्रब्राह्मणात्मकानां वेदानां सर्वातिशायी माहात्म्यातिशयस्तु सर्वत्र जागर्तितमाम् । येषामनुग्रहादेव धर्मब्रह्मादयोऽतीन्द्रिया अपि पदार्थाः करतलगतामलकायन्ते । तत एव स्वात्मावबोधनाय करुणावरुणालयस्याकारणकरुणस्य सर्वेश्वरस्यैव वेदात्मना विशिष्यावतरणं मन्यन्ते वैदिकाः—

वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम ।
वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः ॥

इत्यादिव्यासोक्तेः ।

तन्त्रागमपुराणन्यायसांख्ययोगमीमांसाधर्मशास्त्राङ्गोपबृंहितविविधानवद्यविद्योद्गमस्थानभूतानां वेदानां सर्वार्थविद्योतित्वं निरुपचरितमेव । "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे", "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्", "शास्त्रयोनित्वात्" इति रीत्या विश्वस्रष्टृतत्सृष्टिप्रकाशकत्वेन वेदानामनितरसाधारणं माहात्म्यम् । "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इत्यापस्तम्बादिभिस्तत्स्वरूपावबोधकं लक्षणं विहितम् । "अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वम्" इत्युदयनाचार्येणापि तल्लक्षितम् । "शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्यप्रमितिविषयानतिरिक्तार्थको यो यस्तदन्यत्वे सति आमुष्मिकसुखजनकोच्चारणकत्वे सति जन्यज्ञानाजन्यो यो प्रमाणशब्दस्तत्त्वं वेदत्वम्" इति च प्राचीनैस्तल्लक्षणमुक्तम् ।

अत्र व्यासादिचाक्षुषादिप्रत्यक्षजन्ये दृष्टार्थके भारतायुर्वेदादिभागेऽतिव्याप्तिवारणाय प्रथमसत्यन्तम् । इत्थञ्च तदुभयातिरिक्तं प्रमाणं चक्षुरादिरेव तज्जन्यप्रमितिविषयार्थकतया तयोर्नातिव्याप्तिः । न च दृष्टार्थकवेदभागस्यापि लक्ष्यतया कथं तत्र लक्षणसमन्वय इति वाच्यम्, अत्रार्थपदस्य मुख्यतात्पर्यविषयपरत्वाद् मीमांसकनये विध्यर्थ एव मुख्यतात्पर्यविषयः । न्यायनयेऽपि "स्वार्थद्वारैव तात्पर्यम्, तस्य स्वर्गादिवद्विधौ" इति रीत्या विध्यर्थ एव तेषां मुख्यं तात्पर्यम् । अत एव सत्यन्तेऽनतिरिक्तेति । तथा च तेषां दृष्टार्थकत्वेऽपि नाव्याप्तिः । प्रमित्यविषयार्थकत्वमात्रोक्तावसम्भव इति जन्यान्तं प्रमितिविशेषणम् । शब्दोप-

जीव्यतिरिक्तेन प्रमाणेन वेदात्मकशब्देन वेदार्थस्य प्रमापणात् शब्दातिरिक्तपदस्य प्रमाणविशेषणतया निवेशः। मन्त्रावयवभूतवाक्येऽतिव्याप्तिवारणाय द्वितीयमत्यन्तम्। एवं स्तोभेऽतिव्याप्तिवारणाय प्रमाणशब्दनिवेशः। मन्वादिस्मृतिभारताद्यदृष्टार्थकभागेष्वतिवारणायाजन्य इत्यन्तम्। यद्यपि "अनन्ता वै वेदाः" इति श्रुत्यनुसारेण वेदा अनन्ता एव, तथापि एकत्रिंशदधिकशतोत्तरसहस्रशाखोपबृंहितो मन्त्रब्राह्मणात्मकोऽविच्छिन्नपारम्पर्येणाधीयमानोऽपौरुषेयः शब्दराशिरेव मानवबुद्धिगम्यो वेदः। गुरोर्मुखादनुश्रूयमाणत्वादेवान्वर्थकानुभवत्वमपि तस्य, "प्रमाणानां प्रामाण्यादेव हि प्रमेयसिद्धिः" इति नियमात्।

किञ्चित् प्रामाण्यस्वतस्त्वपरतस्त्वविचार आरभ्यते। दार्शनिकेषु मीमांसकधुरीणाः प्रामाण्यस्वतस्त्वमङ्गीकुर्वन्ति। तत्रार्थान्यथात्वमयथार्थत्वं वाप्रामाण्यम्, तद्विपरीतमर्थतथात्वं यथार्थत्वं वा प्रामाण्यम्। प्रथममन्यसापेक्षमितरत्तु स्वत एव। तत्र तत्त्वप्रदीपिकाकर्तॄणां चित्सुखाचार्याणामिदमभिमतम्—"विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वमेव प्रमायाः स्वतस्त्वम्। न चेश्वरज्ञानेऽव्याप्तिः, तस्याजन्यत्वात्" इति वाच्यम्, तत्र विज्ञानसामग्रीजन्यत्वविशिष्टतदतिरिक्तसामग्रीजन्यत्वाभाववत्त्वस्य सत्त्वात्। अप्रमासु विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तसामग्रीजन्यत्वं भवति, तदत्यन्ताभाववत्त्वं प्रमासु भवति, अत एव नातिव्याप्तिरपि।

अप्रमातिरिक्तत्वेन हेतुना पटादाविव प्रमायामपि विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्यत्वाभावस्य साधयितुं शक्यत्वेन न तदप्रामाणिकत्वमपि। न चात्र ज्ञातत्वानधिकरणत्वस्योपाधित्वम्, ईश्वरज्ञाने साध्याव्याप्तेः। नापि ज्ञानसामग्र्यजन्यत्वस्योपाधित्वम्, यज्ज्ञानसामग्रीजन्यं तत्त्वे (ज्ञानसामग्रीजन्यत्वं) सत्यतिरिक्तजन्यप्रमाणवदिति व्यतिरेकव्याप्तावप्रमात्वस्यैवोपाधित्वात्। विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसम्भवेन तदतिरिक्तस्य गुणस्य दोषाभावस्य वा हेतुत्वे गौरवप्रसङ्गो विपक्षे बाधकस्तर्कः। न च प्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वात् परवदिति परतस्त्वप्रयोगोऽपि सम्भवत्येवेति वाच्यम्, प्रमादोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति, ज्ञानत्वादप्रमावदिति सत्प्रतिपक्षसम्भवात्। न चाप्रमाज्ञाने तत्प्रसक्तिः, प्रयोजकाभावात्। दोषासहकृतज्ञानसामग्र्याः प्रमाप्रयोजकत्वेनाप्रमायां दोषसहकृततज्जन्यत्वेन तदसम्भवात्। न च तर्हि दोषाभावस्य प्रमात्वप्रयोजकत्वमिति वाच्यम्, अन्वयव्यतिरेकयोर्विरोध्यप्रमाप्रतिबन्धकत्वेनैवोपक्षीणत्वात्। न च संस्कारस्यानुभवनाशकत्वस्मृतिहेतुत्वयोर्दर्शनेन दोषाभावस्याप्यप्रमाप्रतिबन्धकत्वं प्रमाहेतुत्वञ्च किं न स्यादिति वाच्यम्, तत्र स्मृतेः कारणान्तरासम्भवेन तत्त्वेऽपि प्रकृते प्रमासामग्रीसत्त्वेन वैषम्यात्।

एवं प्रमाज्ञप्तिरपि विज्ञानज्ञापकसामग्रीत एव। नन्वेवं सति विज्ञानग्राहिसाक्षिमात्रग्राह्यत्वेन विज्ञान इव प्रमाणमप्रमाणं वेति संशयो न स्यादिति चेन्न; तादृक्प्रसङ्गस्य नैयायिकमतेऽपि तुल्यत्वात्। तथा हि "सर्वं ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्ययः" इति रीत्या धर्मिज्ञानस्य तत्तज्ज्ञानसमयस्फुरणस्यानुव्यवसायज्ञानस्य च नैयायिकैः स्वतःप्रामाण्यमभ्युपेयते। तत्र धर्मिज्ञानेऽनुव्यवसाये च तन्मतरीत्या स्फुरत्यपि बौद्धानामप्रमाणमेवेति विप्रतिपत्तिर्दृश्यते। एवं स्वतःप्रमाणत्वेनोरीकृतानुमित्यादौ लौकायतिकानां विप्रतिपत्तिर्दृश्यते। तत्र प्रतिभासपुष्कलकारणे सत्यपि प्रतिबन्धकादिसमवधानेन यथोपपत्तिः, तथैव प्रकृतेऽपि समाधानं सम्भवत्येव। न च तर्हि शुक्तिरजतादिबुद्धिष्वपि प्रामाण्यग्रहणप्रसङ्गः, कारणदोषावगमबाधबोधाभ्यां तदपनयनात्। न च तर्ह्यत्रापि दोषबाधाभावज्ञानस्य हेतुत्वात्तया परतःप्रामाणमेवेति वाच्यम्, दोषबाधबोधयोरनुदयमात्रे प्रामाण्यस्फुरणाङ्गीकारेण तददोषात्। तदभावावगमस्यापि प्रामाण्यस्फुरणहेतुत्वे तस्यापि प्रामाण्यावगमाय तत्तदभावावगमान्तराणामप्यपेक्षणीयत्वेनानवस्था।

प्रामाण्यपरतस्त्वानुमानमपि स्वप्रकाशत्वेनाभिमतेषु धर्मिज्ञानानुव्यवसायादिषु व्यभिचारित्वादकिञ्चित्करतरम्। न चैतत् सर्वमनभ्युपगमपराहतम्, वार्त्तिकतात्पर्ये प्रमाणतोऽर्थप्रतिपत्ताविति भाष्यव्याख्यानावसरे वाचस्पतिमिश्रैरुक्तत्वात्। तथाहि विमतं ज्ञानमर्थाव्यभिचारि, समर्थप्रवृत्त्युपपादकत्वात्। यदि पुनरेवं नाभविष्यन्नसमर्थां प्रवृत्तिमकरिष्यत्, यथा प्रमाणाभासमिति व्यतिरेकि, अन्वयव्यतिरेकि वा अनुमानस्य स्वतःप्रमाणतया अन्वयस्यापि सम्भवात्। तथा चानुमानस्य तु परितो निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यम्, अनुमेयाव्यभिचारिलिङ्गसमत्वात्, सत्प्रतिपक्षसाधनत्वाच्च। तथाहि—' प्रमात्वं विज्ञानग्राहकसामग्रीमात्रग्राह्यम्, अप्रमामात्रवृत्तित्वानधिकरणत्वे सति ज्ञानैकवृत्तिजातित्वात्, ज्ञानत्ववत्" इति।

ननु प्रमात्वं न जातिः सम्भवति, साक्षात्कारित्वेन तस्य परापरभावासम्भवात्। प्रमात्वस्य साक्षात्कारित्वव्याप्यत्वे तद्रहितेषु परोक्षेषु अनुमानादिषु प्रमात्वाभावभावप्रसङ्गः। यदि च साक्षात्कारित्वं प्रमात्वान्तरजातिभेदः, तर्हि प्रमात्वरहितेषु विभ्रमेषु साक्षात्कारित्वं न स्यात्। तदेव प्रमात्वस्य स्वतस्त्वं सम्भवति, न चापरोक्षभ्रमेषु साक्षात्कारित्वं नास्ति। तस्मात् परापरभावशून्ययोरेकत्र वृत्तौ साङ्कर्येण प्रमात्वं न जातिः; प्रमात्वं यदि जातिः, तदा 'सर्वं ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्ययः" इति परिभाषैव परिलुप्येत। इदं राजतम्' इत्येकस्यैव ज्ञानस्य धर्मिणि प्रमात्वम्, इतरांशेऽप्रमात्वमिति जातिसाङ्कर्यप्रसङ्ग इति चेत्,मैवम्; साक्षात्कारित्वस्य रजतादिविभ्रमावृत्तित्वात्। न च कथं तर्हि साक्षात्कारित्वव्यवहारः? इन्द्रियसम्प्रयोगजन्यतो-

पाधिमात्रेण तद्व्यवहारोपपत्तेः। धर्म्यंशे प्रमात्वव्यवहारोऽप्यबाधितानुभूतित्वोपाधिनिबन्धनतयाप्युपपद्यते। न चैवं तर्हि सर्वत्रैवोपाधिहेतुक एवास्तु प्रमात्वव्यवहारः किं जातिकल्पनयेति वाच्यम्; 'गौर्गौः'इति व्यवहारस्येव प्रमा प्रमेत्यबाधितव्यवहारस्य जातिमन्तरानुपपत्तेः उपाधिमादाय जातिप्रत्याख्यानस्य गोत्वादिष्वपि तुल्यत्वात्। तस्माद् यत्र जातिबाधको न प्रसरति, तत्र जातिरन्यत्रोपाधिरित्येव विभागो युक्तः। तस्मान्न पूर्वोक्तहेतोर्विशेष्यासिद्धिः विपक्षे चानवस्थाप्रसङ्गो बाधकस्तर्कः। न च निलीनस्यैव प्रमाणस्यार्थे व्यवहारजनकत्वोपपत्त्या नानवस्थेति वाच्यम्; तथात्वनिश्चायकप्रमाणानुदये तदस्तित्वस्यैव निश्चेतुमशक्यत्वात्। ननु ज्ञानस्य स्वतः स्फुरणं भवतु तत्प्रामाण्यं तद्गतगुणत्वादिवदन्यत एवावगम्यतामिति चेन्न, तस्यादित एव प्रमाणत्वेनास्फुरणे तद्विषये निःशङ्कप्रवृत्त्यनुपपत्तेः। न हि ज्ञानमात्रेण प्रवृत्तिः सम्भवति, मरुमरीचिकादौ सत्यपि विज्ञाने तदप्रामाण्यनिश्चये प्रवृत्त्यदर्शनात्।

न चाप्रामाण्यास्फुरणे प्रामाण्यप्रत्ययमन्तरापि ज्ञानमात्रात् कुतो न प्रवृत्तिरिति वाच्यम्, प्रामाण्याप्रामाण्ययोरुभयोरस्फुरणे संशयात् प्रवृत्त्यनुपपत्तेः। अस्ति चानभ्यासदशायां नववनस्थलीस्थितेषु फलितसहकारादिषु तत्फलप्रेप्सोर्निःशङ्कप्रवृत्तिः पारलौकिकफलसाधनेषु निःशङ्कप्रवृत्तिर्नैयायिकादिभिः प्रामाण्यनिश्चयपरतन्त्रैवोपेयते। न च कृष्यादौ संशयेऽपि प्रवृत्तिर्भवतीति वाच्यम्, तत्र निःशङ्कप्रवृत्तेरभावात्। तस्मात् प्रामाण्यनिश्चयाधीनैव प्रवृत्तिरुपेतव्या, अन्यथा प्रामाण्यानिश्चयान्निवृत्तिरपि सम्भवत्येव। तस्मात् पूर्वोक्तप्रवृत्तिसिद्धये स्वत एव प्रामाण्यं प्रमाणानामनिच्छताप्यङ्गीकार्यम्। अत एव फलेऽपि स्वतस्त्वमेव ज्ञेयाभिव्यक्तिलक्षणस्य फलस्य ज्ञानमात्रादेव सिद्धेः।

तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोह्यते ।
द्वावेव निन्दितौ लोके निराशङ्कातिशङ्किनौ ॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
अर्थ्यते तावदेकं यः स्वतःप्रामाण्यमश्नुते ॥
उत्प्रेक्ष्यते हि यो मोहादजातमपि बाधकम्।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥

अत्रेदमाकूतम्—नैयायिकादयस्तु वेदस्येश्वरप्रणीतत्वेनेश्वरस्य चाप्तत्वेन प्रामाण्यमभ्युपयान्ति, परमन्यैस्तु स्वातन्त्र्याद् वेदे प्रामाण्यमेव नास्तीत्युच्यते। प्रत्यक्षाद्यगतार्थत्वात् स्वर्गयागादिसम्बन्धविषया चोदना बुद्धादिवाक्यवन्मृषा, आप्ताप्रणीतत्वेन बालोन्मत्तादि-

वाक्यत्वाच्चाप्रामाण्यं वेदस्योच्यते। वाक्यत्वेनापि हेतुना पुरुषोक्तिवद् नराधीनप्रामाण्यया चोदनाया अपि वक्तृगुणाधीनत्वेन प्रामाण्यम्, पुरुषदोषेण चाप्रामाण्यम्। प्रत्ययोत्पादकत्वेऽपि यथा बुद्धादिवाक्यानां प्रामाण्यं नास्ति, तथैव वेदवाक्यस्यापि प्रामाण्यं नास्तीति।

स्वतोऽसतामसाध्यत्वेन द्वयमपि स्वत एवेति साङ्ख्याः। नैयायिकादयस्तु प्रामाण्याप्रामाण्ययोर्ज्ञानं साधारण्यान्न किञ्चिद् निर्धारयितुं शक्नोतीति गुणवता दोषवता च कारणेनोत्पन्नस्य यथार्थस्वरूपं प्रामाण्यम्, अयथार्थस्वरूपमप्रामाण्यञ्च निर्णीयते। प्रामाण्यमप्रामाण्यञ्च स्वत एवेति पक्षो न क्षोदक्षमः, विरोधात्। ज्ञानोत्पत्तिवेलायामेव प्रमाण्यमप्रामाण्यञ्च निर्णेतव्यम्। तच्चाशक्यम्; तद्द्वयमपि परत इत्यपि न सम्भवति, ज्ञानस्य स्वतो निःस्वभावत्वापत्तेः। अतो यथैकस्य ज्ञानस्य कारणान्तरानपेक्षस्य स्वत एव प्रामाण्यमप्रामाण्यञ्चात्यन्तविपरीतत्वाद् न सम्भवति, तथैव ज्ञानस्य निःस्वभावत्वापत्त्या तद्द्वयमपि परत इत्यपि नोपपद्यते, एकस्य हि विरुद्धरूपसम्भवात्। विज्ञानव्यक्तिभेदेन प्रामाण्यमप्रामाण्यञ्च स्यात् तदात्वविरोध एव। तथापि यदि ज्ञानत्वातिरिक्तं किञ्चिच्चिह्नं भवेत्, तदा त्वीदृशं प्रमाणमीदृशमप्रमाणमिति व्यवस्था सम्भवति, न तदभावेऽपि। तदधीननिरूपणत्वे तु प्रामाण्याप्रामाण्ये परतस्त्वमेव, न स्वतस्त्वम्। अतो बौद्धैः प्रमाणानां स्वाभाविकमप्रमाणत्वम्, परापेक्षञ्च प्रमाणत्वमुपेयते। अप्रामाण्यमवस्तुत्वाद् न कारणदोषादिकमपेक्षते, प्रामाण्यन्तु वस्तुत्वात् कारणगुणादिकमपेक्षत एव। यदि प्रामाण्यं स्वाभाविकमप्रामाण्यमेव परापेक्षं भवेत्, तदा तु स्वप्नादिबोधेऽपि प्रामाण्यमापत्स्यते। बौद्धपक्षे तु कारणाभावात् स्वप्नादिज्ञानस्य नास्ति प्रामाण्यम्। पक्षेऽस्मिन्न वस्तुनोऽप्रामाण्यस्य हेतुमत्त्वप्रसङ्गोऽपि न भविष्यति, इन्द्रियादिगुणाः प्रामाण्यस्य कारणम्। तदभावादप्रामाण्यम्। गुणाभावस्तु द्विधा भवति। शुक्तिरजतादिसंवेदने सत्त्वेऽपीन्द्रियाणां दुष्टत्वाद् दोषनिराकृतत्वाद् गुणानामभावः। स्वप्नादिज्ञानहेतूनामिन्द्रियादीनामन्यतरस्याप्यभावाद् आश्रयाभावाद् गुणाभावः। दोषनिराकृतगुणत्वेन शुक्तिरजतादिज्ञानस्याप्रामाण्यदर्शनाद् दोषस्याप्रामाण्यकारणत्वभ्रम एव। विद्यमानेनार्थेनेन्द्रियाणां सन्निकर्षात् पुरुषस्य प्रत्यक्षबुद्धिर्जायते। धर्मस्य च भाव्यत्वेनाविद्यमानत्वाद् विद्यमानोपलम्भनस्य प्रत्यक्षस्य धर्मे न प्रामाण्यम्, चोदनायाः शब्दात्मकत्वात्; शब्दस्य चात्यन्तासत्यप्यर्थेऽतीतानागतादौ ज्ञानजनकत्वेनापि विद्यमानेऽपि धर्मे शब्दस्य बोधकत्वमव्याहतम्। द्रव्यगुणक्रियादीनां धर्मत्वं यद्यपि संस्थापितमेव, तथापि श्रेयःसाधनत्वेन रूपेण द्रव्यगुणादीनां धर्मता। तस्मान्नेन्द्रियगोचरो धर्मः। लोके प्रमाणान्तरदृष्टमेवार्थं शब्दो बोधयति। तथा चाधिगन्तृत्वेन स्मृतिवदप्रामाण्यमेव तस्य सत्यपि ज्ञाने प्रतिभादेर्यथा प्रामाण्यं नास्ति, तथैवासम्भावितप्रमाणान्तरमूलकत्वेन वेदस्य नास्त्येव प्रामाण्यम्।

तद्रीत्या दोषाद् गुणाभावो विज्ञायते। गुणाभावाच्च प्रामाण्यमनवगम्यमानं स्वाभाविकस्याप्रामाण्यस्य नापवादकं भवति, तथा चानपोदिता अप्रमाणतैवावतिष्ठते। तस्माद्धेतुशुद्धिरेव ज्ञानप्रामाण्यकारणम्। हेतुशुद्धिविरहेण स्वाभाविकमप्रामाण्यम्। अन्वयव्यतिरेकाभ्यां दोषस्याप्रामाण्यकारणत्वं नास्ति कारणाभावहेतुकेऽज्ञानेऽप्रामाण्यस्य दोषानधीनत्वात्, संशयाज्ञानविपर्ययैरप्रामाण्यस्य त्रैविध्याभ्युपगमात्। एवं ज्ञानस्य गुणापेक्षत्वेन प्रामाण्ये पुरुषशुद्ध्यधीनमेव शब्दस्य प्रामाण्यमायाति। वेदस्यापौरुषेयत्वे निराश्रयत्वेन शुद्ध्यभावः। पौरुषेयत्वे चातीन्द्रियार्थे पुरुषस्य शुद्ध्यसम्भवः। ततो वेदस्याप्रामाण्यमेव स्वतो द्वयमित्यस्य पक्षस्य साङ्कर्यादिना प्रामाण्यानिर्णयादप्रामाण्यमेव परतो द्वयमित्यत्रापि गुणाभावादेवाप्रामाण्यम्।

मीमांसकास्तु सर्वप्रमाणानां स्वत एव प्रामाण्यमभ्युपगच्छन्ति। 'नासतो विद्यते भावः' इति रीत्या स्वतोऽसतः साधनसहस्रैरपि सत्त्वासम्भवात्। तथा च यदि ज्ञानस्य स्वविषयतथात्वावबोधने शक्तिर्न भवेत्, तदा नान्येनापि तत्सम्भवः। तथात्वे च कस्यचिदर्थावधारणासम्भवेन जगदान्ध्यप्रसङ्गो यदुच्यते गुणावधारणात्प्रामाण्यावधारणमिति तन्न; गुणावधारणस्याप्यन्यायत्तत्वात्, तदनुपलम्भाच्च। न च वैमल्यमेव गुण इति वाच्यम्, तस्य दोषाभावरूपत्वात्, तस्य चापौरुषेये वेदेऽपि सम्भवाच्च। तथा च गुणाधीनेऽपि प्रामाण्ये न क्षतिः।

ननु गुणनिमित्तमेव ज्ञानस्य यथार्थविषयत्वमिति कारणभूतगुणावगमेन विषयस्य तथात्वमवगम्यते। ज्ञानस्य विषयतथात्वमेव हि प्रामाण्यमिति चेन्न; गुणनिमित्तस्य यथार्थत्वे गुणरहिताद् दोषसहिताच्च चक्षुरादेः पीतशङ्खादिज्ञाने उपजाते शङ्खांशेऽप्ययथार्थत्वापातात्। न चेष्टापत्तिः, शङ्खांशे बाधाभावेन यथार्थत्वाभ्युपगमात्। यदि च स्वकारणनिमित्तमेव ज्ञानस्य यथार्थत्वं तद्दोषनिमित्तञ्च ज्ञानस्यायथार्थत्वम्; तदा तु पीतशङ्खादिज्ञानस्य स्वकारणतः सत्यविषयत्वम्, तद्दोषतश्चासत्यविषयत्वमित्यदोषः।

वस्तुतस्तु सर्वेऽपि भावाः स्वरूपप्राप्त्यै स्वहेतुमपेक्षन्ते। घटो मृच्चक्रादिकं स्वरूपावाप्त्या एवापेक्षते, नोदकाहरणादौ। तथैव ज्ञानमपि स्वोद्भूत्यै एव गुणवदितरद्वा हेतुमपेक्षते, न तु स्वकार्यविषयतथात्वावधारणे। यदि ज्ञानमुपजातमपि स्वविषयतथात्वनिर्धारणाय गुणावधारणमपेक्षेत, तदा तस्यापि प्रमाणान्तरापेक्षापातः। गुणावधारणस्य प्रामाण्येऽनिर्धारिते सन्दिग्धप्रामाण्यस्य तस्यासत्समत्वात्। तत्प्रामाण्यनिर्धारकस्य ज्ञानस्याप्येवं स्वप्रामाण्याय प्रमाणान्तरापेक्षेत्यनवस्थैव स्यात्। स्वतःप्रमाणत्वे तु नैवं दोषः। न च स्वतःप्रामाण्यपक्षेऽप्यपवादकदोषाभावग्रहणे भविष्ये भविष्यत्येवानवस्थेति वाच्यम्; ज्ञायमानानामेव दोषाणां

प्रामाण्यविघातकत्वेन तदज्ञानादेव प्रामाण्यापवादकस्य मिथ्यात्वस्य निवृत्त्या तदर्थं दोषाभावस्यानपेक्षणात् तदज्ञानस्य चायत्नसिद्धत्वाद् बाधकज्ञानादिभिरवगतेनाप्रामाण्येन तु तदपोद्येत। तदुक्तम्—

तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥

नन्वप्रामाण्यमवस्तुत्वान्न दोषजन्यमिति चेन्न, संशयविपर्ययाज्ञानभेदेनाप्रामाण्यस्य त्रैविध्येनाद्ययोर्द्वयोरपि वस्तुरूपत्वात्। तथा च दोषान्वयव्यतिरेकानुविधानाद् दोषनिमित्तमेव ज्ञानस्यायथार्थत्वम्। अर्थान्यथात्वज्ञानेन दोषेण वा तथात्वावबोधकत्वरूपं ज्ञानस्य स्वतः प्राप्तं प्रामाण्यमपोद्यते। अज्ञाने तु दोषाणां व्यापारो नापेक्षितः, ज्ञानकारणाभावादेव बौद्धानामिवास्माकमपि तत्सिद्धेः।

ननु प्रामाण्यवदप्रामाण्यस्यापि परतस्त्वे कथं नानवस्थेति चेन्न, गुणज्ञानवद् दोषेषु तदप्रसङ्गात्। न परायत्तत्वमात्रेणानवस्था भवति, सजातीयापेक्षायामेव तत्प्रसङ्गात्। यदि प्रमाणान्तरायत्तप्रामाण्यवद् अप्रमाणान्तरायत्तमप्रामाण्यं स्यात्, तदा स्यादेवानवस्था। न चाप्रामाण्यमप्रामाणान्तरापेक्षम्, भूतार्थान्यथात्वदोषज्ञानाधीनत्वात्। तस्य प्रामाण्यञ्च स्वत एवेति क्व अनवस्था? यत्र शुक्तिरजतादौ 'नेदं रजतम्' इत्यर्थान्यथात्वज्ञानं जायते, तत्र त्वर्थान्यथात्वरूपा अप्रमाणता शीघ्रगम्यैवेति नानवस्थाशङ्कापि, तदपवादात्मनस्तस्य तद्बाधमन्तरानुत्पत्तेः। पूर्वं तु परस्याजातत्वात् तदबाधित्वैव जायते। तदुक्तम्—

पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्न त्वबाधेन सम्भवः॥

एतेन रजतज्ञानस्य ज्यायसः कनीयसा 'नेदं रजतम्' इति ज्ञानेन कथं बाधः, ज्यायसः कनीयस एव बाधौचित्यादित्यपास्तम्।

अनपेक्षितस्य ज्यायस्त्वं बाध्यत्वे हेतुः, न बाधकत्वे इत्युक्तमेव।

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योऽन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥

ततश्चात्र पूर्वस्य निरपेक्षत्वेऽपि पूर्वाबाधेनोत्पत्तिमेवानासादयतोत्तरेणेत्युक्तावस्थायामेवार्थान्यथात्वरूपाप्रामाण्यबोधनाद् लाघवमेव।

नन्वेवं समानविषयेणार्थान्यथात्वज्ञानेन पूर्वस्य बाधेऽपि दोषज्ञानेन तु भिन्नविषयेण कथं पीतशङ्खज्ञानं बाध्यते ? यतोऽत्र पीतशङ्खज्ञानं शङ्खे पीतिमानमवगमयति, दोषज्ञानन्तु नेत्रे पित्तदोषमिति वाच्यम्। दुष्टकारणबोधे विषयभेदेन तादृशलाघवाभावेऽपि कारणदोषावगमप्रणाल्या आर्थिकतुल्यताप्राप्त्या गोदोहनेन चमसस्येव बाधोपपत्तेः। यथा "गोदोहनेन पशुकामस्य प्रणयेत्" इति पुरुषार्थेनापि गोदोहनेन क्रत्वर्थस्यापि चमसस्यार्थिकतुल्यविषयतया भवति बाधा, द्वयोरपि प्रणयनद्वारत्वात्। गोदोहने तत्साधने चमसस्यार्थान्निवृत्तिर्भवति, एवमत्रापि।

यद्यपि पित्तज्ञानं पित्तं गृह्णाति, पित्तञ्च श्वेते पीतभ्रमस्य कारणतयावगते चक्षुषि दृश्यमानं स्वकार्यस्य पीतज्ञानस्य भ्रान्तत्वमवगमयति। भ्रान्तत्वेन चार्थान्यथात्वमिति बाधसिद्धिः, तथापि नायमुत्सर्गो यदाद्यस्य द्वितीयेन बाधः। किन्तु द्वितीये बाधज्ञाने यदि तृतीयं बाधकज्ञानं दोषान्तरज्ञानञ्च न भवेत्, तदैवैषा गतिः; तदुद्भवे तु द्वितीयस्य मिथ्यात्वादाद्यस्यैव तद्बाधकत्वेन प्रामाण्यम्।

न चैवं तृतीयज्ञानाधीनमाद्यस्य प्रामाण्यमिति परायत्तमेव प्रामाण्यमिति वाच्यम्, तस्योत्पत्तित एवार्थमवबोधयतः स्वत एव प्रामाण्यात्। द्वितीयेन दोषज्ञानेन तदपवादप्रसक्तः। तृतीयेन द्वितीये बाधिते सत्यज्ञातदोषत्वादनपवाद एव।

ननु यथाऽऽद्यस्य द्वितीयेन दोषोऽवगतः, तस्यापि तृतीयेन, तथा तृतीयस्याप्यन्येन दोषावगमसंभवान्न क्वचिदाश्वास इति चेन्न, भावानवबोधात्। तथाहि—यदा जाग्रद्दशायां स्वस्थेन्द्रियमनस्कस्य स्फीतप्रकाशमध्यवर्तिसन्निहितघटज्ञाने लोकप्रसिद्धमिथ्यात्वहेतवो दोषा नानुभूयन्ते, तदा दोषाशङ्काया अभावाद् अप्रामाण्यशङ्कापि न भवत्येव। यादृग्विधेषु ह्यप्रामाण्यसंभवः, तत्रैव दोषाशङ्का, न सर्वत्र।

न हि ज्ञानत्वमात्रेण संशयः, तस्य साधारणधर्मादिनिश्चयाधीनत्वात्। तस्मादवश्यं कानिचिद् ज्ञानान्यप्रमाणान्येवोत्पद्यन्ते, यत्र दूरत्वादिदोषसम्भवादप्रामाण्यशङ्का, तत्रापि प्रत्यासत्तिगमनादिनाऽन्यतरपदार्थनिर्णयाद् नातिदूरगमनम्। तृतीयज्ञाने यदि दोषो न संभावितः, ततस्तदवधिरेव निर्णयः। यदि सम्भावितस्ततस्तन्निराकरणप्रयत्नेन चतुर्थज्ञानावसानो निर्णयः, नाधिकज्ञानापेक्षा।

तृतीयेन चतुर्थेन वा द्वितीयस्य तृतीयस्य वा बाधे आद्यस्य द्वितीयस्य वा यस्यैव प्रामाण्यं समर्थ्यते, तस्य स्वाभाविकं प्रामाण्यमनपोहितं भवति। इतरदपवादादप्रमाणमिति नानवस्था। तदुक्तम्—

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावतैवैकं स्वतःप्रामाण्यमश्नुते ॥

तत्र शब्दे वक्त्रधीन एव दोषोद्भवः क्वचिद् गुणवद्वक्तृकत्वेन दोषाभावश्च। वेदस्य चापौरुषेयत्वात् पुरुषाभावेन निराश्रयत्वाद् दोषाभावेनानपोहितं स्वतःप्रामाण्यमेव।

न च वक्तृगुणान्वयव्यतिरेकानुविधायित्वात् शब्दस्य गुणाधीनमेव प्रामाण्यमिति तदभावेन वेदस्याप्रामाण्यमेवेति वाच्यम्, प्रमाणानां परायत्तप्रामाण्यस्य निराकृतत्वेन प्रामाण्यस्वतस्त्वसाधनात्, अन्वयव्यतिरेकयोश्च दोषाभावेन गतार्थत्वाच्च प्रमाणभूतपौरुषेयवचस्सु न केवलं गुणा दृष्टाः किन्तु दोषाभावोऽपि दृष्टः, दोषाभावनिबन्धनत्वेन प्रामाण्यस्य वेदेऽपि सुलभत्वात्।

न चैवमपि प्रामाण्यपरतस्त्वमेवायातम्, तस्यापवादाभाव एवोपयोगित्वात्। गुणेभ्यो दोषाभावादप्रामाण्यद्वयाभावः, ततश्चानपोहितं स्वतः प्रामाण्यमेव तिष्ठति। यत्र साक्षाद्विपरीतबोधकज्ञानादर्थान्यथात्वमवगम्यते। यत्र च दोषज्ञानेनोभयत्रापि ज्ञानस्यायथार्थत्वे दोषा एव कारणम्, दोषाभावेन तद्द्वयासत्त्वे नोत्सर्गस्यानपवाद एव सिद्ध्यति। अपवादाभावे प्रत्ययोत्पत्तिहेतुत्वात् प्रत्यक्षादिवत् पौरुषेयवाक्यस्यापि प्रामाण्यं प्राप्तम्, तन्नापनीयते। एवं पौरुषेयवाक्यस्यापि स्वतः प्रामाण्ये सिद्धेऽपौरुषेये वेदे तु सुतरां स्वतः प्रामाण्यम्।

ननु दोषाभावस्य गुणाधीनत्वे पुनरपि सैव स्थितिरिति चेन्न; प्रामाण्यावधारणे गुणानां ज्ञायमानत्वेन कारणत्वेऽनवस्थासम्भवेऽपि दोषाभावस्य सत्तामात्रेणोपकारित्वेन तदसम्भवात्। गुणनिराकृतदोषा औत्सर्गिकं प्रामाण्यं नोपघ्नन्तीति क्वानवस्थावकाशः? वेदे तु वक्त्रभावादपवादनिर्मुक्तिस्ततोऽपि लघीयसी, तेन तत्रापवादशङ्कापि नोदेति।

एवं लोकेऽपि शब्दप्रामाण्यस्य वक्त्रपेक्षाभावेन वेदप्रामाण्यसिद्ध्यर्थं कर्तृकल्पनमनावश्यकम्। शक्यादिवदप्रामाण्ये कल्पयितव्ये एव कर्तृकल्पना युक्ता। यच्चोक्तमाप्तप्रणीतत्वेन, बालोन्मत्तादिवाक्यवदप्रामाण्यमेवेति चेन्न; प्रामाण्यस्वतस्त्वसिद्धेः। न च तर्हि पौरुषेयेऽपि वाक्ये प्रमाणान्तरापेक्षानपेक्षणीयेति वाच्यम्, तथात्वेऽप्रमाणमूलतया दुष्टमूलत्वेन प्रामाण्यापवादापातात्। वेदे त्वपौरुषेयत्वेनाप्रमाणमूलत्वाशङ्काया अभावेन तदयोगात्। वेदे प्रमाणान्तरमूलाभावो भूषणमेव, न दूषणम्, प्रमाणान्तरविषयत्वेनानधिगतगन्तृत्वाभावेनानुवादकत्वापत्तेः।

ननु प्रत्यक्षादीनां पौरुषेयवाक्यानाञ्च प्रमाणान्तरसंवादनिबन्धनमेव प्रामाण्यम्, अतो वेदस्यापि तथात्वमेवेति चेन्न, प्रमाणान्तरसङ्गतिरूपसंवादस्य प्रामाण्यविरोधित्वेन तद्धेतुत्वानुपपत्तेः। यत्रैकस्मिन्नर्थेऽनेकप्रमाणसन्निपातः, तत्र तेषामन्योन्यनिरपेक्षार्थावबोधहेतुत्वेन तुल्यानामेव प्रामाण्यम्, न समुच्चितानाम्। अतः प्रमाणान्तरमूलत्वेनानुवादत्वापत्त्या नो संवादाधीनं प्रामाण्यम्।

ननु चैकमेव वस्तु दूराद् दृष्ट्वापि पुनः प्रमित्सयैव प्रत्यासीदन्तो दृश्यन्ते। तदेतत्पूर्वस्य नैरपेक्ष्ये नोपपद्यते। अतः संवादापेक्षमेव प्रामाण्यमिति चेन्न, अप्रमितिविशेषप्रमित्सयैव प्रत्यासत्त्युपपत्तेः। तदुक्तम्—

यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः।
नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा॥

यदि ह्युत्तरोत्तरप्रमाणसंवादेन पूर्वपूर्वप्रमाणानां प्रामाण्यं भवेत्, तदानवस्थानाद् न क्वचिद् व्यवस्था स्यात्।

ननु च विषयज्ञानस्यार्थक्रियाज्ञानाधीनं प्रामाण्यम्, तच्च स्वत एवेति नानवस्था। तदुक्तं धर्मकीर्तिना—"प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः"।

नैयायिकैरप्युक्तम् "प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्"। फलज्ञानं न परीक्ष्यते, पिपासोस्तोयज्ञानेन प्रवृत्तिः, ततस्तोयप्राप्तिः; प्राप्तस्य पानम्, पानेन पिपासोपशान्तिः। सा च न परीक्ष्यते, अपरीक्षितस्यापि फलस्येष्टत्वादिति चेन्न; विषयज्ञानार्थक्रियाज्ञानयोर्विशेषाभावात्। तथा च यद्येकस्य स्वतः प्रामाण्यम्, तर्हि विषयज्ञानस्य स्वतः प्रामाण्यमेकः प्रद्वेषः। किञ्च, यदि संवादाधीनं प्रामाण्यं भवेत्, तदा श्रोत्रजन्यबुद्धेरप्रामाण्यमेव स्यात्, प्रमाणान्तरासङ्गतेः। यद्यन्येन श्रोत्रजन्यज्ञानेन संवादसिद्धिः, तर्हि तादृशसंवादस्तु वेदेऽपि सम्भवत्येव, शतकृत्वः समुच्चरणजन्यनानाज्ञानानां संवादसंभवात् साधनान्तरजन्यबुद्धिसंवादाभावस्तूभयत्र समान एव। तथा च गुणसंवादार्थक्रियाज्ञानादीनामपेक्षाभावात् स्वत एव प्रामाण्यं ज्ञानस्य।

यत्तूक्तं क्वचिदाप्तप्रणीतस्य वाक्यस्य प्रामाण्यं न दृष्टमिति वेदस्यापि तत्कथमिति, तन्न; अनुमानसाध्ये विषय एव दृष्टान्तापेक्षत्वेऽपि प्रामाण्यस्यानुमानानपेक्षत्वेन दृष्टान्तानपेक्षणात्। प्रामाण्यस्यानुमानापेक्षत्वे तस्याप्येवं तस्याऽप्येवमित्यनवस्था प्रसज्येत। प्रामाण्यस्यानुमानसाध्यत्वे सर्वेषामपि प्रमाणानां प्रामाण्यस्य तथात्वापत्तेश्च।

ननु प्रामाण्यस्यान्यानपेक्षत्वे स्वतस्त्वे च प्रत्यक्षादिप्रमाणमुत्पद्यमानमेव प्रमाणमित्येव गृह्येत। न च तत्तदात्मानं गृह्णाति। न चागृहीतप्रामाण्येन व्यवहारसिद्धिरिति चेन्न; आत्मग्रहणमन्तरैव सत्तामात्रेण स्वकार्यक्षमत्वात्, प्रमाणेनार्थप्रतिपत्तावन्यानपेक्षणात्। तन्मात्रनिबन्धनस्य व्यवहारस्यापि तत एव निष्पत्तेश्च। नैरपेक्ष्येण कृतकार्यस्य स्वसत्त्यां जिज्ञासायां पश्चात् प्रत्ययान्तरैरवबोधात्। ज्ञानस्य ज्ञायमानत्वं न तत्प्रामाण्योपयोगि। कथं तदज्ञाने तत्प्रामाण्यग्रहणमिति चेत्, इत्थम्—न हि ज्ञानसंबंधित्वेन प्रामाण्यं गृह्यते, किन्तु विषये तथात्वमेव तद्विज्ञानस्य प्रामाण्यम्। विषयतथात्वनिबन्धनाद् ज्ञाने प्रमाणबुद्धिशब्दयोः। तच्चाज्ञातादेव ज्ञानात् स्वत एव गृहीतमित्यनर्थकं प्रमाणान्तरम्। अप्रमाणं तु न स्वीयमप्रामाण्यं स्वतो गमयति, तस्यापि स्वरूपेणैव स्वानुरूपार्थग्राहकत्वात्। रजतज्ञानं हि शुक्तिशकलं रजतमित्येव गृह्णाति। न पुनर्नेदं रजतमिति, तेनाप्रमाणज्ञानमपि स्वतःप्रामाण्यमेवात्मनोऽविद्यमानमपि गृह्णत् तन्निबन्धनं तद्व्यवहारमपि प्रवर्तयति। अत एव तत्राप्रामाण्यग्रहणाय व्यवहारनिवृत्तये च परापेक्षास्त्येव। यतोऽर्थान्यथात्वरूपमप्रामाण्यं ज्ञानस्यार्थतथात्ववद् न स्वतो गृह्यते।

नन्वेवं वेदस्यापि परत एवाप्रामाण्यमनुमानादिभिरर्थान्यथात्वबोधसम्भवादिति चेन्न, अर्थान्यथात्वकारणदोषबुद्धेरेवाप्रामाण्यकारणत्वेन तदतिरिक्तानुमानादीनामनपेक्षणात्। न च तद्बुद्धेः प्रामाण्याय कारणान्तरापेक्षा, बुद्धेः प्रामाण्यस्वतस्त्वप्रतिपादितत्वात्। यत्रापि ज्ञानमिथ्यात्वं परेभ्योऽवगम्यते, तत्र पूर्वोक्तकारणद्वयमेव वक्तव्यम्। न यत्किञ्चित्साधर्म्यमात्रम्। न चानुमानेन चोदनादिवेदार्थान्यथाभावः परिकल्पयितुं शक्यते। अनुमानस्यागमविरुद्धत्वेनाभासमानयोगक्षेमत्वात्। न चानुमानेन बाधादागमस्यैव मिथ्यात्वमिति वाच्यम्; अन्योन्याश्रयदोषप्रसङ्गात्। तथाहि—सिद्धे मिथ्यात्वेऽनुमानम्; तस्मिंश्च सति बाधाद् मिथ्यात्वमित्यन्योन्याश्रयः। न च यथाऽनुमानादन्यद्बाधकं नास्ति, तथैवागमादन्यत्, साधकमपि आगमार्थस्य नास्तीति कथं वेदार्थसद्भावोऽपीति वाच्यम्, भावानवबोधात्। नानुमानसद्भावमङ्गीकृत्यैव बाधकान्तराभावादागमार्थमिथ्यात्वासिद्धिरुच्यते, किन्त्वनुमानमेव नोदेतीत्युच्यते। साधकस्त्वागमो विद्यत एव।

न चैकेन मानेन गृहीतस्यान्यैरगृहीतत्वेनाभावो भवति। तथात्वे रसनादिगृहीतानां नेत्राद्यगृहीतत्वे रसादीनामभावापत्तेः। तदुक्तम्—

न चान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।
तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥

ननु चोदनाप्रामाण्यं सिद्धमिति कुतस्त्योऽनुमानबाध इति, तन्न; त्वन्मते चोदनाप्रामाण्यासिद्धावपि वैदिकानां तत्सिद्धेर्निष्प्रत्यूहत्वात् । तत्रापि वेदादसंदिग्धाविपर्यस्तार्थबुद्धेर्निष्पन्नत्वेन प्रामाण्यासिद्धेरभावाच्च । द्वेषादसिद्ध्युक्त्याऽपि न तदप्रामाण्यम् । न चात्मेच्छाद्वेषादिभिरप्रामाण्यं वक्तुं युक्तम्; अग्निदाहादिदुःखप्रत्यक्षस्याप्रामाण्यापादनासंभवात् । अभिलषितस्य ज्ञानस्याभिलाषविषयत्वमात्रेण प्रामाण्यानुपपत्तेश्च । तस्मादालोकवद् वेदेन सर्वसाधारण्येन संदिग्धाविपर्यस्तार्थविबोधजननात् स्वाभाविकमेव प्रामाण्यम् ।

यदुक्तम् 'वेदार्थो दुर्बोधः, लोके प्रमाणान्तरपरिच्छेद्यत्वाद्वाक्यार्थस्य तदवगमोपायत्वं शब्दानां योजयितुं शक्यते । वेदार्थस्त्वतीन्द्रियः । न च रागादिमतां तद्दर्शनकौशलमस्ति । अत एव तद्दर्शिनां वृद्धव्यवहारादिना व्युत्पत्तिरपि न सम्भवति । न च वेदे "वृद्धिरादैच्" इति पाणिनिरिव हस्तः, करः, पाणिरिति, अभिधानमालाकार इव एषोऽस्य मामकस्य शब्दस्यार्थ इत्युपदेशोऽस्ति ।

तदुक्तं धर्मकीर्तिना—

स्वयं रागादिमानर्थं वेत्ति चेत्तस्य नान्यतः ।
न वेदयति वेदोऽपि वेदार्थस्य कुतो गतिः ॥

यदि निगमनिरुक्तव्याकरणवशेन तदर्थकल्पना क्रियते, तर्हि नानामतित्वादुपदेश्यानामनेकार्थत्वाच्च । नाम्नामुपसर्गनिपातानाञ्च न नियतः कश्चनार्थः, अन्यथा तत्कल्पनासम्भवाच्च । तदप्युक्तं तेनैव 'तेनाग्निहोत्रं जुहुयात् स्वर्गकामः' इति श्रुतौ खादेच्छ्वमांसमित्येष नार्थ इत्यत्र का प्रमा ?' इति, तदपि तुच्छम् । य एव लौकिकाः शब्दास्तदर्थाश्च त एव वैदिकाः शब्दास्तदर्थाश्चेति सिद्धान्तानभिज्ञानात् । तथाहि नाभिनवाः केचन वैदिकाः शब्दाः, वाक्यरचनामात्रं तु वेदे भिद्यते । वेदश्च तदर्थाश्च तदवगमश्च तदुपायश्च तदनुष्ठानञ्च नाद्यत्वे प्रवृत्तानि, किन्तु मीमांसकानां मते तान्यनादीनि, नैयायिकादीनां मते तु सर्गात्प्रभृति प्रवृत्तानि, कस्तेष्वद्य पर्यनुयोगावसरः ? तेन पूर्वोक्तपारम्पर्यसहकृतेषु निरुक्तव्याकरणमीमांसादिशास्त्रेषु सत्सु कुतो वेदार्थावगमे विप्रतिपत्तिरपि ?

रागादिमानपि 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति वाक्यादग्निहोत्राख्यं कर्म स्वर्गसाधनमिति जानात्येव । द्वेषादपि नान्यथार्थं प्रत्येतुं कश्चनापि शक्नोति । धर्मकीर्तिना तु 'खादेच्छ्व-

मांसम्' इत्याद्यपभाषणेन वेदनिन्दैव कृता। तत्पातकेनैव चीनादिदेशीयेषु बौद्धेषु श्वमांसाशित्वं जातमिति। तस्मात्—

शक्तिग्रहादिभिस्तैस्तैर्बोधोपायैः सुनिश्चितैः।
लोके यथा तथा वेदे शब्दार्थावगतिः सदा॥
रागादिमानपि प्राज्ञः शब्दार्थं वेद निश्चितम्।
द्वेषादपि विरुद्धार्थं न कर्तुं प्रभवेत् ततः॥
पारम्पर्यसमायातमर्थं त्यक्त्वा प्रमादतः।
वेदनिन्दा कृता तेन बौद्धास्ते कुक्कुरादिनः॥
पारम्पर्यसमुच्छित्त्या ह्यन्यथार्थप्रसाधनम्।
यदीष्टं प्रभवेत् तेषां बुद्धमन्त्रोऽपि गालिदः॥

यदपि च यदि रागादिराहित्येन जैमिन्यादीनां वेदार्थज्ञता 'तदा बुद्धादीनां रागादिराहित्येन सर्वज्ञता किं न स्यात्? यदि बुद्धादिषु रागादिराहित्यं न सम्भवति, तदा जैमिन्यादिषु तत्कथं सम्भाव्येत? तदपि न रागादिसत्त्वेऽपि वेदार्थज्ञत्वसम्भवात्। न हि रागादयः कम्बलादिवदावरका विज्ञानस्य, किन्तु तदाक्षिप्तमना विविधविषयतृष्णापरिप्लुतो न शक्नोति भावयितुमिति भावनादरमात्र एव रागादिविरहोपयोगः। वेदार्थज्ञानस्य वेदप्रमाणमूलत्वेन सम्भवेऽपि सर्वज्ञानस्य प्रमाणाभावान्न सम्भवः। शब्दार्थज्ञानाय शब्द एवापेक्षितः, न भावनादिः, अन्यथा भावनाविधिज्ञानायापि भावनापेक्षायामन्योन्याश्रयादयो दोषा अपरिहार्या एव स्युः। तेन रागादिमतोऽतीन्द्रियेऽर्थे प्रत्यक्षासम्भवेऽपि वाक्यार्थज्ञाने बाधासम्भवात्। संभवत्येव वेदार्थज्ञानम्।

मन्त्राणामिव ब्राह्मणभागस्यापि वेदत्वमुक्तमेव; न च श्रीदयानन्दानुयायिभिस्तस्यावेदत्वमुच्यत इति वाच्यम्; 'कात्यायनभिन्नैः ऋषिभिर्वेदसंज्ञाया अस्वीकृतत्वादिति तदाचार्यस्वामिदयानन्दोक्तिविरोधात्। एतद्रीत्या कात्यायनमहर्षिणा ब्राह्मणानां वेदत्वमङ्गीक्रियते। तदुक्तिस्तु न सङ्गता, ब्राह्मणानां वेदत्वबोधकवचनान्तराणामभावेऽपि परमाप्तस्य श्रौतसूत्रकारस्य कात्यायनस्य वचनमेव तत्र पर्याप्तम्। यदि सम्भवेदार्षवचनेन केनचिदस्य विरोधः, तर्हि विचारायावकाशः स्यादपि। न हि कस्यचित् स्वकपोलकल्पनया परमाप्तस्य ऋषेर्वचने अप्रामाण्यमारोपयितुं शक्यम्। अनेकेषां महर्षीणामघोनिर्दिष्टवचनैः मन्त्राणां ब्राह्मणानां च वेदत्वं प्रमीयते।

"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति वचनं बौधायनगृह्यसूत्रे ( २।६।३ ), बौधायनधर्मसूत्रे ( २।६।७ ), आपस्तम्बश्रौतसूत्रे ( २४।१।३१ ), सत्याषाढश्रौतसूत्रे ( १।१।७ ), कात्यायनपरिशिष्टप्रतिज्ञासूत्रे ( २ ) च समायाति। एवं पारस्करगृह्यसूत्रे "वेदं च समाप्य स्नायात्" इत्यत्र "विधिर्विधेयस्तर्कश्च वेदः" इत्युक्तम्। अत्र विधेयो मन्त्रः, विधिस्तर्कश्च ब्राह्मणम्। एवमृग्वेदीये कौशिकगृह्यसूत्रे "मन्त्रब्राह्मणयोर्वेदशब्दः" ( ३।१२।२३ ), अथर्ववेदीये कौशिकसूत्रे च "आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च" इत्युक्तम्। एवं शुक्लयजुर्वेदीये प्रातिशाख्ये "स्वरसंस्कारयोश्छन्दसि नियमः" ( १।१।२ ) इति सूत्रे उक्तम्--ब्राह्मणेऽपि स्वरविधानाद् ब्राह्मणभागस्य मन्त्रत्वम्। प्रातिशाख्यप्रतिज्ञासूत्रे "ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ" ( ८ ) इति सूत्रेण ब्राह्मणेऽपि स्वरविधानाद् ब्राह्मणानां वेदत्वमुक्तम्।

सायणेनापि "मन्त्रब्राह्मणत्वं तावद्वेदस्यादुष्टं लक्षणम्" इति वदता मन्त्रब्राह्मणयोर्वेदत्वमङ्गीकृतम्। षड्गुरुशिष्येऽपि उक्तम्—"मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः" इति। कौटल्येनापि ब्राह्मणानामाम्नायत्वमङ्गीकृतम्। शुक्रनीतावपि उक्तम्—"मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु" ( ४।२।५१ )। पूर्वमीमांसायामुक्तम्—"तच्चोदकेषु मन्त्राख्या" (२।१।३२), "शेषे ब्राह्मणशब्दः" ( २।१।३३ ) इति। अत्र शेषे मन्त्रभागादवशिष्टे वेदैकदेशे ब्राह्मणशब्द इत्युक्तम्। उभयोर्वेदत्वानङ्गीकारे शेषशब्दस्य वैयर्थ्यम्। अत्र अङ्गार्थे शेषशब्दं व्याचक्षाणानां मते "शेषे यजुःशब्दः" इति सूत्रानुसारं यजुर्मन्त्रणामपि मन्त्रत्वाभावः प्रसज्येत। "विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्" ( पूर्वमीमांसादर्शने २।१।३० ) इत्यत्र विधिर्ब्राह्मणम्, तेन विधिमन्त्रयोरैकार्थ्यं सिद्धम्। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" ( १।२।१ ) इत्यत्र आम्नायशब्देन मन्त्रब्राह्मणात्मकः सम्पूर्णवेदराशिरेव गृहीतः। "शेषे ब्राह्मणशब्दः" ( २।१।३३ ) इति जैमिनिसूत्रभाष्ये शास्त्रतात्पर्यविदां शबरस्वामिनामपि अयमेवार्थोऽभिप्रेतः। भट्टपादेन कुमारिलेनापि तन्त्रवार्त्तिके 'मन्त्रब्राह्मणयोर्वेदनामधेयम्" उक्तम्। "वेदशब्देन ऋग्यजुःसामानि ब्राह्मणसहितानीत्युच्यन्ते" इति मेधातिथिः। "वेदोऽखिलो धर्ममूलम्" इत्यत्र ब्राह्मणानां वेदत्वप्रतिपादनायैव अखिलेति विशेषणम्। मनुस्मृतेर्वचनान्तराण्यपि ब्राह्मणानां वेदत्वं प्रमापयन्ति। यथा -

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।

इत्यत्र ब्राह्मणेष्वेव धर्मप्रतिपादनात् श्रुतिशब्देन तान्येव गृह्यन्ते, विधिरूपब्राह्मणेनैव यागादिरूपो धर्मो बुद्ध्यते। तथैव—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इत्यत्र 'कृत्स्न'शब्दस्यापि मन्त्रब्राह्मणयोरुभयोर्वेदत्वबोधने तात्पर्यम् ।

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥

इति च ।

कोषाणामपि प्रचुरतरप्रमाणमत्र उपलभामहे । तथा हि मेदिनीकोषे—"ब्राह्मणो ब्रह्मजातौ स्याद् वेदभागे नपुंसकम्" इति । अमरकोषे—"श्रुतिः स्त्री वेद आम्नायः" इति । विश्वकोषे—"श्रुतिः क्षेत्रे तथाम्नाये वार्तायां श्रौतकर्मणि" इति ।

"जन्माद्यस्य यतः" इति सूत्रेण ब्रह्मलक्षणं ब्रुवाणो भगवान् बादरायणः "शास्त्रयोनित्वात्" इति सूत्रेण शास्त्रप्रमाणकं ब्रह्मप्रतिपादयत्पूर्वसूत्रद्वारा विचारणीयम् "यतो वा इमानि भूतानि जायन्ते" इत्यादि ब्राह्मणवाक्यमेव 'शास्त्र'पदेन विवक्षति । एवमेतेन सिद्ध्यति यत् पूर्वपक्षिणो विचारो निराधारोऽसङ्गतश्चेति ।

तत्र बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेद इत्यादिमहाभाष्यरीत्या एकत्रिंशदुत्तरैकादशशतशाखात्मका मानवग्राह्या वेदा भवन्ति । एकैकस्यां मन्त्राः, ब्राह्मणानि, आरण्यकान्युपनिषदः, अन्ये चावान्तरा भेदा भवन्ति । एतद्विरुद्धान्या कल्पना चतस्रः संहिता एव वेदाः, अन्यास्तु शाखाः, न वेदा इत्यादयो निर्मूलाः प्रमाणहीना एव । तदभिमतानां शाकली-माध्यन्दिनी-कौथुमी-शौनकीसंहितानामपि शाखात्वाविशेषात् ।

तत्रापि महाभाष्यकारीयोद्धरणरीत्या "शन्नो देवीरभिष्टये" इति मन्त्रोऽथर्ववेदप्रतीकत्वेनोद्धृतः ।

दयानन्दीयैस्तु—तस्य पिप्पलादशाखास्थस्यादिममन्त्रस्य न वेदत्वं सिद्ध्यति, तैः शौनकीसंहिताया एव वेदत्वोपगमात् ।

"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" (गो० सू० २।१।५७.) इत्यत्र अनृतादिदोषैर्वेदानामप्रामाण्यमाशङ्कितम् । तत्रोदाहरणानि ब्राह्मणवाक्यान्येव वात्स्यायनमहर्षिणोद्धृतानि ब्राह्मणानामवेदत्वे, तत्कथं सङ्गच्छते ?

तथाहि—"पुत्रकामः पुत्रेष्ट्या यजेत" इति नेष्टौ संस्थितायां पुत्रजन्म दृश्यते। दृष्टार्थस्य वाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यम्। "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्याद्यनृतं ज्ञायते। विहितव्याघातात्–'उदिते होतव्यम्', "अनुदिते होतव्यम्, 'समयाध्युषिते होतव्यम्' इति विधाय, विहितं व्याहन्ति 'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याहुतिमभ्यवहरतः यः समयाध्युषिते जुहोति, पुनरुक्तदोषात् 'त्रिः प्रथमाम्, त्रिरुत्तमाम्' पुनरुक्तदोषो भवति।

"न कर्मकर्तृसाधनवैगुण्यात्" (५८) इत्युत्तरसूत्रेणानृतदोषपरिहारेण वेदप्रामाण्यं साधितम्। तत्र कर्मणः पुत्रेष्टिलक्षणायाः क्रियाया अयथाविधित्वादिवैगुण्यात् कर्त्तुरविद्वत्त्वादिवैगुण्यात्। साधनस्य हविरादेरप्रोक्षितत्वादिवैगुण्यात् फलाभावोपपत्तिरुक्ता।

"अभ्युपेत्य कालभेदे वचनात्" (५९) इति व्याघातदोषो निराकृतः। येन यजमानेन उदितादिषु यः पक्षो गृहीतः, तेन स एव पालनीयः, तदतिक्रमे दोषबोधनाय पूर्वोक्तदोषकथनं विधिभ्रेषे निन्दावचनमिति न व्याघातः।

"अनुवादोपपत्तेश्च" (६) इति पुनरुक्तदोषः परिहृतः। एकादशसामधेनीनां प्रथमोत्तमयोस्त्रिरभिधाने हि पञ्चदशत्वं भवति। "इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण च बाधे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः" इत्यनुवादस्य प्रयोजनवत्त्वेन पौनरुक्त्यस्य सार्थक्यात्। तत्रैव "विध्यर्थवादानुवादवचनविनियोगात्" (६२) सूत्रे विधिवादानुवादभेदेन ब्राह्मणभेद उक्तः। "विधिर्विधायकः" (६३) स्तुतिः, निन्दा, परकृतिः, पुराकल्प इत्यर्थवादः।

स्तुतिः–'सर्वजिता वै देवा सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति'।

निन्दा—"स वा एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते गर्त्ते पतत्ययमेवैतज्जीर्य्यते वा प्रमीयते" इति।

परकृतिः–"हुत्वा वपामेवाग्रेऽभिधारयन्ति, अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिधारयन्ति। अग्नेः प्राणाः पृषदाज्यस्तोमांमत्येवाभिदधति।"

ऐतिह्यसमाचरितो विधिः पुराकल्पः–"तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे" इत्येवमादि। अत्र ब्राह्मणभागस्य वेदत्वेनैव विभागादिवर्णनम्।

यदुक्तम्—"द्वितीया ब्राह्मणे" (२।३।६० पा० सू०); "चतुर्थ्यर्थे बहुलं छन्दसि" (२।३।६२); "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (४।३।१०५) इत्यादिसूत्रेषु छन्दोब्राह्मणयोर्भेददर्शनेन ब्राह्मणस्य छन्दोऽभिन्नतैव, तयोरैक्ये तु "द्वितीया ब्राह्मणे" इत्यस्माद् ब्राह्मणपदानुवृत्तौ

"चतुर्थ्यर्थे बहुलं छन्दसि" इत्यत्र छन्दसीति व्यर्थमेव स्यादिति तन्न, केवलमन्त्रभागस्येव ब्राह्मणस्यापि वेदैकभागत्वेन संपूर्णवेदत्वाभावात्। तथाह्युक्तसूत्रेण ब्राह्मणमात्रे द्वितीया विधीयते, न सर्वत्र। "वेदे गामस्य तदहः सभायां दीव्येयुः" इति तदुदाहरणम्। ब्राह्मणस्य सम्पूर्णवेदत्वे तु "दिवस्तदर्थस्य" (२।३।५६) इति सूत्रेण द्वितीयां बाधित्वा षष्ठी स्यात्, तस्मान्मन्त्रवद् ब्राह्मणमपि वेदैकदेश एव।

श्रुति-छन्दोनिगमाम्नायशब्दास्तु मन्त्रब्राह्मणात्मकस्य सम्पूर्णवेदस्य बोधकाः। "चतुर्थ्यर्थे बहुलं छन्दसि" इति सूत्रेण तु सम्पूर्णे वेदे चतुर्थ्यर्थे षष्ठी भवति। तेनैवास्योदाहरणद्वयमुपात्तम्। "पुरुषमृगश्चन्द्रमसे" इति मन्त्रभागस्य "या खर्वेण पिबति तस्यै खर्वः" इति च ब्राह्मणभागस्य, तेनोभयोर्ग्रहणार्थयुक्तमेव छन्दोग्रहणम्; अन्यथा "मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्" (३।२।७१) "अवे यजः" (३।२।७२) "विजुपे छन्दसि" (३।२।७३) इत्यत्र मन्त्रे इत्यनुवृत्त्या कार्यनिर्वाहे छन्दोग्रहणं व्यर्थं स्यात्। मन्त्रछन्दसोर्भिन्नत्वे ब्राह्मणस्येव मन्त्रस्याप्यवेदत्वमापद्येत। तस्मान्मन्त्रो ब्राह्मणश्च एकैकदेशवाचकौ, छन्दोवेदादयश्च सम्पूर्णवेदवाचकाः। एवं "छन्दोब्राह्मणानि च तद्विषयाणि" (४।२।६६ पा० सू०) इत्यत्रापि छन्दोग्रहणेनैव मन्त्रब्राह्मणस्यापि ग्रहणसम्भवेन तद् व्यर्थं सद् ब्राह्मणविशेषं ज्ञापयति। तेन प्राचीनर्षिप्रोक्तब्राह्मणग्रहणमिह भवति, न नवीनर्षिप्रोक्तब्राह्मणग्रहणम्। अत एव याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानीत्यत्र "छन्दोब्राह्मणानि०" इति सूत्रं न प्रवर्त्तते। तदर्थमेव महाभाष्ये—"याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः, तुल्यकालत्वात्" इति वार्त्तिकेन णिनिं प्रतिषिध्य तत्साधयति। प्रवाहरूपेण सर्वेषामृषीणामनादित्वेन तुल्यकालत्वमेवेति वार्त्तिकोपयोगः। प्रवाहरूपेणानादित्वेऽप्येकस्मिन् कल्पे प्रादुर्भावपौर्वापर्याभ्यां प्राचीनत्वार्वाचीनत्वव्यवस्थाप्युपपद्यते। तत एव "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" इति सूत्रे पुराणपदोपादानम्। तद्दृष्ट्यैव याज्ञवल्क्यानि ब्राह्मणानीति नवीनप्रोक्तब्राह्मणव्यतिरिक्तपुराणप्रोक्तब्राह्मणग्रहणार्थं छन्दोब्राह्मणानीत्यत्र ब्राह्मणग्रहणं सार्थकं भवति; अन्यथा पुराणप्रोक्तेति सूत्रं व्यर्थमेव स्यात्। विस्तरस्तु भेदस्वरूपविमर्शे।

## पुराणेतिहासधर्मशास्त्राणामपि प्रामाण्यं सुनिश्चितम्

ननु भागवतादिपुराणानामर्वाचीनपुरुषनदीपर्वतादिप्रतिपादकत्वदर्शनेनार्वाचीनत्वमेव हिट्लरादिकथाप्रतिपादकग्रन्थवदिति चेन्न, लौकिकेतिहासोल्लेखस्य घटनापूर्वकत्वेऽपि वैदिकादिशब्दानां तद्वैपरीत्यावगमात्। वेदेऽपि पुरूरवस-उर्वशी-यम-यमीप्रभृतिपुरुषादि-

वर्णनं दृश्यते, न तावतापि तेषां घटनापूर्वकत्वम् "वाचा विरूपनित्यया" इत्यादिश्रुतिभिस्तन्नित्यत्वप्रतिपादनात्। वेदशब्देभ्यः सृष्टिवर्णनात् "सभूरिति व्याहरत्, तस्माद्भुवमसृजत्" इति सृष्टेर्वेदशब्दपूर्वकत्वं स्पष्टमुक्तम्। एवमेव--"ज्ञानजन्याभवेदिच्छा इच्छाजन्या भवेत् कृतिः" इति नियमेन जगदुत्पादिन्याः परमेशकृतेरपीच्छापूर्वकत्वम्, इच्छायाश्च ज्ञानपूर्वकत्वमिष्यते। ज्ञानं संकल्पो विचारश्च कस्याञ्चिद्भाषायामेव भवति, "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति वाक्यपदीयोक्तेः। तथा च सर्वस्रष्टुः परमेश्वरस्य विश्वोत्पत्तिमूलज्ञानीयभाषाया एव वेदत्वेन वैदिकशब्दानां घटनामूलकत्वानुपपत्त्या सृष्टेस्तन्मूलकत्वोपपत्तेः। तथा च तत्तत्पुरुषादिनामसत्त्वेऽपि यथा न वेदानामर्वाचीनत्वं संभवति, तथैव पुराणानामपि। पुराणादिकन्त्वार्षं वेदव्याख्यानमेव "इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्" इति वचनात्।

अथर्वाङ्गिरसां मन्त्रेषु छान्दोग्यबृहदारण्यकोपनिषदादिषु मन्वादिधर्मशास्त्रेषु च पुराणेतिहासयोर्महत्त्ववर्णनाद् वेदवदेव तेषामपि प्रामाण्यमव्याहतम्। आनुपूर्वीपरिवर्तनापरिवर्तनाभ्यामेव तत्र भेदः। पुराणादिष्वर्वाचीननदीपर्वतपुरुषराजादिवर्णनं तु वैदिकवर्णनवन्नाधुनिकत्वप्रयोजकम्।

अत एव--

"स यथाऽऽर्द्रेन्धनाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा रेऽस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि" (श० १४, प्र० ब्रा० ४, कं० १०)।

अत्र ऋग्वेदादीनामिवेतिहासपुराणादीनामपि भगवन्निःश्वसितत्वमुक्तम्। न च पुराणशब्द इतिहासस्य विशेषणमिति वाच्यम्, तथात्वे पुल्लिङ्गत्वापातात्।

"स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिम्" (छा० प्र० ७ ख०)। अत्रापि विविधविद्यास्वितिहासपुराणवर्णनं दृश्यते, तस्य पञ्चमवेदत्वञ्च स्पष्टमुक्तम्।

"अस्य महतो भूतस्य निःश्वसितमेतद्य ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणविद्या उपनिषदः" (बृ० आ० अ० ४, क० ११, ब्रा० ५)।

"स बृहतीं दिशमनुव्यचलत् तमितिहासश्च पुराणञ्च गाथाश्च नाराशंसीश्चानुव्यचलन्। इतिहासस्य च पुराणस्य च गाथानां च नाराशंसीनाञ्च प्रियं धाम भवति, य एवं वेद"

(अ० कां० १५, प्र० ६, अनु० १, म० १२) इत्यथर्वमन्त्रसंहितायाञ्चेतिहासपुराणादीनां विद्यानां वर्णनं दृश्यते । एतेन पुराणादीनामाधुनिकत्वं सर्वथा प्रत्याख्यातं वेदितव्यम् ।

ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः ॥
(अथर्व० ११।७।१२४)

अत्रापि मन्त्रे पुराणवर्णनं दृश्यते ।

यदुक्तमत्र मन्त्रेषु पुराणशब्देन न ब्रह्मादिपुराणानां ग्रहणम्, किन्तु शतपथादि-ब्राह्मणानामेव पुराणशब्देन ग्रहणमिति तत्तुच्छम्, प्रसिद्धार्थत्यागेऽप्रसिद्धार्थग्रहणे मानाभावात् । श्रीदयानन्दादिभिर्ब्राह्मणग्रन्थानां वेदपश्चाद्भावित्वाभ्युपगमेन तन्मतरीत्या प्राक्तने वेदे ब्राह्मणानां नामोल्लेखासंभवात् । गोपथब्राह्मणे तु ब्राह्मणेभ्यः पृथगेवेतिहास-पुराणादीनां वर्णनं स्पष्टं तन्मतमपहन्ति । एवमिमे "सर्वे वेदा निर्मिताः, सकल्पाः सरहस्याः, सब्राह्मणाः, सोपनिषत्काः, सेतिहासाः, सान्वाख्यानाः, सपुराणाः, सस्वराः ससंस्काराः, सनिरुक्ताः, सानुशासनाः, सानुमार्जनाः, सवाकोवाक्यास्तेषां यज्ञमभिपद्यमाना छिद्यते नामधेयं यज्ञमित्येवमाचक्षते" (गोप० पू० भा०, प्र० २)।

अत्र निर्मिता इत्यस्याविर्भाविता इत्यर्थस्तत एव ।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

याज्ञवल्क्यस्मृतौ चतुर्दशविद्यास्थानेषु पुराणानामुल्लेखः । वात्स्यायनभाष्यादौ "समा-रोपणादात्मन्यप्रतिषेधः" इति गोतमसूत्रे महर्षिवात्स्यायनेनोक्तम् ।

श्रीभगवत्पादैः श्रीशङ्कराचार्यैः "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादिरीत्या भगवन्निःश्वसितस्यर्ग्वेदादेरकृत्रिमत्वमपौरुषेयत्वञ्चोक्तम् । तेनैव तत्रेतिहास-पुराणादिकमष्टविधं ब्राह्मणमेव गृहीतम् । परं छान्दोग्ये "ऋग्वेदं भगवोऽध्येमि" इत्यादिप्रसङ्गे पुराणेतिहासशब्देन ब्राह्मणादिपुराणादिकमेव गृहीतम् । तथा च प्रमाणविशेषबलात् क्वचित् पुराणशब्देन ब्राह्मणग्रहणेऽपि स्वाभाविकरूपेण ब्राह्मादिरेव पुराणपदार्थः, 'रूढिर्योगाद्बलीयसी' इति न्यायात् । पूर्वकल्पीयसंस्कारानुसारेण तपस्तपस्यतो ब्रह्मणो हृदि पूर्वमृषिछन्दोदैवतादि-रूपस्य विनियोगस्य प्रादुर्भावः, प्रतिमन्त्रमध्ययनाध्यापनयोस्तज्ज्ञानस्यानिवार्यत्वात्, ऋषि-देवतादिपुराणविषयलोकवृत्तज्ञानं पुराणमन्तरा न संभवति । तत एव पूर्वं ब्रह्मणः पुराण-प्रादुर्भावः, ततस्तद्वक्त्रेभ्यो वेदानां प्रादुर्भावः ।

पुराणार्थस्य ब्रह्मबुद्धिसंकलितत्वात् तत्पौरुषेयत्वम्, वेदानां तद्बुद्धिप्रयत्नानपेक्षत्वादपौरुषेयत्वम्।

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥
(वायुपुराणम्)

श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्।
एकेन हीनः काणः स्याद् द्वाभ्यामन्धः प्रकीर्तितः॥
पुराणहीनाद् हृच्छून्यात् काणान्धावपि तौ वरौ।

इत्यादिवचनैः पुराणानां माहात्म्यातिशयो व्यज्यते, पूरकत्वादपि पुराणत्वं पुराणानाम्।

नहि ब्राह्मणग्रन्थानां पुराणनामोल्लेखो दृश्यते। पद्मादिपुराणेषु तु पुराणोल्लेखो दृश्यते, ब्राह्मणभागस्योद्धरणं तु श्रुतिशब्देन तत्र तत्र क्रियते। "समारोपणादात्मन्यप्रतिषेधः" (४।१।६१) "पात्रचयान्तानुपपत्तेश्च फलाभावः" (६५ गो० सू०) इत्यत्र वात्स्यायनमहर्षिणोक्तं चातुराश्रम्यविधानाच्चेतिहासपुराणा धर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः, इतिहासपुराणधर्मशास्त्रेषु चातुराश्रम्यविधाना ऐकाश्रम्यं मया कृतम्। तत्रैव, तदप्रमाणमिति चेत्, न; प्रमाणेन प्रामाण्याभ्यनुज्ञानात्। प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते। ते वा खल्वेतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद इति। तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये धर्मशास्त्रस्य व्यवहारलोपाल्लोकोच्छेदप्रसङ्ग इति प्रघट्टकेनेतिहासपुराणधर्मशास्त्रादिप्रामाण्यमुक्तम्। तत्रानाशङ्कनीयप्रामाण्येन ब्राह्मणेनेतिहासपुराणयोः पञ्चमवेदत्वं प्रामाण्यं च साधितम्।

तत्रैव द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः, य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति प्रकारान्तरेण तेषां प्रमाण्यं साधितम्, विषयव्यवस्थानाच्च। यथाविषयं प्रामाण्यम्, अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासस्य, लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः। तत्रैकेन न सर्वं व्यवस्थाप्यते यथाविषयमेतानि प्रमाणानीन्द्रियवदिति इति वचनैर्वात्स्यायनेन मन्त्रब्राह्मणस्य वेदत्वम्, इतिहासपुराणयोश्च पञ्चमवेदत्वम्, वेदेन चेतिहासपुराणयोः प्रामाण्यं समर्थितम्। सत्यार्थप्रकाशस्य तृतीयसमुल्लासे ८० पृष्ठे ऐतरेयशतपथ-साम-गोपथब्राह्मणचतुष्टयस्य शिक्षा-कल्प-व्याकरण-निघण्टु-निरुक्तच्छन्दोज्योतिषाङ्गानां मीमांसादिषट्शास्त्राणामुपाङ्गानां यथाप्रामाण्यमुक्तम्, तथैव गोतमसूत्रे वात्स्यायनमुनिकृत-

भाष्यस्य प्रामाण्यमुक्तम्। योगसूत्रे व्यासभाष्यस्यापि प्रामाण्यमुक्तम्। तेन पुराणाप्रामाण्यप्रतिपादनमज्ञानमूलकमेव।

यत्तु विक्रमीयसप्तम्यां शताब्द्यां पुराणनिर्माणमिति तत्तु निर्मूलम्, प्रोक्तदृढतरप्रमाणविरुद्धत्वात्। पुराणं हृदयं स्मृतमिति रीत्या पुराणस्य हृदयस्थानीयत्वे नातीव माहात्म्यम्, तत्रापि पुराणार्कस्य श्रीभागवतस्य ततोऽप्यधिकमहामहिमशालित्वम्।

ननु पुराणानां परस्परविरुद्धनिन्दादिवर्णनात् सुन्दोपसुन्दन्यायेन समेषामप्रामाण्यमेवेति चेन्न, समेषां तत्तद्विषयेऽवान्तरतात्पर्य्ये सत्यपि ब्रह्मण्येव महातात्पर्य्यकत्वेनादोषात्। एकमेव वेदवेदान्तादिसकलसच्छास्त्रतात्पर्य्यविषयीभूतं ब्रह्मपरमात्मभगवच्छब्दितं वस्तु वेदे रामायणे पुराणे भारते ब्रह्म-रामकृष्ण-विष्णु-रवि-गणपति-शिव-त्रिपुरसुन्दर्यादिरूपेण निरूप्यते।

वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥

इत्युक्तेः 'आकाशस्तल्लिङ्गात्, प्राणस्तथानुगमात्' इत्यादिसूत्रैर्यथा सृष्ट्यादिकर्तृत्वेन भौतिकाकाशप्राणवाचकयोरप्याकाशप्राणशब्दयोर्ब्रह्मपरत्वं निर्धारितम्, तथैव रामायणभारतादिषु रामकृष्णविष्णुशिवादीनां सृष्ट्यादिकारणत्वश्रवणविशेषात् परब्रह्मपरत्वमेवावगन्तव्यं रामादिशब्दानाम्। तत्तत्पुराणेषु शिवविष्ण्वादिनिन्दावचनानान्तु न तदुपासनाप्रतिषेधे तात्पर्य्यम्, रागाप्राप्तत्वात्। रागप्राप्तमेव निषिद्ध्यते, न शास्त्रप्राप्तम्, तस्यात्यन्तनिषेधे वचनवैयर्थ्यापत्त्या षोडशिग्रहणाग्रहणवद्विकल्पप्रसक्तेः। नहि शिवविष्ण्वादिभजनं रागतः प्राप्तम्, येन तन्निषिद्ध्येत, कुलसम्प्रदायादिभेदेन विकल्पोऽपि व्यवस्थित एव भवति।

नीलकण्ठेन--श्यालशुनकन्यायेन निन्दावचनान्युपपादितानि। यथा—कश्चित् स्वमुग्धां भार्य्यां कोपयितुं वक्रभ्रुकुटितरं विलोकितुं गृहशुनकं श्यालनाम्ना संकेत्य गालयति, सा मद्भ्रातरमयं गालयतीति मत्वा कुप्यति, तथैव स्वोपास्यनिष्ठादार्ढ्याय कश्चित्कार्य्यब्रह्मैव कार्य्यकारणातीतसर्वाधिष्ठानब्रह्मनाम्ना व्यपदिश्य, तदपकर्षो वर्ण्यते। विष्णुपुराणे विष्णुरनन्तब्रह्माण्डपतिः, शुद्धः, सर्वोत्कृष्टः, शिवस्तु तत्र कार्य्यब्रह्मात्मकः; तथैव शिवपुराणे शिवः सर्वाधिष्ठानभूतोऽनन्तब्रह्माण्डाधिपतिः परमात्मैव, विष्णुः कार्यब्रह्मात्मकः एकैकब्रह्माण्डपालकः। कार्यकारणातीतानन्तब्रह्माण्डपतिप्राप्त्यपेक्षया कार्यब्रह्मप्राप्तिर्नरकप्राप्तिरेव। 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते, अपि तु विधेयं स्तोतुम्' इति न्यायात्। "अमूनि यानि स्थानानि ब्रह्मणः परमेष्ठिनः तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः।" इति जापकाख्यानीयवचनात्।

ननु श्रीभागवतं देवीभागवतं वा महापुराणमित्यत्रापि विवदन्ते, तथा च श्रीभागवतस्य महापुराणत्वे वेदव्यासकृतत्वे किं मानमिति चेन्न, बृहन्नारदीयपुराणे श्रीभागवतस्यैव सूत्रदर्शनात्। तथाहि ब्रह्मोवाच--

मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम्।
श्रीमद्भागवतं नाम पुराणं ब्रह्मसंमितम्॥
तदष्टादशसाहस्रं कीर्तितं पापनाशनम्।
सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतम्॥
तत्र तु प्रथमस्कन्धे सूतर्षीणां समागमे।
व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च।
पारिक्षितमुपाख्यानमितीदं समुदाहृतम्॥
परिक्षिच्छुकसंवादं सृष्टिद्वयनिरूपणम्।
ब्रह्मनारदसंवादे देवताचरितामृतम्॥
कैशोरे मथुराख्यानं यौवने द्वारकास्थितिः।
भूभारहरणं चात्र निरोधे दशमः स्मृतम्॥

इत्यादिना विस्तरेण श्रीभागवतीयकथावर्णनमेव तत्र दृश्यते, न देवीभागवतीयकथावर्णनम्। तस्मात् श्रीमद्भागवतस्यैव महापुराणत्वादिकम्, कल्पभेदेनोभयोर्वा महापुराणत्वम्, सिद्धान्तदृष्ट्योभयोरपि वेदाविरुद्धत्वे वेदमूलकत्वाभ्यां प्रामाण्याभ्युपगमात्। इतरनिन्दादिकन्तूभयत्र स्वप्रतिपाद्यन्तु तावेव पर्यवस्यति, नहि निन्देति सिद्धान्तस्य जागरूकत्वात्।

## श्रीभागवते वेदाविर्भावप्रकारः

ब्रह्मणो हृदाकाशान्नादो जातः, यश्च कर्णपुटपिधाने श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते। यस्य नादस्योपासनया योगिनो द्रव्यक्रियाकारकाख्यमात्मनो मलधूत्वाऽपुनर्भवं पदं यान्ति।

तस्मान्नादात्त्रिमात्र ओंकारोऽभूत् कण्ठोष्ठादिभिरुच्चार्यमाणस्यौंकारस्याक्षरसमाम्नायान्तर्गतत्वात्। यश्चाव्यक्तप्रभवः स्वराट् हृदि स्वेनैव राजते। यश्च तस्य भगवतः परमात्मनो लिङ्गं गमको भवति। य इमं स्फोटमव्यक्तमोंकारं कर्णपिधानादिनाऽवृत्तिकेऽपि श्रोत्रे शृणोति, न च जीवस्य तच्छ्रोतृत्वं संभवति, तस्य करणाधीनज्ञानत्वात्; परमात्मनस्तु इन्द्रियवर्गराहित्येऽपि द्रष्टृत्वात् संभवति तच्छ्रोतृत्वम्, जीवस्य शब्दोपलब्धिस्तु परमात्मद्वारिकैव।

अल्पसाराणां चरितेन कियत् सुदुश्चरं व्रतमहं चरिष्यामीत्युक्तवान् , गुरुस्तु रुष्टः सन् विप्राव-मन्त्रा त्वया शिष्येण किम् ? त्वमधीतमाशु त्यजेत्युक्तवान् । स च तदधीतयजुर्गणान् छर्दित्वा त्यक्तवान् । तान् मुनयस्तित्तिरा भूत्वा जगृहुरिति तैत्तिरीया यजुःशाखा जाता । याज्ञवल्क्यस्तु भगवन्तं त्रयीमयमादित्यमाराध्य, ततो वाजिरूपधराद् अयातयामानि शुक्लानि यजूंषि प्राप्तवान् । तत एव काण्व-माध्यन्दिनादिभेदेन पञ्चदशसंख्याका वाजसनेयिशाखा जाताः ।

एवं जैमिनिः सामसंहितां सुमन्तवे, सुन्वते च दत्तवान् । तच्छिष्यः सुकर्मा साम्नां सहस्र-संहितामेदं चकार । अथर्ववित्सुमन्तुः स्वशिष्येभ्योऽथर्वसंहितामूचे । तत्रापि शिष्यप्रशिष्य-परम्परायामनेके शाखाभेदा जाताः । एवं मानवबुद्धिग्राह्यवेदेषु ११३१ शाखाभेदा जाताः ।

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृदाकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ॥
.................................. .... ......
ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् ।

इत्यादि द्वादशस्कन्धे षष्ठाध्याये ३७ श्लोकमारभ्य बहुभिः श्लोकैरुक्तम् । एतदेव संक्षेपेण—

चातुर्होत्रं कर्मशुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद् यज्ञसंतत्यै वेदमेकं चतुर्विधम् ॥
(१।४।१६...२५)
त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ।
एवं चकार भगवान् व्यासः कृपणवत्सलः ॥
स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम् ।

एवमेव—

गुणदोषो दृशि दोषो गुणस्तूभयवर्जितः ।

इति भगवदुक्तिमाकर्ण्य, गुणदोषसापेक्षत्वाद् विधिनिषेधलक्षणस्य वेदस्य कथं तदभावे तत्प्रामाण्यमित्युद्धवेनोक्तम्—

विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।
अवेक्षतेऽरविन्दाक्ष गुणं दोषं च कर्मणाम् ॥

वर्णाश्रमविकल्पश्च प्रतिलोमानुलोमजम् ।
द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥
गुणदोषभिदा दृष्टिमन्तरेण वचस्तव ।
निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ।
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥
गुणदोषभिदा दृष्टिर्निगमात्ते नहि स्वतः ।
निगमेनापवादश्च भिदाया इति ह भ्रमः ॥
( ११।२०।१…५, पृ० ६९ )

तत्प्रश्नस्य समाधानावसरे वेदस्वरूपं तदर्थनिर्णयप्रसङ्गेनोक्तं श्रीभागवते प्राणेन्द्रियमनोमयं शब्दब्रह्मसुदुर्बोधमनन्तपारं गम्भीरसमुद्रवद् दुर्विगाह्यमुक्तम्—

शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥
( ११ स्क०, २१ अ०, ३४ श्लो० )

स्वरूपतोऽर्थतश्च दुर्विज्ञेयं शब्दब्रह्म प्रथमं प्राणमयं पराख्यम्, ततो मनोमयं पश्यन्त्याख्यम्, तत इन्द्रियमयं मध्यमाख्यम् । तस्य वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात् समष्टिप्राणादिमयस्य निर्विशेषस्य च तस्य कालतो देशतश्चापरिच्छेदादानन्त्यं तस्य । अर्थतश्च निगूढार्थत्वान्मतिप्रवेशानर्हत्वाद् दुर्विगाह्यत्वम् "चत्वारि वाक्परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः, गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इति श्रुतेः ।

तदर्थस्तु —वाचः-शब्दब्रह्मणः परिमितानि गणितानि चत्वारि पदानि (पद्यते ज्ञायते परं तत्त्वमेभिरिति ) रूपाणि भवन्ति, तानि चत्वार्यपि ये मनीषिणोऽन्तर्दृष्टयस्ते विदुः, नान्ये । यतो गुहायां देहमध्ये त्रीणि निहितानि नेङ्गयन्ति, न प्रकाशयन्ति; स्वं रूपं केवलं वाचस्तुरीयं भागं वैखरीरूपं स्थानप्रयत्नाभ्यां स्पष्टं मनुष्या वदन्ति । वदन्त्येव, न तत्त्वतो जानन्ति ।

मयान्तर्यामिणाऽनन्तशक्तिना भूम्नोपबृंहितं तच्छब्दब्रह्म सर्वप्राणिषु घोषरूपेण बहिः प्रकटयति; विसेषूर्णातन्तुवल्लक्ष्यते मनीषिभिः । यथोर्णनाभिः स्वमुखाद् ऊर्णातन्तुमुद्वमते, तथैव प्राणोपाधिर्हिरण्यगर्भः प्रभुस्तत एव छन्दोमयो वेदमूर्तिः स्वतस्त्वमृतमयो घोषवान् नादोपादानवान् स्पर्शादिवर्णसङ्कल्पवता मनसा हृदयाकाशाद् बृहती वैखरी वाग्रूपा बहुमार्गा

सहस्रपदवीम् ओङ्कारात् सूक्ष्मरूपाद् व्यञ्जितस्पर्शस्वरोष्मान्तःस्थविभूषितां विचित्रभाषाविततां चतुरुत्तरोत्तरच्छन्दोभिरुपलक्षितामनन्तपारां वाचं सृजति, स्वयमेव चोपसंहरति। चतुर्विंशत्यक्षरा गायत्री, ततश्चतुरक्षरवृद्ध्योष्णिक्, ततश्चतुरक्षरवृद्ध्याऽनुष्टुप्, ततो बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगत्यतिविराड्रूपाणि छन्दांसि। यथा पूर्वोक्तरीत्या स्वरूपतो दुर्ज्ञेयं ब्रह्म, तथैवार्थतोऽपि। कर्मकाण्डे विधिवाक्यैः किं विधत्ते, देवताकाण्डे मन्त्रवाक्यैः किमाचष्टे, प्रकाशयति ज्ञानकाण्डे च किमनूद्य विकल्पयेन्निषेधार्थम् इत्यस्य हृदयं मत्तो भगवतोऽन्यो न वेद, कृपया स्वयमेव तद्वर्णयति। मामेव यज्ञरूपं विधत्ते, देवतारूपं मामेव प्रकाशयति। यच्च प्रपञ्चजातमनूद्य विकल्प्य निराक्रियते, तदप्यहमेव; न मत्तः पृथक्। शब्दो वेदो मां परमार्थरूपमाश्रित्य भिदां मायामात्रनित्यमनूद्य 'नेह नानास्ति किञ्चन' इति प्रतिषिध्य, प्रसीदति, निवृत्तव्यापारो भवति। यथाङ्कुरे यो रसः, स एव तद्विस्तारभूतनानाकाण्डशाखास्वपि, तथैव प्रणवस्य योऽर्थः परमेशः स एव। तद्विस्तारभूतानां सर्वकाण्डशाखानामपि संगच्छते, नान्यः। तदुक्तम्—

संविधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम्।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम्॥
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति।
(११।२१।४२)

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः।
वेदो नारायणः साक्षात् स्वयंभूरिति शुश्रुम॥
(६।१।४०)

इत्यत्र "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः" इत्यादिश्रुत्यनुसारेण नारायणोद्भवत्वाद् वेदानां नारायणस्वरूपत्वमुक्तम्। यतः साक्षादपरोक्षाद् ब्रह्मेति श्रुत्यनुसारेणावेद्यत्वे सत्यपरोक्षत्वं स्वप्रकाशत्वमिति लक्षणलक्षितस्य स्वप्रकाशब्रह्मण उपाध्याश्रयेण स्वस्य स्वमेव प्रकाश इत्यपि लक्षणं भवति, निर्विशेषब्रह्मस्वरूपो नारायणः। अज्ञानावरणापनयेन प्रकाश्यो भवति शब्दब्रह्मात्मकवेदरूपेणाविर्भूतो नारायणः, तदज्ञानापनोदकवृत्तिजननेन तत्प्रकाशको भवति। पूर्वोक्तरीत्या यज्ञदेवतादिरूपेणाभिव्यक्तस्य ब्रह्मणोऽपि। वेदानां ब्रह्मण्येव पर्य्यवसानम्।

श्रीभागवते एकादशे तृतीयाध्याये कर्मयोगप्रसङ्गे आविर्होत्रेणोक्तम्—

कर्माकर्मविकर्मेति वेदवादो न लौकिकः।
वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः॥

वेदविहितं कर्म, तद्विपरीतं वेदनिषिद्धमकर्म, विहिताकरणं विकर्म, एतत् त्रयं वेदवादो वेदैकसमधिगम्यम्, न लौकिकम्। निःश्वासन्यायेन वेदस्य चेश्वरोद्भूतत्वेनेश्वरात्मत्वादपौरुषे-

यत्वात् तत्र सूरयोऽपि मुह्यन्ति । सच्चिदानन्दतनुश्रादेवाभिधेयात्मकप्रपञ्चोपादिनीशक्त्यवच्छिन्न-सदानन्दात्मकस्याभिधेयजातरूपेणाविर्भावः । अभिधानात्मकप्रपञ्चोत्पादनानुकूलशक्त्यवच्छिन्नस्य संविदानन्दस्य शब्दब्रह्मात्मनाऽविर्भावः, तत एव शब्दस्य प्रकाशकत्वेन विषयित्वम् अर्थस्य तु विषयत्वम् । तथा च संविदानन्दमयस्य शब्दस्य सच्चिदानन्दस्य ब्रह्मोद्भवत्वादीश्वरात्मकत्वं श्लिष्यते । निःश्वासस्य स्वाभाविकत्वाद् बुद्धिप्रयत्नानपेक्षत्ववद्वेदस्यापि बुद्धिप्रयत्नानपेक्षत्वेनाकृत्रिमत्वमपौरुषेयत्वञ्च निगदव्याख्यातम् । तथात्वेन पुरुषाश्रितभ्रमप्रमादादिदोषासंस्पृष्टत्वेन स्वतः प्रामाण्यमेव । पुंवाक्ये वक्तुरभिप्रायतोऽर्थज्ञानं सुकरम् । अपौरुषेये तु केवलं वाक्यपौर्वापर्य्येणैव तात्पर्य्यावधारणम् । तच्च दुष्करम्, अतस्तत्र कर्मादौ विद्वांसोऽपि मुह्यन्ति, किमुतान्ये ।

परोक्षवादो वेदोऽयम् । यत्रान्यथास्थितोऽर्थः संगोपयितुमन्यथाकृत्वोच्यते, स परोक्षवादः । यथा च तं वा एत चतुर्हुतं सन्तं चतुर्होतेत्याचक्षते । परोक्षेण परोक्षप्रिया इव हि देवाः, यथा वा इदन्द्रं सन्तमेनमिन्द्रमित्याचक्षते, तथैव वेदः कर्ममोक्षायैव कर्माणि विधत्ते ।

ननु स्वर्गादिफलप्राप्त्यर्थमेव कर्मणां विधानं दृश्यते, न कर्म मोक्षार्थमिति तन्न, रोगनिवृत्तिप्रयोजकनिम्बगुडूचीपानार्थं खण्डलड्डुकप्रलोभनस्येव पाशविककामकर्मलक्षणमृत्युतरणार्थं स्वर्गादिप्रलोभनस्य बोधनेन कर्मनिवृत्तावेव श्रुतेस्तात्पर्य्यात् ।

अयमभिप्रायः—यथा माताऽगदमौषधं पाययन्ती खण्डलड्डुकादिभिः प्रलोभयन्ती पाययति ददाति च तानि, अन्यथा पुनस्तत्राप्रवृत्तेः । नैतावताऽगदपानस्य लड्डुकप्राप्तिः फलम् । तथैव वेदोऽपि स्वर्गादिफलैः प्रलोभयन् कर्ममोक्षायैव कर्माणि विधत्ते, फलञ्चापि लभ्यते, तथापि न तत्र मुख्यं तात्पर्य्यम् ।

परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥

ननु कर्ममोक्षश्चेत् पुरुषार्थः प्रथममेव कर्मत्यागो युक्त इति तत्राह—

नाचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥

अजितेन्द्रियोऽज्ञः स्वयं यदि कर्म नाचरेत्, तदा विकर्मणा कर्मानाचरणलक्षणेनाधर्मेण मृत्योरनन्तरं मृत्युमेव प्राप्नोति, "मृत्वा पुनर्मृत्युमापद्यन्ते अद्यमाना स्वकर्मभिः" इति श्रुतेः । विहितकर्मानाचरणेन पाशविककामकर्मलक्षणमृत्योरतिक्रमणासंभवात्, मृत्योर्विपथतानतिक्रमणात् । तस्माद् वेदोक्तमेव न प्रतिषिद्धम्, भगवदर्पणबुद्ध्या कर्म निःसङ्गं कुर्वाणो

नैष्कर्म्यसिद्धिं सर्वेन्द्रियमनोबुद्धिनिर्विचेष्टतालक्षणां तत्फलभूतां निर्विकल्पब्रह्मात्मसाक्षात्कार-रूपां च लभते। स्वर्गादिफलश्रुतिस्तु कर्मणि रुच्युत्पादनार्थोऽगदपाने खण्डलड्डुकादिवदेवेति मन्तव्यम्। एवं कर्माभिरुच्या यदा सम्यग् वेदार्थं विचारयति, तदा "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणः" इत्यनात्मज्ञस्य कृपणतां ज्ञात्वा "तमेतमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्य्येण तपसा यज्ञेनानाशकेन" ब्रह्मचर्यतपोयज्ञानशनानामिष्यमाणज्ञानशेषतां विविदिषाङ्गतां वाऽवधार्य्य, भगवदाराधनबुद्धया निष्कामेषु कर्मसु प्रवर्तते। 'स्वर्गकामो यजेत' इत्यादिभिः कामितस्यैव स्वर्गादेः फलत्वेन श्रवणादकामितोऽसौ न भविष्यतीति नैष्कर्म्यसिद्धया परमपुरुषार्थमोक्षलक्षणो वा मुख्य एव पुरुषार्थः सम्पद्यते।

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे।
नैष्कर्म्यसिद्धिं लभते रोचनार्था फलश्रुतिः॥

एवमेव—

ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे॥

(१।८७।१०, पृ० २३८)

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम्॥
यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः॥

(१२।१३।८७।१०, पृ० २३९)

क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः।

(१४ (१) ८७।१०, पृ० २४०)

"इति नृगतिं विविच्य, कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः" (२०।८७, पृ० २४२)।

भ्रमयति भारती न उरुवृत्तिभिरुक्थजडान्।

(३६।८७, पृ० २४८)

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।
शाब्दे परे च निष्णातं ब्रह्मण्युपसमाश्रयम्॥

(२१।३।११, पृ० ११)

इत्यादिभिश्च वचनशतैः श्रीमद्भागवते धर्मब्रह्मबोधनाय वेदानामेव मुख्यं प्रामाण्यमुक्तम्।

एष (अयम्) तु परमो धर्मो यद्योगेनात्मदर्शनम्।

इति याज्ञवल्क्यरीत्या आत्मदर्शनं परमो धर्मः।

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्॥

विशेषतः श्रीमद्भागवते परमेश्वरोपासनलक्षणः परमो धर्मो निरूप्यते, प्रकर्षेणोज्झितं कैतवं फलाभिसंधानलक्षणं कपटं यस्मिन् सः। प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः।

अन्येषु धर्मेषूपनीतानां त्रैवर्णिकानां कामिनामधिकारः, अत्र तु निर्मत्सराणां सतां भूतानुकम्पिनामधिकारः। परोत्कर्षासहनं मत्सरः, तद्रहितानां परमहंसानां विशेषतोऽधिकारः। एतेन कर्मकाण्डविषयेभ्यः शास्त्रेभ्योऽस्य वैशिष्ट्यं सूचितम्। ज्ञानशास्त्रेभ्योऽप्यस्य वैशिष्ट्यम्, यतोऽत्र वास्तवं परमार्थभूतं वस्तु वेद्यम्। न वैशेषिकादीनामिव द्रव्यगुणादिरूपम्, न केवलं परमार्थवस्त्वेव, किन्तु वस्तुनोंऽशो जीवः, वस्तुनः शक्तिर्माया, वस्तुनः कार्यं जगच्च, तत्सर्वं वस्त्वेव; तद्व्यतिरिक्तमवेद्यम्, अयत्नेनैव ज्ञातुं शक्यम्। तच्च शिवदम्, परमसुखदम्, आध्यात्मिकादितापत्रयोन्मूलनञ्च। महामुनिना व्यासदेवेन कृतत्वादस्य वैशिष्ट्यम्। अन्यैः शास्त्रैस्तदुक्तसाधनैश्चेश्वरः सद्यो हृदि अवरुद्ध्यते, स्थिरीक्रियते किम्? विलम्बेन कथञ्चिदेव तत्संभवः। अत्र तु शुश्रूषुभिरेव तत्क्षणादेव भगवान् हृदि अवरुद्ध्यते, वशीकृतो भवति। तथापि श्रवणेच्छापुण्यैर्विनोत्पद्यते, तदर्थमेव काण्डत्रयार्थस्य यथावत्प्रतिपादनादवश्यमिदं भागवतशास्त्रमादरणीयम्।

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययात्मा संप्रसीदति॥

इति रीत्या निष्कामकर्मयोगस्य भगवदाराधनबुद्ध्यानुष्ठितस्याहैतुक्या अप्रतिहतायाश्च भक्तेः प्रयोजकत्वात् परत्वं युक्तम्। "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इत्यादि-श्रीमुखोक्तिः। कैश्चित्तु—

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः।
भक्तियोगो भगवति तन्नामग्रहणादिभिः॥

इति रीत्या श्रवणकीर्तनादिभागवतधर्मस्यैव परधर्मत्वम्। पूर्वत्र व्याख्याने न हेतुः फलानुसन्धानं यस्यां साऽहैतुकी; द्वितीयव्याख्यानेऽहेतुः कारणं विद्यते यस्यां साऽहैतुकी।

ननु यतो भक्तिरिति पञ्चम्यर्थप्रत्ययेन स्पष्टं धर्मस्य भक्तिहेतुत्वमिति कुतो भक्तेरहैतुकत्ववादः संगच्छते इति चेन्न; "रसो वै सः" इति रीत्या भगवद्धर्माद् द्रुतस्यान्तःकरणस्य भगवदाकारतापत्तिरूपाया निरुपमसुखसंविद्रूपाया भक्ते रसरूपत्वेन स्वतःसिद्धत्वेन कारणस्यासंभवः, तदुक्तिकत्वात्। न च नामस्मरणादीनामेव तद्धेतुत्वमिति वाच्यम्, तेषामपि भक्तिरूपत्वे स्वात्माश्रयत्वात्। "आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया" इत्याद्युक्तश्रद्धादीनामपि भक्तिरूपत्वेन न भक्तिहेतुत्वं संगच्छते। कथं तर्हि हेत्वर्थं पञ्चम्या उपपत्तिरिति वाच्यम्, आमाम्रस्य पक्वाम्रहेतुत्ववदपक्वभक्तेरेव परिपक्वभक्तिहेतुत्वेनौपचारिककार्य्यकारणभावमादाय, तदुपपत्तेः। तथा च 'ध्रियतेऽधःपतनात् पुरुषोऽनेनेति धर्मः', वर्णाश्रमानुसारी श्रौतस्मार्त्तलक्षणो धर्मो विवक्षितः। धरतीति धरो भगवान्, स मीयतेऽनेनेति वा धर्मः, तत्त्वज्ञानलक्षणो धर्मो भवति। दधाति कर्त्तारं रमयति, मिनुते, हिनस्ति पापमिति भगवत्प्राप्तिसाधनभूतः कीर्तनादिलक्षणोऽपि धर्मो भवति। देहेन्द्रियाणां भगवदधिष्ठितत्वं तन्नियम्यत्वञ्च, तस्यैव कारयितृत्वफलदातृत्वञ्चाविगणय्याहमेवेदं करिष्यामि, "अर्थी समर्थो विद्वानहमेव स्वतन्त्रः" इति बुद्धया कितवेन क्रियमाणं कर्म कैतवमेव भवति। मनस्यन्यदभिसन्धायान्यदभिवदन् कितव उच्यते। "तत्कर्म यन्न बन्धाय, सा विद्या या विमुक्तये" इति विष्णुपुराणवचनात् कैतवरूपफलानुसंधानरहितस्यैव कर्मणो मुक्तिहेतुत्वमुक्तम्।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्धयात्मना वानुसृतस्वभावात्।
करोति यद्यत् सकलं परस्मै नारायणायेति समर्पयेत्तत्॥

भागवते इत्यादिरीत्या निष्कामभावेनानुष्ठितानामपि भगवत्यर्पणेनैव तस्य परमत्वं संपद्यते।

नृणामयं परो धर्मः सर्वेषां समुदाहृतः।
त्रिंशल्लक्षणवान् साक्षात् सर्वात्मा येन तुष्यति॥

इति सप्तमस्कन्धीयरीत्या मानवमात्रधर्मोऽपि परो धर्मो भवति भक्तिज्ञानाहिंसा-दयादीनां तत्र सन्निवेशात् ।

प्रकारान्तरेण धर्मो द्विविधः—साध्यः सिद्धश्च । प्रथमोऽग्निहोत्रादिः, द्वितीयस्तु परमेश्वर एव ।

तत्र ब्रह्मणः सिद्धधर्मरूपत्वम्—"रामो विग्रहवान् धर्मः" वा० रामायणे ।

ये च वेदविदो विप्रा ये चात्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ।।

इति महाभारते । 'अमृतस्यैष सेतुः" इति उपनिषद् इत्यादिवचनैरलौकिकत्वे सति श्रेयःसाधनत्वावगमात् । यद्वा धर्मो ज्ञानं साधनम्, भगवदाविर्भावः साध्यः, तदनु तत्र प्रवेशः फलम् । श्रीमद्भागवतात् सर्वं सिद्धयति । यज्ञात्मको धर्मः आचारोऽपि धर्मः, सत्यादयोऽपि धर्माः, तपःप्रभृतयः श्रवणादयश्च धर्मा एव ।

—:०:—

# श्रीमद्भागवते जगत्कारणमीमांसा

## तृतीयं प्रवचनम्

पूज्यपादा विद्वन्मूर्धन्या अनन्तश्रीविभूषितस्वामिहरिहरानन्दसरस्वती-

(श्रीकरपात्र) महोदयाः

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

(श्रीमद्भा० म० पु० १।१।१)

श्रीमद्भागवतस्य मङ्गलात्मकेन जन्माद्यस्य यत इति श्लोकेन सर्वेश्वरस्य भगवत एव जगत्कारणत्वमुक्तम्। तत्र पूर्वं तस्य तटस्थलक्षणमुक्तम् 'जन्माद्यस्य' इति। अस्य विश्वस्य जन्म-स्थितिभङ्गा यतो भवन्ति, तं धीमहि। एतेन 'जन्माद्यस्य यतः' (ब्र० सू० १।१।२) इति सूत्रार्थो विवृतो वेदितव्यः। कालस्य जगज्जन्मादिकारणत्वं कैश्चिदास्थीयत इति तन्निराकरणायाह—'अन्वयादितरतश्च' अन्वयव्यतिरेकाभ्याम्। यथा घटे मृदन्वयः, मृदि घटव्यतिरेक इति मृदो घटोपादनत्वं दृष्टम्, तथैव सतः सर्वत्राकाशादिष्वनुवृत्तेः सति च तेषां व्यावृत्तेस्तस्यैवाकाशादिप्रपञ्चोपादानत्वं सिद्ध्यति। अत्रान्वयशब्देनानुवृत्तिः, व्यतिरेकपदेन च व्यावृत्तिर्बोध्यते। चकाराद् निमित्तत्वञ्च तस्यैव बोधितम्। कालस्तु तस्यैव प्रभावरूप इति न

पृथक् कारणत्वमर्हति। अथवा अन्वयात् प्रलये विश्वस्य परमेश्वरानुप्रवेशादितरतश्च ततो व्यतिरेकाद्विभागात् पृथिव्या जल इव, जलस्य तेजसीव योऽधिष्ठानकारणं तं धीम यद्वा अन्वयात् कारणत्वेन यत्कर्तृकानुप्रवेशाद् विश्वस्य जन्म, कर्मफलदातृत्वेन यत्कर्तृ प्रवेशात् स्थितिः, संहारकारकत्वेन रुद्ररूपेण यत्कर्तृकानुप्रवेशाद् भङ्गश्च यतो भवति, धीमहि। कारणस्य कार्य्यसमन्वितत्वमेव कार्य्यानुप्रवेशः। इतरतश्च स्रष्टव्य-परिप संहार्य्यविश्वतः स्वरूपशक्त्याभिन्नात् चकाराद् मायाशक्त्या तदभिन्नाच्च।

ननु परमेश्वरस्योपादानत्वे विकारित्वापत्त्या निमित्तत्वमेवास्तु, प्रकृतेरेव तूपादान मिति चेत्, तत्राह—अर्थेष्वभिज्ञः "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः।" (मु० उ० १।१ "स ऐक्षत लोकान्नु सृजै" (ऐ० उ० १।१।१) इति, "तदैक्षत बहु स्यां प्रजा (छा० उ० ६।२।३) इत्यादिश्रुतिभिश्चेतनस्यैव जगत्कारणत्वोक्त्या तस्यैवोभयविधकारणत्व पत्तेः। प्रकृतेस्तच्छक्तित्वाच्छक्तिशक्तिमतोरभेदात् प्रकृतिद्वारकमेव तस्योपादानत्वम्, स्व तु प्रकृत्यतीतत्वान्निर्विकारत्वम्, यथोक्तवान् भगवानेव—

"प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम्॥"

तथा च सर्वज्ञः परमेश्वर एव स्वातन्त्र्येण जगत्कारणम्; न जडा प्रकृतिः, सृ रीक्षणपूर्वकत्वश्रवणात्। तदप्याह—अर्थेष्वभिज्ञः सृज्यासृज्यवस्तुतन्निमित्तकर्मादिष्टेषु अ यस्तं धीमहि। 'ईक्षतेर्नाशब्दम्" (ब्र० सू० १।१।५) इति न्यायात्। अशब्दम् = शब्दप्रमाण स्वतन्त्रम् = प्रधानं न कारणम्, ईक्षतेः, जगत्कारणस्येक्षितृत्वश्रवणविरोधादिति सूत्रार्थः।

ननु तदानीं महदाद्यनुत्पत्त्येक्षणसाधनाभावात्, कथं ब्रह्मणीक्षितृत्वमिति चे तत्राह—'स्वराट्' स्वेनैव राजत इति स्वराट्। अवेद्यत्वे सत्यपरोक्षत्वेन तस्य स्वप्रका 'यत्साक्षादपरोक्षाद् ब्रह्म' (बृ० उ० ३।४।१) इति श्रुतेः। "स्वाभाविकी ज्ञानबलक्रिया च" (श्वे० उ० ६।८) इति श्रुतिरपि तस्य साधनानपेक्षज्ञानबलक्रियावत्त्वं सूचयति।

ननु "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्" (वा० सं० १३।४) इति श्रुत्या चतुर्मुखस्य ब्रह्मणः स्वातन्त्र्यैश्वर्यवत्त्वश्रवणात् तस्य वास्तु कारणत्वं ध्येयत्वं तत्राह—"तेने ब्रह्म हृदा य आदिकवये" अर्थादादिकवये चतुर्मुखाय ब्रह्मणेऽपि स्वतत्त्वं वेदं वा हृदा स्वसङ्कल्पेनैव तेने ज्ञापितवान्।

नु स्वयमेव स कथं न ज्ञातवानिति तत्राह—'यत्र सूरयोऽपि मुह्यन्ति' सूरीणामपि
मानोहाद् ब्रह्मणोऽपि स्वातन्त्र्येण तज्ज्ञाने न शक्तिः। एतेन 'नेतरोऽनुपपत्तेः"
सू० १।१।१६ ) इति सूत्रार्थो विवृतः।

यद्यपि प्रपञ्चोत्पादकस्य ब्रह्मणः प्रपञ्चपालकस्य विष्णोरिव परमेश्वरत्वमेव। अत
शिवविरञ्चिविष्णूनां सर्वत्र पुराणेष्वभेदवर्णनं संगच्छते, तथापि "सोऽबिभेत्" ( बृ० उ०
२), "स एकाकी न रेमे" इत्यादिश्रुतिभिर्हिरण्यगर्भस्य भयरत्यादिजीवधर्मवत्त्व-
ेन हिरण्यगर्भोपासकस्य हैरण्यगर्भपदप्राप्तिश्रवणाच्च चतुर्मुखे जीवत्वमपि प्रत्येतव्यम्।
ब्रह्माण्डोत्पादयितुश्चतुर्मुखस्यान्तर्यामिरूपेण परमेश्वरत्वेऽपि ब्रह्माण्डाभिमानित्वेन जीवत्वं
च्छते। अतः—

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

ा "परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति परान्तकाले ब्रह्मलोकगतजीवैः सार्द्धं
य मुक्तिरप्युक्ता।

ननु धीमहीति ध्यानविषयत्वेन त्रिगुणस्रष्टृत्वेन च तस्य साकारत्वेनानित्य-
ादिकं प्रसज्येतेति चेत्, तत्राह—'तेजोवारिमृदां यथा विनिमयः" इति। यथा
जसि वारीदमिति, वारिणि च स्थलमिदमिति, मृदि काचादौ च वारीदमिति बुद्धिः, वारिणि
काचबुद्धिः प्रसिद्धा, तथैव पूर्णे सच्चिदानन्दघने ब्रह्मणि, त्रिगुणसर्गोऽयमिति बुद्धि-
पि मृषैव।

एतेन "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० उ० २।१।१ ) इति ब्रह्मणः स्वरूपलक्षणमप्युक्तं
वति, यत्र यस्मिन् ब्रह्मणि त्रिसर्गः = त्रयाणां प्रकृतिगुणानां तमोरजःसत्त्वानां सर्गाः, भूतेन्द्रिय-
वतारूपो अमृषा सत्यः। यत्सत्यतमा मिथ्यासर्गोऽपि सत्यवत्प्रतीयते, तं परं सत्यं
ीमहि।

तेजोवारिमृदां यथाविनिमयो व्यत्ययोऽन्योऽन्यस्मिन्नन्योन्यावभासलक्षणो व्यत्यासो
यथाधिष्ठानसत्तया सत्यवदाभाति, तथैव त्रिसर्गोऽपि ज्ञेयः। यद्वा भगवत एव परमार्थ-
सत्यत्वबोधनाय तदितरस्य मिथ्यात्वं बोध्यते। मृषेति मृषैवायं त्रिसर्गः, न वस्तुतः
प्रश्निति।

न च "मृत्तिकेत्येव सत्यम्" ( छा० उ० ६।१।१ ) इति श्रुत्या मृत्तिकादीनां सत्यत्वं ज्ञायत इति वाच्यम् ; कार्यमात्रस्य मिथ्यात्वं कारणस्य च तदपेक्षया सत्यत्वमित्यापेक्षिक-सत्यत्वप्रतिपादने श्रुतितात्पर्य्यात् । अनापेक्षिकसत्यत्वं तु परमकारणस्य ब्रह्मण एवेति ज्ञातव्यम् ।

ननु तथापि त्रिसर्गाश्रयत्वेनोपाधिसंसर्गोऽस्त्येवेति चेत्, तत्राप्याह—"धाम्ना स्वेन" इति स्वेनैव धाम्ना सर्वभासकेन महसा निरस्तं कुहकं मायालक्षणं यस्मिस्तं नित्यनिरस्तमाय-मित्यर्थः । यथा मरीचिकोदकेन न मरुभूमिरार्द्रा भवति, तथैव कल्पितेन त्रिसर्गेण नाधिष्ठानं संश्लिष्यते——

नित्यबोधपरिपीडितं जगद्विभ्रमं नुदति वाक्यजा मतिः ।
वासुदेवनिहतं धनञ्जयो हन्ति कौरवकुलं यथा ॥

इति संक्षेपशारीरकोक्तेः ।

एवं कार्य्येष्वाकाशादिष्वन्वयादकार्येभ्यः खपुष्पादिभ्यो व्यतिरेकाच्च ब्रह्मण एव विकारणत्वम्, न परमाणु-प्रकृति-शून्यादीनाम् । अनुवृत्तत्वाच्च 'ब्रह्मणः' कारणत्वम्, व्यावृत्तत्वाच्च परस्परं विश्वं कार्य्यमेव, नाकार्य्यं सावयवत्वात् । समवेतद्रव्यत्वमेव सावयवत्वमवान्तरमहत्त्वाच्च कार्य्यत्वं विश्वस्य शक्त्यावगमम् । अत एव सावयवत्वा-दन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तद्यतो भवति, तद् ब्रह्म धीमहि ।

पद्येऽस्मिन् हृदा-मनसा ब्रह्मणो वेदप्रदानेन बुद्धिवृत्तिप्रवर्त्तकत्वेन धीमहीति गायत्र्यर्थ-प्रदर्शकत्वेन गायत्र्याख्यब्रह्मविद्यारूपमेवैतत्पुराणं बोद्धव्यम् ।

वेदान्तशास्त्रेऽनेकाः प्रक्रियाः सन्ति । तत्राऽविद्याप्रतिबिम्बो जीवः, माया-प्रतिबिम्बश्चेश्वरः । उपाधिमायायास्त्रैगुण्यात् तद्गुणविशिष्टमायाप्रतिबिम्बभेदेन ब्रह्म-विष्णु-शिवरूपो भवति । बिम्बभूतस्तु परमेश्वरो निरुपाधिकं ब्रह्मैव । स एव रामायणे, भारते, वेदे, पुराणादौ च राम-कृष्ण-विष्णु-शिवादिशब्देन व्यपदिश्यते ।

वेदे रामायणे पुराणे भारते भरतर्षभ ।
आदौ चान्ते च मध्ये च हरिः सर्वत्र गीयते ॥
( हरिवंशोक्तभारतश्रवणविध्यध्याये श्लो० ९३ )

इति स्वांशमायाप्रतिबिम्बितेश्वरधर्मैः सृष्ट्यादिकर्तृत्वादिभिरपि स व्यपदिश्यते ।

ऐवमविद्यामाययोरैक्याभ्युपगमेनाविद्याप्रतिविम्बस्य जीवत्वं निरुपाधिकब्रह्म-चैतन्यस्य चेश्वरत्वम्। स एव सृष्ट्याद्यारोपितधर्मेण ब्रह्मविष्ण्वादिपदव्यपदेशभागपि भवति विम्बत्वप्रतिबिम्बत्वानाक्रान्तं निर्धर्मकं ब्रह्म। प्रतिविम्बस्य मिथ्यात्वाभ्युपगम आभासवादः, तत्सत्यत्वाभ्युपगमः प्रतिबिम्बवादः। अवच्छेदवादे मायान्तःकरणाद्य-वच्छिन्नानां जीवेश्वरत्वादिकमनवच्छिन्नस्य निर्धर्मकब्रह्मरूपत्वम्। बिम्बभूतोऽनवच्छिन्न-चिद्रूपो वा निरुपाधिकः शुद्धपरमानन्दघनो भगवानेव श्रीभागवतादिसकलसच्छास्त्र-महातात्पर्य्यविषय इति बोद्धव्यम्।

मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्।
सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः॥ इति

ननु यद्यपि वारिणि समुद्रजले दूरत्वदोषेण नीलशिलाबुद्धिवत्, कामलादिदोषेण शङ्खे पीतस्वर्णखण्डबुद्धिवद् दुर्योधनस्य पाण्डवसदसि जले स्थलबुद्धिवदन्धकारस्थ-रत्नरूपायां मृदि खदिराङ्गारबुद्धिवद् ब्रह्मणि त्रिसर्गबुद्धावङ्गीकृतायां कुतोऽज्ञानाश्रयस्यै-श्वर्य्ययोग इति चेत्, न; तत्त्वान्यत्वानिर्वाच्याज्ञानस्य स्वाश्रयत्वस्वकार्य्याश्रयत्वानाश्रयत्वा-नुपपत्त्या ब्रह्मातिरिक्ताश्रयाभावात्, तदाश्रयत्वेऽपि परमार्थसत्ताकत्वाभावेन मिथ्यात्वोपपत्तौ तददोषात्। तदुक्तं संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
नाश्रयो भवति नापि गोचरः पूर्वसिद्धतमसो हि पश्चिमः॥ इति।

अन्यरीत्या तु—अनावृतसंविद्रूपस्य परमेश्वरस्याज्ञानाश्रयत्वाभावेऽपि अज्ञान-विषयत्वमात्रेण भ्रमाधिष्ठानतैव ब्रह्मकारणता, न तावतैश्वर्य्यहानिः। "मूढोऽहं त्वां कथं जाने मोहितस्तव मायया" इति अज्ञानविषयत्वस्यैश्वर्य्याघातकत्वात्। तथा च जीवाश्रया-विद्याविषयत्वेन ब्रह्मणः शुद्धस्यैव कारणत्वादिकम्, "जीवाश्रया ब्रह्मपदा अविद्या तत्त्व-विन्मता" इति वाचस्पत्युक्तेः।

ननु—अन्वयादितरतश्चेत्यन्वयव्यतिरेकावुक्तौ। न च ब्रह्मणि तत्संभवः, अत्यन्ता-भावाप्रतियोगित्वेनाकाशस्येवानुपपत्तेः। ब्रह्मणः सत्त्वे जगत्सत्त्वमित्यन्वयसत्त्वेऽपि वह्न्यभावे धूमाभावस्येव ब्रह्माभावे जगदभाव इति व्यतिरेकानुपपत्तेरिति चेन्न, खपुष्पा-द्यभावे तदभाव इति खपुष्पं सदिति व्यवहारादर्शनात् तदुपपत्तेः। केवलस्य सतो व्यति-रेकाभावेऽपि मृदादिविशिष्टसत्ताव्यतिरेकस्यालीके खपुष्पादौ दर्शनात्। सावयवत्वसत्त्वे

घटादौ कार्य्यत्वस्य सावयवत्वाभावेनाकाशादौ कार्य्यत्वाभावस्य च दर्शनेनान्वयव्यतिरेकाभ्यां जगतो जन्मादि यतस्तद्ब्रह्मेति वान्वयव्यतिरेकोपपत्तिर्ज्ञातव्या। विश्वं जन्मादिमत् सावयवत्वात्। अन्वये घटादिर्व्यतिरेक आत्मादिर्दृष्टान्तः।

भगवान् ब्रह्म कात्स्न्येन त्रिरन्वीक्ष्य मनीषया।
तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेत्॥

(भा० २।२।३४)

इत्यनुसारेण भगवान् प्रजापतिः कूटस्थो ब्रह्म वेदं सम्पूर्णमन्त्रब्राह्मणराशिमेकत्रिंशदुत्तरैकादशशतशाखात्मकं मानवबुद्धिग्राह्यम् "अनन्ता वै वेदाः" इत्यनुसारेणानन्तमीश्वरानन्तज्ञानानुविद्धं वा कात्स्न्येन सामस्त्येन त्रिरन्वीक्ष्य, सुविचार्य्येदमेव तत्सारमध्यवस्यत् निश्चितवान्। यत् आत्मन्=आत्मनि सर्वप्राणिपरप्रेमास्पदे प्रत्यक्चैतन्याभिन्ने भगवति यतो रतिर्भवेत्, स एव निष्कामकर्मयोगसहितो निरुपाधिकपरप्रेमास्पदभगवदात्मसाक्षात्कारलक्षणो धर्म एव सर्वशास्त्रतात्पर्य्यविषयत्वेनादरणीयः ब्रह्मणा नारदाय चतुःश्लोकात्मकं श्रीमद्भागवतमुपदिश्य—

यथा हरौ भगवति नृणां भक्तिर्भविष्यति।
सर्वात्मन्यखिलाधार इति संकल्प्य वर्णय॥
'त्वमेतद्विपुलीं कुरु' (२।७।५१) (२।७।५२)

इति च भगवद्भक्तिपरमेवोपबृंहणमादिष्टम्। एतेन ब्रह्मात्मैक्यविरोधि द्वैतपरम्, भक्तिविरोधि शुष्काद्वैतपरञ्च व्याख्यानं न भागवतसम्मतमिति मन्तव्यम्। तत एव भगवत्प्रियत्वेन श्रीधरीयव्याख्यानमादृतम्। काश्यां प्रसिद्धं यद्भगवतैव श्रीधरीयं व्याख्यानं प्रमाणितम्। तथाहि किंवदन्ती—

अहं वेद्मि शुको वेत्ति व्यासो वेत्ति न वेत्ति वा।
श्रीधरः सकलं वेत्ति श्रीनृसिंहप्रसादतः॥ इति

वंशीधरीये तु—

व्यासो वेत्ति शुको वेत्ति शेषमैत्रेयनारदाः।
पराशरोद्धवो वायुपुत्रश्चैव वृहस्पतिः॥
एतेषां निखिलाः शिष्याः श्रीमद्भागवतं विदुः।
श्रीधरः सकलं वेत्ति श्रीनृसिंहप्रसादतः॥

निर्विकारब्रह्माद्वैतपर्यवसायिनोप्यस्य शास्त्रस्य भगवद्भक्तिरेव प्राणः। भगवत्स्वरूपञ्च निराकारनिर्गुणवदेव दिव्यगुणाकारमपि तत्र वर्णितमेव। तदेतत् 'तमेकं गोविन्दं सच्चिदानन्दविग्रहम्। वृन्दावनसुरतरुलतातलासीनम्' इति गोपालतापनी। 'अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः।' रामतापनी। 'ऋतं सत्यं परं ब्रह्म पुरुषं नृकेशरिविग्रहम्।' नृसिंहतापनी। निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः' (ध्यानबिन्दूपनिषद्)।

'हिं कृण्वती वसुपत्नी वसूनां' (ऋ० सं० १।१६४।२७) 'यस्मिन् वृक्षे मध्वदः सुपर्णा' (ऋ० सं० १।१६४।२२) इत्यादयो मन्त्रा भागवतोद्धृता ऋग्वेदीया मन्त्राः, 'हिरण्यश्मश्रुर्हिरण्यकेशः' (छा० उ० १।६।६) 'नमो हिरण्यबाहवे' (वा० सं० १६।१७) 'नीलग्रीवाः शितिकण्ठाः' (वा० सं० १६।५६) इत्यादयो मन्त्रा उपनिषदश्च दिव्यगुणविग्रहं भगवन्तं प्रतिपादयन्त्येव। 'तस्यैष आत्मा विवृणुते तनुं स्वाम्' (मु० उ० ३।२।३) श्रीमद्भागवते च—'स्वेच्छामयस्य ननु भूतमयस्य' 'निबन्ध प्राकृतं यथा, 'त्वय्येव नित्यसुखबोधतनावनन्ते' 'शाब्दं ब्रह्म वपुर्दधत्' 'सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः', इत्यादिवचनानि भगवतो दिव्यचिदानन्दमयविग्रहवत्त्वं बोधयन्ति। 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्' (२।१०।२) इति रीत्या दशमस्कन्धप्रतिपाद्यस्याश्रयस्य श्रीकृष्णस्यैव प्रतिपिपादयिषितत्वेन श्रीमद्भागवततात्पर्य्यविषयत्वं सुस्पष्टम्।

अन्येषां रीत्या—पृपालनपूरणयोरिति धातोः परशब्दस्य निष्पत्त्या दिव्यगुणगणपूर्णो भगवानेव परशब्दार्थः। 'तदेतत्प्रेय पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्' (बृ० उ० १।४।८) इति श्रुत्या परमप्रेमविषयो भगवान् नारायण एव। तदुक्तम्—

तदेतत्परमं ब्रह्म वेदवादेषु पठ्यते।
स देवः पुण्डरीकाक्षः स्वयं नारायणः परः॥' इति हरिवंशे।

'ब्रह्मविदाप्नोति परम् (तै० उ० २।१) इति श्रुतेः तं परं धीमहि=ध्यायेम 'जन्माद्यस्य यतः' (१।१।१) इति अस्य प्रत्यक्षस्य जगतो यतो जन्मादि अत्र तद्गुणसंविज्ञानबहुव्रीहिसमाश्रयणात् जन्मस्थितिभङ्गादयो गृह्यन्ते। आदिशब्देन न स्थितिसंहारयोरेव ग्रहणम्, किन्तु स्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा गृह्यन्ते, श्रुतिस्मृत्यनुरोधात्। ननु कुतः परस्य कारणत्वमिति तत्राह—'अन्वयात्' 'यतो वा इमानि भूतानि जायन्ते।' (तै० उ०

३।१ ) 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्त्तते ।' ( श्रीमद्भग० १०।८ ) इत्यादिश्रुतिस्मृत्यादीनां भगवत्यन्वयात्, उपक्रमोपसंहारादितात्पर्य्यलिङ्गात् ।

ननु श्रुत्यादेः पिपीलिकादिलिपिवदप्रमाणत्वात् माणवकदृष्टशार्दूलकल्पेन तेन तन्निश्चयाभावात् । परमाणुपुञ्जस्यैव कारणत्वमिति तत्राह—'इतरतः' प्रत्यक्षागमानुगृहीतात् तर्कात् ब्रह्मण एव कारणत्वनिश्चयात् । 'समुदाय उभयहेतुकेऽपि तदप्राप्तिः' ( ब्र० सू० २।२।१८ ) इति भगवता व्यासेनैतन्निराकरणात् । सूत्रार्थस्तु—

बाह्यार्थवादि—वैभाषिकसौत्रान्तिकरीत्या पृथिव्यप्तेजोवायवश्चत्वारि भूतानि चतुर्विधपरमाणुपुञ्जस्वरूपाणि । भौतिकानि च रूपादिविषयेन्द्रियाणि तथाविधानि । परमाणुसमूहातिरेकेणावयव्यसिद्धेः, पृथिव्यादिसमुदायो बाह्यः । एवमाध्यात्मिकः स्कन्धसमुदायहेतुकः । रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्चस्कन्धाः । सविषयेन्द्रियाणि रूपस्कन्धः । आध्यात्मिकेन्द्रियसम्बन्धाद्रूपादीनामप्याध्यात्मिकत्वम् । अहमित्यालयविज्ञानप्रवाहो विज्ञानस्कन्धः । सुखादिप्रत्ययो वेदनास्कन्धः । गौरश्व इति शब्दादिविशिष्टवस्तुविषयकः सविकल्पप्रत्ययः, संज्ञास्कन्धः । रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः । विज्ञानस्कन्धश्चित्तमात्मेति च गीयते । इतरे स्कन्धाश्चैत्ताः । एतेषां चित्तचैत्तानां स्कन्धानां समुदायः सर्वव्यवहारास्पदमाध्यात्मिकश्च स्कन्धहेतुकः । एवं परमाणुहेतुके बाह्यसमुदाये स्कन्धहेतुके चाध्यात्मिकसमुदाये तदप्राप्तिः समुदायानुपपत्तिः । अचेतनानां परमाणूनां स्कन्धानाञ्च स्वतः समुदायायोगात् स्थिरस्य संयोजयितुश्चेतनस्यानभ्युपगमात्, श्रुत्याद्यनुगृहीततर्काभावात्, केवलस्य तर्कस्याप्रतिष्ठानाच्च ।

यदप्युक्तम्—"नानुपमृद्य प्रादुर्भावात्, मृत्पिण्डबीजाद्युपमर्दादेव घटाङ्कुराद्युत्पत्तिदर्शनात्, विश्वस्याप्यभावरूपशून्यकारणकत्वमेव युक्तम् । 'असदेवेदमग्र आसीत्' ( छा० ३।१९।१ ) इति श्रुतेश्चेति । तन्न । अभावस्य कारणत्वे तस्य सर्वत्र सौलभ्येन कारणान्वेषणप्रयासवैयर्थ्यात् । सर्वत्र सर्वकार्य्यसौलभ्यापत्तेः । यदि बीजादिविशेषिताभावस्य हेतुत्वमिष्यते, तदा नाभावस्य हेतुत्वम्, विशेषण एव कारणत्वपर्य्यवसानात् । कार्य्येषु मृद्बीजावयवानामन्वयात् केवलस्याभावस्य, शून्यस्य वा कार्य्येषु इतरतः अन्वयस्य व्यतिरेकात् अभावान्नाभावस्य कारणत्वमित्यर्थः ।

यद्वा अन्वयात् अन्वयानुमानात् इतरतः व्यतिरेकानुमानाच्च परेशसिद्धिर्ज्ञातव्या । चेतनात्पित्रादेः पुत्राद्युत्पत्तिदर्शनात्, चेतनाचेतनात्मकस्य सर्वविश्वस्य परमचेतनाद्भगवत

...त्तिः सिध्यति। प्रधानादेरचेतनत्वेन बुद्धिपूर्वककर्तृत्वानुपपत्तेरस्वातन्त्र्याच्च क्षित्यादे-
...तेतनकर्तृकत्वं पारिशेष्याच्च सिद्ध्यति।

ननु वाय्वादेरचेतनस्यापि प्रवृत्तिदर्शनादचेतनप्रधान-परमाण्वादिभ्यः कुतो न विश्वो-
...त्पत्तिरिति चेत्, तत्राह—'अर्थेष्वभिज्ञः' पटादिष्वभिज्ञः कुविन्दादिः कर्त्ता दृष्टः प्रधानादेर्ज-
...त्वेन ज्ञानवत्त्वानुपपत्त्या न कर्तृत्वसंभवः. भगवतस्तु सार्वज्ञं श्रुतिस्मृत्यादिसिद्धमिति स एव
जगत्कारणम्।

ननु जीवानां समष्टिजीवस्य हिरण्यगर्भस्य वापि कर्तृत्वं वक्तुं शक्यम्, तपोयोगादिभि-
स्तेषां विशिष्टज्ञानक्रियाशक्तिमत्त्वादिति चेत्, तत्राह—'स्वराट्' यः स्वेनैव राजते=दीप्यते, स
स्वराट्, अन्यानधीनस्वतो ज्ञानक्रियादिशक्तिसम्पन्नः। स एवाचिन्त्यरचनारूपस्य जगतः
स्रष्टा संभवति, नान्याधीनसातिशयज्ञानादिः। हिरण्यगर्भादयस्तु परेशानुग्रहेणैव ज्ञानादि-
मन्तः। नन्वस्तु हिरण्यगर्भस्य स्वतो ज्ञानवत्त्वमिति तत्राह—'तेने ब्रह्म हृदा य आदिकवये'
य आदिकवये=ब्रह्मणेऽपि हृदा=मनसा ब्रह्म=वेदं तेने=विस्तृतवान्। "यो वै ब्रह्माणं विदधाति
पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।" (श्वे० उ० ६।१८) इति श्रुतेः। ननु ब्रह्मणः स्वत एव
वेदभानमप्यस्त्विति चेत्, तत्राह—'मुह्यन्ति यत्सूरयः' यत्र वेदस्वरूपं तदर्थविषये
सूरयः=ब्रह्मादयोऽपि मुह्यन्ति=मोहमाप्नुवन्ति, तेन भगवत्कृपयैव तेषां वेदतदर्थभानम्
न स्वतः।

ननु परमेश्वरस्याप्तकामत्वेन निष्प्रयोजनत्वात् सृष्टौ प्रवृत्त्यनुपपत्त्या न मुख्या सृष्टिः,
किन्तु मायामयी सृष्टिरिति चेत् तत्राह—यथा तेजोवारिमृदां विनिमयो तथा अमृषा=मृषा
मिथ्या नेत्यर्थः। तेजोवारिमृदां विनिमयः परस्परव्यत्यासेन परस्परस्मिन्नंशेनावस्थितिः,
त्रिवृत्करणं मिथ्या न भवति, तथैव त्रिसर्गोऽपि मिथ्या न भवतीत्यर्थः। कथं तर्हि प्रवृत्तिरिति
चेत् उच्यते—"देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा।" "लोकवत्तु लीलाकैवल्यम्"
(ब्र० सू० २।१।३३) इत्यादिश्रुतिसूत्रबलादाप्तकामस्य भगवतो लीलयैव प्रवृत्तेः, त्रयाणां
जीवेश्वरजडानां सर्गो यथैकमेवं मूलं तेजः स्वकार्य्येषु पार्थिवादिप्रपञ्चेषु बहुधा भूत्वा प्रविशति,
बहिश्च मथनादाविर्भवति, तथेश्वरोऽपि जगत्सृष्ट्वा, बहुरूपीभूय जगदन्तः प्रविशति, बहिश्च
भक्तानुकम्पया वासुदेवादिरूपेणाविर्भवति, ईश्वरे त्रिसर्गो मृषा न भवति, अर्थक्रियाकारि-
त्वात्। स्वेन धाम्ना=स्वरूपज्ञानमहिम्ना सदा निरस्तं कुहकमिन्द्रजालमायादिर्येन तं परं
सत्यं परमात्मानं ध्यायेम।

श्रीमद्भागवतरीत्या = श्रीनारदाज्ञया भगवच्चरित्रप्रधानां भगवद्भक्तिप्रसवित्रीं श्रीभागवतसंहितां प्रारभमाणो मङ्गलमाचरन् शिष्यशिक्षार्थं बीजभावेन प्रथमं गायत्र्यर्थमुपनिबबन्ध ।

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥
( म० पु० ५३।२० )

यथा यज्ञात्मको वृत्रः तद्वधनिरूपणेनात्र भक्तिः प्रवर्त्तयिष्यते । 'तत्त्वष्टाऽऽहवनीयमुपप्रावर्त्तयत । 'स्वाहेन्द्रशत्रुर्वर्धस्व" इति श्रुतेराहुत्युत्पन्नत्वाद् वृत्रस्य यज्ञात्मकत्वम्, निरीश्वरमीमांसकाभिमतस्य यज्ञादेर्भक्तिप्रावरणहेतुत्वाद् वृत्रत्वं वा ।

गायत्री वेदमाता, वेदत्रयार्थप्रतिपादिका । तदर्थो भागवते प्रथमबीजार्थं निरूप्यते । तेन यथा वेदः, तथा भागवतम्, समानबीजोत्पन्नत्वात् । तत एवात्र वेदविरोधो वेदाद् दौर्बल्यञ्च परिहृतम् ( अपौरुषेयवेदमूलकत्वेऽपि तत्सारतमत्वेन ततोऽप्यधिकस्वादुत्वात् शर्करासारतमकन्दवत् ) । यथा वेदे फलसाधनसहिता यज्ञियाः पदार्था योगजधर्मेणानुभूयन्ते, तथैव व्यासो योगजधर्मेण "पुरुषो मायया बन्धो मोचनं भक्तिहेतुकम् । अपश्यत् पुरुषं पूर्णम्" इत्यादिरीत्या पुरुषो मायाकृतबन्धं भक्तिहेतुकं मोक्षं पूर्णपुरुषञ्चानुभूतवान् । समाधिभाषा चैषा । तत्र पुरुषप्रयत्नस्तु भक्तावेव,

माहात्म्यज्ञानपूर्वं तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥

इति वैष्णवतन्त्रवचनात् । तत्रात्मत्वेन विज्ञाते सर्वतोऽधिकः सुदृढः स्नेहो भवति । सृष्ट्यादिभिर्माहात्म्यज्ञानम् । यथा यज्ञा भगवदाराधनबुद्ध्यानुष्ठिता ब्रह्मात्मावगतिहेतुकाः, तथा तद्वदयमपि भक्तिहेतुरिति स्पष्टं काण्डद्वयार्थनिष्ठातोऽप्यफलवृक्ष इव व्यर्थो भवतीति भागवतसार्थक्यम् ।

ननु प्रणवो व्याहृतयश्चापि बीजत्वेन प्रसिद्धा इति कुतो गायत्र्या बीजत्वोक्तिरिति चेत्, न; गायत्र्या इव तेषां स्पष्टार्थत्वाभावेन गायत्र्या एवोपात्तत्वात् । ननु तथाप्यग्न्युपस्थाने हि गायत्री विनियुक्ता । 'तत्सवितुर्वरेण्यम्' इत्याह प्रसूत्या मन्देहादिवारणे गायत्र्याभिमन्त्रिता आप ऊर्ध्वं निक्षिपन्ति । उपनयनेऽप्यस्या विनियोगः, तथा च कथमस्या भगवत्परत्वमेवेति चेत्, न; सर्वप्राणिपरप्रेमास्पदे सर्वान्तर्य्यामिणि भगवत्येव गायत्र्याः सर्ववेदानाञ्च पर्य्यवसानात् ।

तत्राग्निशब्देनापि ब्रह्मतत्त्वमेव विवक्षितम् । "एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।" ( ऋ० सं० १।१६४।४६ ) इत्यादिमन्त्रवर्णात् । सन्देहादिनिवारणस्यापि भगवच्छक्तिप्रयुक्तत्वेन भगवदर्थत्वानपायात् । गायत्रीबीजम्, वेदो वृक्षः, भागवतं फलमिति निरूपितम् ।

"ऐन्द्र्या गार्हपत्यमुपतिष्ठते ।" इत्यत्र यथेन्द्रपरस्यापि मन्त्रस्य वाक्यबलाद् गार्हपत्योपस्थाने विनियोगः, तथैव भगवत्पराया अपि गायत्र्या अग्न्याद्युपस्थानसंभवाच्च । अत एव सर्वसन्देहनिराकरणाय मङ्गलश्लोके गायत्र्यर्थोपनिबन्धनम्, न गायत्र्येवोपनिबद्धा । निर्विघ्नं वाक्प्रसवार्थं गायत्र्या भगवदुपस्थानं कुर्वाणो गायत्र्यर्थमुक्तवान् । गायत्र्यां जगत्प्रसवकर्तृत्वेन सर्वकर्तृत्वम्, देवत्वेन च सर्वज्ञत्वं भगवतो बोधितम् । 'वरेण्यम्' इति भजनीयतया भक्तिबीजं भर्ग इति भर्ज्जत्यखिलामविद्यामिति च संसारनिवृत्तिः सूच्यते । तस्यैव धीमहीति ध्यानमुक्तम् , सर्वेन्द्रियमनोबुद्ध्यादिप्रेरकत्वात् सर्वहितकारकत्वात् ।

'जन्माद्यस्य यतः' आद्यस्य = आकाशस्य यतो जन्मतम् "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" ( तै० उ० २।१ ) इति श्रुतेः । न च स्थितिप्रलयग्रहणार्थं जन्मादीति पदस्थिति–र्मन्तव्येति वाच्यम्, 'सवितुः' इति गायत्रीस्थपदेन प्रसवमात्रस्योक्तत्वात् । न च न्यूनतापत्तिः, 'वरेण्यं भर्गः' पदाभ्यां तयोरपि सूचितत्वात् । यद्वा सूतेः स्थितिप्रलययोरुपलक्षणार्थत्वेन तयोर्बोधः । जन्मादिग्रहणे तु स्थितिश्च भङ्गश्च समाहारे स्थितिभङ्गं जन्म आदिर्यस्य स्थितिभङ्गस्येति तद्गुणसंविज्ञानो बहुव्रीहिः, अस्याकाशस्य तदुपलक्षितस्यानन्तकोटिब्रह्माण्डात्मकस्य जगतो मनसाप्यचिन्त्यरचनारूपस्य यतो जन्मस्थितिभङ्गम् । यत इत्यव्ययनिर्देशो ब्रह्मणोऽविकृतत्वबोधनाय । कामधेनोः कल्पवृक्षस्य चिन्तामणेर्मन्त्रादेश्च नानाविधविचित्रपदार्थानामुत्पत्तावपि तेषां यथाऽविकृतत्वम्, तथैव परमेश्वरस्यानन्तानन्तकोटिब्रह्माण्डजनकत्वेऽपि निर्विकारत्वमेव । एतेन यदुच्यते सर्वस्य ब्रह्मणो जगदाकारपरिणामित्वे कृत्स्नप्रसक्त्या मुक्तोपसृप्यानुपपत्तिस्तदेकदेशस्य तादृक्परिणामे सावयवत्वापत्त्या निरवयवत्वोक्तिव्याकोपश्चेति, तदुक्तम् = 'कृत्स्नप्रसक्तिर्निरवयवत्वव्याकोपश्च' इति तदप्यपास्तम्, 'तत्' इति गायत्रीस्थस्य पदस्य परं सत्यमिति व्याख्यानम्, तत् परं सत्यं धीमहि । केषाञ्चिद्रीत्या ब्रह्मणो निमित्तत्वं प्रकृतेः समवायित्वम्, अन्येषां रीत्या ब्रह्मण एव तदुभयत्वं कर्तृत्वमात्रमित्यपि केषाञ्चित् तदपाकरणायाह–'अन्वयादितरतश्च' अन्वेतीत्यन्वयः = समवायिकारणम्, इतरत् = निमित्तकारणञ्च यत्र येन यतो यस्येत्याद्युक्तेः, तथा चाभिन्ननिमित्तोपादानं जगद्ब्रह्मकारणकमेव यस्तत्र व्याप्य वर्तते, सोऽन्वयः । अनारोपितागन्तुकरूपेणानुवृत्तिः समवायोऽत्र विवक्षितः । न च

ब्रह्मसूत्रे समवायस्य निरस्तत्वात् कथं तद्गर्भितसमवायिकारणाङ्गीकार इति वाच्यम्, तादात्म्यरूपसमवायाङ्गीकारेण तददोषात्, वैशेषिकप्रक्रियाया निराकरण एव सूत्रतात्पर्य्यात्। अत्र न न्यायप्रसिद्धावन्यवव्यतिरेकी ग्राह्यौ, ब्रह्मणः कारणत्वस्य प्रत्यक्षाद्यसिद्धत्वेन श्रुतिमात्रसिद्धत्वात्, न च ब्रह्मणो व्यतिरेकः संभवति। यद्यपि जगत्कारणत्वेनैव ब्रह्मणः सार्वज्ञं सिद्धमेव, तथापि लोकवत्फलाज्ञानं संभवतीत्याह–'अर्थेष्वभिज्ञः'। अर्थेषु निमित्तेषु चतुर्विधपुरुषार्थसिद्धयर्थं तस्य सृष्टौ प्रवृत्तिः। केचित् स्वार्थं प्रवर्त्तन्ते, तन्निरासायाह-'स्वराट्' स स्वेनैव राजते, न विषये रमते।

एवं रूपप्रपञ्चकारणत्वमुक्त्वा नामप्रपञ्चकारणत्वमाह- 'तेने ब्रह्म' यद्यप्यविशेषेण कारणत्वं शक्यं वक्तुम्, तथापि रूपप्रपञ्च आसक्तानां जीवानां निवारणार्थं भेदेनोक्तम्। बन्धमोक्षयोः प्रकारभेदेन निरूपणार्थं वेदजगतोर्भिन्नतया निरूपणम्। ब्रह्म' वेदः। अविकृतत्वाय तथा वर्णनम्। 'हृदा' मनसा। पुराणेन सह 'पुराणं हृदयं स्मृतम्' इति रीत्या पुराणेन सह वेदं ब्रह्मणो हृदि प्रकाशितवानित्यर्थः।

'यः' इति गायत्रीतृतीयपादस्य ग्रहणम्। तेन सर्वप्रेरकत्वमायाति, अन्यथा वैयर्थ्यापत्तेः। 'यतः' इत्यस्यैव सर्ववाक्येषु विभक्तिविपरिणामेन योजयितुं शक्यत्वात्। शब्दरसाभिज्ञत्वात् 'कवि'पदप्रयोगः गोपनार्थम्, अन्यथाकथनसामर्थ्याय वा। न ह्यन्यस्तादृश इति आदिपदं कविदोषाभावायेति वा। तेन नानाविधस्तोत्रेण संतुष्टो भगवान् तस्मै वेदं प्रकाशितवान्।

अन्येषां वेदानुपयोगे हेतुमाह- 'मुह्यन्ति' वेदे वेदार्थे च सूरयोऽपि मुह्यन्ति। भगवानेव तत्प्रपन्नो वा वेदार्थवित् प्रपञ्चेन बन्धः, वेदेन मुक्तिः, ताभ्यां हरिः क्रीडतीति तस्यैव निर्दोषत्वं वरणीयत्वं च वदन् भर्गशब्दार्थमाह–'तेजोवारिमृदां यथा विनिमयः' तथा 'त्रिसर्गो मृषा' अनेन मायातत्कार्यसम्बन्धाभावप्रतिपादनम्। दोषो द्विविधः—स्वत एव दुष्टतापादकः, सेवकानुद्धारो वा। तत्राद्याभावमाह—देहेन्द्रियान्तःकरणसम्बन्धो दोषः, स च प्रत्येकमिति दृष्टान्तबाहुल्यम्, सात्त्विकादिभेदेन वा तत्र 'तेजोवारिमृदां' यथाऽन्योऽन्यन्नस्मिन्नन्योन्यावभासो मृषा भवति द्रष्टुरेव, तथा बुद्धिजनकः, न तु विषयस्तादृशः। तेजसि मरीचिषु वारिबुद्धिः, वारिणि नीलमण्यादिपृथ्वीबुद्धिः, मण्यादिष्वग्निबुद्धिः, काचादौ वारिबुद्धिः, मेघेषु चन्द्रबुद्धिः, किरणेषु वस्त्रबुद्धिः, तथैव भगवति देहेन्द्रियान्तःकरणवत्त्वमवतारादिषु मृषेत्याह— 'यत्र' इति निमित्ताधिकरणयोर्ग्रहणम्। ततो गुणत्रयकार्यदेहेन्द्रियमनांसि तद्धर्माः, तत्करणं वा तदधिकरणानि तदर्थां वाध्यासेन वसन्तीत्यर्थः। केचिद् भगवति देहेन्द्रियाणि परिकल्प्य तेषां चिदानन्दत्वं कल्पयन्ति। केचिच्चानन्दे देहेन्द्रियाणि केचिच्चले कृष्णे जडजीवसम्बन्धं

कल्पयन्ति, जडजीवविशेषे वा सामर्थ्यम्। केचिच्छरीरे माया-तद्वतोरध्यासं कल्पयन्ति। मायाविशिष्टे स्वेच्छयैव शरीरसम्बन्धं वा सर्वेषां तेषां बुद्धिरेव भ्रान्ता। भगवति गुण-जडजीवधर्मा मृषा, मायादिसम्बन्धाभावात्, वरणीयं सुन्दरं ततः स्वतो दोषाभाव इत्यर्थः।

सेवकोद्धारमाह—'धाम्ना स्वेन' स्वरूपस्फूर्त्यैव सर्वाविद्यानाशकः स्वरूपमेवाविद्या-नाशकम्, तदेतत्प्रमेयबलम्, सदा नात्र कलिकालादिर्बाधकः। कुहकम्=कार्पण्यं देहेन्द्रिया-त्मभावः, तस्मिन्निराकृते शिष्टं स्वत एव भविष्यति। एतेन भर्ज्जयत्यखिला विद्या इति भर्गशब्दो व्याख्यातः।

तच्छब्दं व्याचष्टे सत्यं परं कालत्रयाबाधितम्, लोकप्रसिद्धं सत्यं परं श्रेष्ठं पुरुषोत्तमं सर्ववेदप्रसिद्धम्, धीमहि ध्यायेम, प्रीतिं वा कुर्म इत्यर्थः इदमेवोभयत्र। परं वेद-कत्वबोधनायानेन वेदसंमितं पुराणमित्युक्तं भवति। एवं बीजभावो निरूपितः।

जन्माद्यस्येति पद्यस्य सर्वस्यैव वा भागवतस्य बहुभिराचार्य्यैः पण्डितैश्च द्वैताद्वैत-विशिष्टाद्वैतशुद्धाद्वैताद्वैतपराणि व्याख्यानानि कृतानि। तदिदं महत्त्वमेवास्य शास्त्रस्य, तैः सर्वैरेवास्य प्रमाणत्वेनाङ्गीकारात् स्वस्वपक्षेपु योजनं क्रियते।

अत्र पद्ये सत्यमिति न व्यवहारमात्राबाध्यम् किन्तु परमार्थसत्यमत्यन्ताबाध्यमेव बोध्यम्। "प्राणा वै सत्यं तेषामेष सत्यम्" इति श्रुतिर्व्यवहारसत्यानां प्राणानामधिष्ठानभूतं परमात्मानमेव सत्यं बोधयति, सर्वभ्रमाधिष्ठानत्वात् सर्वबाधावधित्वाच्च, तस्यैव परमार्थ-सत्यत्वसम्भवात्। निरधिष्ठानस्य भ्रमस्य निरवधेर्बाधस्य चासंभवात्। तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषेति। तस्यैव त्रिसर्गाधिष्ठानत्वं स्पष्टम्, धीमहीत्यत्र ध्यानं निदिध्यासनरूपमेव, तच्च वस्तुस्वरूपापेक्षविजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाह-रूपं निदिध्यासितव्यः, "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिश्रुतिभ्यः। उपासनन्तु वस्तुस्वरूपानपेक्षं पुरुषेच्छाधीनं मानसक्रियाप्रवाहरूपम्, 'यस्यै देवतायै हवि-र्गृहीष्यन् स्यात्तां ध्यायेन्मनसा वषट्करिष्यन्" इति श्रुतेः। "वाचं धेनुमुपासीत" इत्यत्र तु वस्तुस्वरूपविरोध्युपासनं भवति। "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति श्रुत्या ब्रह्मणि तदुभयविधस्योपासनस्य निषेधात्, "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुत्या तस्यो-पनिषन्मात्रगम्यत्वोक्तेः, निदिध्यास्यमानस्य परमार्थसत्यत्वं बोधयितुं पूर्वं जन्माद्यस्येति तत्पदार्थस्वरूपतामाह—"यतो वा इमानि, जन्माद्यस्य यतः" इति श्रुतिसूत्राद्यनुसारेण जन्मादीत्येव पदस्थितिर्युक्ता। तस्मादव्यक्तमुत्पन्नमित्यव्यक्तस्य महत्तत्त्वस्य वाऽव्यक्तत्वो-पपत्तावाकाशस्य तदसंभवात्। संभवेऽपि नाकाशस्यैव ततो जन्म, किन्तु सर्वस्यैव

तज्जत्वोक्तिविरोधात्, न केवलं जन्मैव, किन्तु सर्वस्यैतस्मादेव जन्मस्थितिभङ्गानामपि श्रवणात्। तज्जलानिति श्रुतेः। सदिदं सदिदमिति सद्रूपस्यैव कार्य्येष्वन्वयात्, शून्यमिदमित्यन्वयव्यतिरेकात्। न शून्यं कारणम्, कथमसतः सज्जायतेति, तन्निषेधात्।

यद्वा "सदेव सोम्येदमग्र आसीत्" इति श्रुतिवाक्यान्वयात्। इतरतश्च "असद्वा इदमग्र आसीत्" इत्यसतोऽनन्वयाच्च। सत एव कारणत्वं नासतः, व्यवहारानर्हत्वाच्च, सति कारण एवासत्पदप्रयोगोपपत्तेः। तत एव असद् आसीदिति सम्बन्धः। अतो नासतः कारणत्वं शून्यस्य, सत्तासम्बन्धायोगात्।

अथवा कार्यान्वयाद् ब्रह्म कारणमित्युक्तौ कार्यविनाशे तन्नाशाशङ्का स्यात्, तन्निरासायाह—इतरतश्च यथा=घटनाशेऽपि तदन्विता मृत्तिका न नश्यति, घटभिन्ने शरावादौ तस्या अन्वयात्। एवं सदपि—इतरतः=इतरत्र कार्येषु तदन्वयाद् वाक्यार्थानुपपत्तिदोषाच्च नासतः कारणत्वम्। सताप्यनभिज्ञेन कार्य्यं रचयितुं न शक्यम्, किमुतासतेत्याह—अर्थेष्वभिज्ञः "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतयश्च स्वरूपसाधनप्रयोजनादिज्ञानवत एव कारणत्वं दर्शयन्ति। अथवा अर्थेष्वन्वयादितरतश्चेति पूर्वेण सम्बन्धः। सर्वज्ञत्वोपादानत्वाभ्याञ्च प्रधानपरमाणुकारणवादौ निराकृतौ। ननु प्रधानस्य सत्त्वपरिणामेन भवति सार्वज्ञम् न ब्रह्मणो निर्धर्मकत्वेन; ज्ञानाकर्तृत्वादित्यत आह—'स्वराट्' स्वयमेव राजते=प्रकाशते स्वराट्। अन्यानपेक्षः प्रकाशरूपः सविता प्रकाशते इत्यादिवत्कर्तृत्वोपचारात् सर्वविषयज्ञानरूपत्वेन तस्य कारणतासंभवात्। नाचेतनस्य प्रधानस्य तत्संभवतीति ब्रह्मणस्तु कारणत्वे एकविज्ञानेन सर्वज्ञानप्रतिज्ञा समर्थिता स्यात्। अन्यथा प्रधानज्ञानेन प्रधानकार्य्याणां ज्ञानसंभवेऽपि तदकार्य्याणां जीवानां ज्ञानासंभवात्। ब्रह्मणि विदिते पुरुषाणां स्वत एव तद्रूपत्वात्, इतरेषां कल्पितत्वेन तदव्यतिरेकात्। ननु तथापि वेदस्य नित्यत्वेन ब्रह्मकारणत्वेऽपि कथमेकज्ञानेन सर्वविज्ञानमिति चेत्, तत्राह—तेने ब्रह्म यः श्वासप्रश्वासवल्लीलया ब्रह्म वेद तेने आविर्भावितवान्। "अस्य महतो भूतस्य निःश्वसितम्" इत्यादिश्रुतेर्वेदस्यापि ब्रह्मोपादानकत्वश्रवणात्। न च तावताऽपि पौरुषेयत्वं वेदानां प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वाभावेनापौरुषेयत्वोपपत्तेः तदर्थस्य, मानान्तराविषयत्वेन श्वासस्येव पुरुषचिकीर्षाजन्यत्वाभावेन पौरुषेयत्वानुपपत्तेः। वेद-तदर्थज्ञानस्य तुल्यकालत्वान्न सार्वज्ञ्यव्याघातोऽपि। वेदनिष्ठसर्वार्थप्रकाशनशक्तिः सदुपादाननिष्ठा कार्य्यगतप्रकाशनशक्तित्वात् वह्न्युपादानकदीपगतप्रकाशनशक्तिवदित्यनुमानाच्च। हिरण्यगर्भोऽपि न करणमित्याह—आदिकवये यस्तेने—"यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेः।

हृदा तेने न मुखेनाध्यापितवानिति तस्यान्तर्यामित्वञ्च व्यञ्जितम्। ननु ब्रह्मणः सिद्धत्वेन मानान्तरयोग्यत्वेन न श्रुतीनां ब्रह्मणि प्रामाण्यम्, प्रत्यक्षादिसंवादे नाज्ञातज्ञापकत्वाभावात्, विसंवादे तु बाधितविषयत्वेनाप्रामाण्यमिति। तत्राप्याह—मुह्यन्ति यत्सूरयः, यस्मिन् अखण्डानन्दाद्वये स्वरूपचिन्मात्रलक्षणे ब्रह्मणि सूरयो मोहमनुभवन्ति। मोहश्च द्विविधः—आवरणरूपः, विक्षेपरूपश्च। आद्यमपि द्विविधम्, शुद्धं ब्रह्म नास्तीत्यसत्त्वापादकमावरणम्, तन्न प्रकाशत इत्याकारमभानापादकमपरम्, वेदान्तविचारशून्यैस्तदद्वयमप्यनुभूयते, वेदान्तविचारेण परोक्षज्ञानेनासत्त्वापादकमावरणं क्षीयते। तदानीं नास्ति ब्रह्मेतीति व्यवहारानुदयेऽपि मम न भाति पूर्णं ब्रह्मेति व्यवहारदर्शनादभानापादकं तदवशिष्यते, अभानापादकावरणनिवर्त्तकसाक्षात्कारेण तन्निवृत्तिः। आवरणकार्यभ्रमस्तु विक्षेपरूपो मोहः, कारणनिवृत्तौ सोऽपि निवर्त्तते। तादृङ्मोहद्वयेनैव नैयायिकवैशेषिकपातञ्जलपाशुपतादयो जीवाद्भिन्न एवेश्वरः, स च निमित्तकारणमेव नोपादानमिति वदन्ति। सांख्यमीमांसकादयस्तु निमित्तत्वेनापि नेश्वरमुपयन्ति। एवं ब्रह्मविषयकमोहस्य प्रत्यक्षत्वात् स्वरूपचैतन्यस्य तत्साधकत्वेन तदनिवर्त्तकत्वात्। तन्निवर्त्तकवृत्तिरूपज्ञानोत्पादकत्वेन वेदान्तानां प्रामाण्यम्। सिद्धत्वेऽपि ब्रह्मणो न मानान्तरगम्यता, रूपादिहीनत्वेनान्यप्रमाणाप्रवृत्तेः, एवं पूर्वार्द्धेन तत्पदवाच्यार्थं प्रतिपाद्य, परार्द्धेनाध्यारोपापवादन्यायेन तत्पदलक्ष्यार्थमाह—तेजोवारिमृदाम्। यत्र ब्रह्मणि त्रयाणां तेजोवन्नानासर्गो मृषा मिथ्यैव, रज्वां सर्प इव। तेजोवारिमृदां यथाविनिमयो व्यामिश्रीभावोऽन्योऽन्यावभासरूपः, तथैवात्रापि बोध्यः। तथा च श्रुतिः—"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वम्, वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" इति विकारस्य मिथ्यात्वं बोधयति।

यत्तु यथा तेजोवारिमृदां विनिमयस्त्रिवृत्करणं न मृषा, तथैव त्रिसर्गोऽपि न मृषेति तन्न, दृष्टान्तस्योभयसंमतत्वाभावात्। यः खलु त्रिसर्गं मृषा मन्यते, स त्रिवृत्करणमपि मिथ्यैव मन्यते, विशेषहेत्वभावात्। एतेनारम्भवादः, परिणामवादश्च नोपपद्येत इतीहैव लक्ष्यते। तस्माद्विवर्त्तवादाश्रयेण शुद्धे ब्रह्मण्यविद्यावशाद् द्वैताभासो मिथ्यैव। न चानादिभावत्वाद् ब्रह्मवदविद्यायाः सत्यत्वमस्तु, कल्पकशून्यत्वाच्च। स्वस्या एव कल्पकत्व आत्माश्रयता, अविद्यान्तराभ्युपगमेऽनवस्थानात्। तथाचैकविज्ञानेन सर्वविज्ञानानुपपत्तिः, अनिर्मोक्षापत्तिश्चेति। तत्राह—धाम्ना स्वेन सदा निरस्तकुहकम्। परमार्थस्वरूपचित्स्फूर्त्यैव सदा निरस्तम्=बाधितं कुहकम्=मायात्मकमज्ञानमविद्या यत्र तत्।

निश्चयोऽपि समवधायकचेतनकर्तारमन्तराऽदृष्टमात्रात् कार्योत्पादासम्भवस्यासकृदावेदितत्वात्। अत एवैकेश्वरानुमानेनानवस्थाप्रसङ्गोऽपि, एकेनैव तेन कार्योत्पत्त्युपपत्त्या परमेश्वरान्तरकल्पनाया अप्रसङ्गात्।

"ननु बुद्धिशरीरादीनां कर्माशयमूलकत्वेनेश्वरे तदभावात् कथं ज्ञानचिकीर्षादिसम्भवः? तस्यापि कर्माशयाभ्युपगमे येन कर्माशयेनास्य ज्ञानेच्छाशरीरादयो जनयितव्याः सोऽविज्ञातोऽनधिष्ठितश्च चक्षुरादिजननाय न पर्याप्तः। न च तज्जन्येन शरीरादिना तत्सम्भवः, अन्योन्याश्रयात्। न च प्राग्भवीयशरीरान्तरादिना तदुपपत्तिः, जन्यसमये तस्यातिवृत्तत्वात्" इत्यादि तुच्छम्, जन्यज्ञानादीनां कर्माशयापेक्षत्वेऽपि नित्यानां तदनपेक्षणात्। कर्माशयपूर्वकत्वं ज्ञानादीनां त्वनभ्युपगमपराहतमेव। नित्या सर्वविषया बुद्धिस्तु साधितैव।

यदुक्तम्—'परमेश्वरस्य प्राप्ताखिलप्रापणीयस्य प्राप्तव्याभावादत एव क्रीडासाध्यसुखस्यापि प्राप्तत्वाद् न क्रीडार्थमपि प्रवृत्तिः। नापि कारुण्येन परार्थं प्रवृत्तिः, सुखमयस्यैव लोकस्य सृष्टिप्रसङ्गात्' इति, तदप्यसङ्गतम्, धर्माधर्मसापेक्षस्य परमेश्वरस्य विचित्रप्रपञ्चनिर्माणे बाधानुपपत्तेः। न च दुःखहेतोरधर्मस्य कारुण्येनाधिष्ठानं नोपपद्यत इति वाच्यम्, तस्यापि पापक्षयवैराग्यादिजननाद्युपायतया कारुण्येन तदधिष्ठानोपपत्तेः। न च दुःखोत्पादस्येश्वराधीनतया तस्य तत्र वैमुख्येन तदनुत्पादे तदत्यन्तविमोक्षरूपस्यापवर्गस्यानायाससिद्धत्वात् कृतं कारुण्येन परार्थप्रवृत्त्येति वाच्यम्, सृष्टिमन्तरा तत्त्वसाक्षात्कारानुपपत्तेः। तत्त्वसाक्षात्कारमन्तराऽनाद्यविद्याकामकर्मलक्षणबन्धनिवृत्तिपूर्वकपरमानन्दावाप्तिलक्षणो मोक्षो न सिद्ध्यति, 'ऋते ज्ञानान्न मुक्तिः' 'तमेव विदित्वातिमृत्युमेति' (वा०सं० ३१।१८ तथा श्वे०उ० ६।१५, ३।८) इति श्रुतिविरोधात्।

तत्त्वसाक्षात्कारस्तु वेदान्तश्रवणादिसाधनमन्तरा नोत्पद्यते, श्रवणादिकञ्च देहादिसृष्टिमन्तरा नोपपद्यते इति कुतः सृष्टिमन्तरा तद्वैमुख्यमात्रेण मोक्षसिद्धिः? एतेन नेश्वरः कर्ता, प्रयोजनाभावात्, अनित्यमीश्वरज्ञानं ज्ञानत्वात्, इत्यादीनि प्रत्यनुमानानि निरस्तानि वेदितव्यानि, सृष्टिप्रयोजनस्योक्तत्वात्। ज्ञाननित्यत्वस्य साधितत्वात्। ईश्वरस्य च तज्ज्ञानस्य च धर्मिणोऽप्रसिद्धौ हेतोराश्रयासिद्धत्वात् प्रसिद्धौ धर्मिग्राहकविरोधाच्च।

यदुक्तम् 'क्षित्यादिषु सावयवत्वेन कार्यत्वानुमानमपि न सम्भवति, क्षित्यादिकमकार्यमशक्यक्रियत्वाद् अशक्योपादानविज्ञानत्वाद् महाभूतशब्दवाच्यत्वाच्चेत्याद्यनुमानैः सत्प्रतिपक्षितत्वादिति तदपि न क्षोदक्षमम्, आभाससमानयोगक्षेमत्वात्। तथाहि—

कुतोऽशक्यक्रियत्वादिकं ज्ञायते ? जीवेषु तददर्शनादिति चेत्, तदपि मन्दम्, नहि यदस्मदादिषु न दृष्टं तदन्यत्रापि न सम्भवति। नहीदानीं सार्वभौमः सम्राट् नोपलभ्यत इति तत्सत्त्वमन्यदापि बाधमर्हति। स्मर्यन्ते पुराणादिषु तादृक्सम्राजश्चेदत्रापि स्मरणं समानमेव। प्रजापतिविश्वामित्रादयः स्मर्यन्ते विचित्रशक्तिमन्तः, अत्रापि पुण्यविशेषोपचयेनातिशयता दृष्टेति सम्भावनया जीवानामपि विशेषकार्यकर्तृत्वानुमानाच्च।

किञ्च, नहि सिद्धं साध्यते, तस्य सिद्धत्वादेव। यस्योत्पत्तिर्दृष्टा न तस्य कार्यत्वं साधनीयम्, यस्य न दृष्टा तस्यैव साध्यते सा। कार्यत्वसिद्ध्यैव तेनैव धर्मिग्राहकमानेन तदनुगुणा शक्तिर्ज्ञानं चापि सिद्ध्यत्येव। तृतीयहेतुस्त्वप्रयोजकः, अनुकूलतर्काभावात्। सावयवत्वकार्यत्वयोस्तु घटादिषु दृष्टः कार्यकारणभाव एव व्याप्तिसाधकः।

सातिशयानां परिमाणानां परममहत्त्वस्याकाशेऽणुत्वस्य परमाणौ काष्ठाप्राप्तिर्दृष्टा। विज्ञानञ्च लोके एक-द्वि-बहुविषयतया सातिशयं दृष्टमिति तदपि क्वचित् काष्ठां प्राप्तम्। विदितसमस्तवेदितव्ये परमेश्वरे तत्काष्ठाप्राप्तिर्युक्ता, "तत्र निरतिशयं सर्वज्ञबीजम्" (१।२५) इति पातञ्जलसूत्रात्।

ननु यतः परं नास्ति सा काष्ठा, तदा भवतु तत्प्राप्तिः, न च तथा सर्वविषयत्वप्राप्तिः, भूयिष्ठविषयत्वे तु नेष्टसिद्धिः। यथा पार्थिवान्तरापेक्षया पार्थिवगोलस्य बहुतराकाशव्यापित्वेऽपि न सर्वव्यापिता। 'यतः परं न सम्भाव्यते सा काष्ठा' इत्यपि न सम्भवति, सातिशयानां घटादिकार्यद्रव्याणां परा सम्भावनीयातिशायित्वादर्शनात्। अन्यथैकेनैव स्पर्शवता सर्वव्याप्त्या तादृशान्यानवकाशप्रसङ्गात्। यद्यसाधारणगुणस्यैवायं धर्म इति, तदपि न युक्तम्, मनुष्य-वातहरिण-हरि-पतत्त्रिणां प्रयत्नविशेषात्, दूरान्तिकप्राप्तिदर्शनेनासम्भावनीयपरातिशयस्य विशेषस्यादर्शनेन व्यभिचारात्। निरवशेषगन्तव्यदेशप्राप्त्या हि निरतिशयः प्रयत्नो भवेत्। गन्तव्यस्य नभसोऽनन्ततया कथं सम्भवेत् ?

किञ्च, परममहत्त्वस्य पर्य्यवसानमाकाशे गदितम्। यदि तत्परिमितम्, ततः कुतस्तस्यासम्भाव्यपरावस्थत्वम् ? यद्यानन्त्यमेवाकाशस्य न परिमितत्वम्, तदापि किमानन्त्यम् ? यदि परिच्छेदाभाव एवानन्त्यम्, तद्वदेवेश्वरज्ञानस्याप्यानन्त्यम्, सैव च काष्ठाप्राप्तिरिति, तदपि न युक्तम्, तस्यात्मीयज्ञानस्य साकल्येनापरिज्ञानेऽल्पज्ञत्वापत्तिः। ज्ञाने वा कथमानन्त्यम् ? परिच्छेदनान्तरीयकेणेयत्तावधारणेनापास्तत्वादिति, तत्रोच्यते—असाधारण्ये गुणत्वे सति

सातिशयानां काष्ठाप्राप्तिरित्युक्तौ दोषाभावात्। न च प्रयत्नविशेषात् त्वान्तिकदूरप्राप्तौ काष्ठाप्राप्तिरिति वाच्यम्, सर्वातिशायिपरेशप्रयत्नस्य काष्ठाप्राप्तेरिष्टत्वात्। "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" ( ऋ० सं० १०।९०।३ ), "अत्यतिष्ठद् दशाङ्गुलम्" ( ऋ० सं० १०।९०।१ ) इत्यादिश्रुतिभिः परमेश्वरस्य सर्वप्रपञ्चातिक्रान्तत्वेन तत्र प्रयत्ननिरतिशयत्वस्याप्युपपत्तेः। न चैवमीश्वरस्याल्पज्ञत्वप्रसङ्गः, अनन्तस्यानन्तत्वेन ज्ञाने सर्वज्ञत्वानपायात्। तत्रेयत्तावधारणस्यैव भ्रान्तिमूलकत्वेनाल्पज्ञत्वप्रयोजकत्वाच्च।

यदुक्तम्—'विवादाध्यासितमनेककर्तृकं कार्यत्वात्, विचित्रसन्निवेशसार्वभौमसदनवदिति जगतोऽनेककर्तृकत्वसिद्ध्या पक्षधर्मताया दौर्बल्येन सर्वज्ञसर्वकर्तुरेकस्येश्वरस्यासिद्धिः' इति, तदपि तुच्छम्—अस्मदादिषु पृथिव्यादिनिर्माणानुगुणज्ञानसामर्थ्याद्यभावदर्शनादनुमानेन तादृक्सामर्थ्यवतां साधनेऽनेकतादृक्कल्पनापेक्षया तादृगेकेश्वरकल्पनायां लाघवादन्यत्र गौरवाच्च। पुण्यविशेषैस्तद्वतां साधनेऽनेकेश्वरपक्षोक्तदोषाश्च प्रसज्येरन्।

एतेन भूभूधरादिनिष्ठं कार्यत्वं न बुद्धिमदेककर्तृकत्वसाधकम्, समूहनिष्ठत्वात्, घट-पट-स्तम्भादिसमूहनिष्ठकार्यत्ववदित्यपास्तम्, एकस्याप्यनेकवस्तुसमूहकार्यकरणसामर्थ्यदर्शनेन हेतोर्व्यभिचारित्वाच्च।

यदुक्तम्—'क्षित्यादिगतं कार्यत्वं युगपदुत्पद्यमानसर्वगतं क्रमिकोत्पद्यमानसर्वगतं वा? आद्ये आश्रयासिद्धिः, द्वितीये विरोध इति, तदपि तुच्छम्, तदुभयसाधारणस्य हेतुत्वे बाधाभावात्।

जगदेकचेतनाधीनम्, अचेतनारब्धत्वात्, नीरोगस्वशरीरवत्। एकचेतनाधीनोत्पत्तिस्थितिकत्वमेवैकचेतनाधीनत्वमित्यनेनापीश्वरसिद्धिः सम्भवति। न च नीरोगस्यापि शरीरस्य पितृ-पुत्राद्यनेकचेतनादृष्टजन्यत्वेन तदुत्पत्तिस्थित्योस्तदधीनत्वेनैकचेतनाधीनत्वाभावेन दृष्टान्ते साध्यवैकल्यमिति वाच्यम्, तत्रादृष्टाद्वारकत्वे सतीति हेतोर्विशेषणीयत्वेन दोषाभावात्।

एवमेव शरीरस्थितिः किं स्वावयवसमवेता, उत प्राणनम्? आद्येऽवयवाधीनत्वाद् न चेतनापेक्षा, घटादिवत्। द्वितीये क्षित्यादीनां शरीरत्वाभावेन पक्षेऽसम्भव इति पक्षसपक्षानुगतस्थित्यनुपलम्भ इत्यपि निरस्तम्, तदधीनसत्तास्फूर्तिमत्त्वस्यैव चेतनाधीनस्थितिपदार्थत्वेनाव्यभिचारात्।

यदुक्तम्—'अशरीरत्वादीश्वरो न कर्ता, मुक्तात्मवदिति प्रत्यनुमानेन तद्बाधः इति, तन्न, ज्ञानविशेषराहित्यस्योपाधित्वेन तस्याकिञ्चित्करत्वात्। तपोयोगादिलब्धसामर्थ्याना-

मनेकेषां जीवानां विश्वकर्तृत्वकल्पनापेक्षयैकेश्वरकल्पनायां लाघवमुक्तमेव, अनेकेषां स्वातन्त्र्येण कर्तृत्वे वैमत्यावश्यम्भावित्वेन कार्यानुत्पादप्रसङ्गात्।

धर्मजनितत्वेन हीश्वरत्वस्य य एव तादृग्धर्मवान्, स एवेश्वरः स्यात्, तद्वशात् चेश्वर-बहुत्वप्रसक्तेः। तत्र चैकस्यैश्वर्येणान्येषामैश्वर्ये समे न्यूने वा नोपपत्तिः। न्यूनत्वे यदेवातिशयि तदेवैश्वर्यं स्यात्, इतरेषां तु भाक्तमेवैश्वर्यं स्यात्। साम्येऽप्यविरोधेन सम्भूयेशितृत्वे परिषद इव न कस्यापीश्वरत्वम्, सम्भूयेशितृत्वात्। प्रत्येकमीशत्वे तेषु केनचिदेवेशतायाः कृतत्वात्, अन्येषां नैरर्थक्यात्। स्वतन्त्राणां बहूनामेकाभिप्रायासम्भवेन विरुद्धाभिप्रायत्वे न कस्यचित् कार्यस्योत्पादः। उत्पादे च परस्परविरुद्धस्वभावं जगदुपलभ्येत।

वस्तुतस्तु मीमांसकानामपि नेश्वरस्य तत्सर्वज्ञतायाश्च खण्डने तात्पर्यम्, किन्त्वनुमान-स्वातन्त्र्यखण्डन एव। अत एवोत्तरमीमांसकैः—"तन्त्वौपनिषदं पुरुषं पृच्छामि" (बृ० उ० ३।९।२६), "नावेदविन्मनुते तं बृहन्तम्" (तै०ब्रा० ३।१२।९।७), "शास्त्रयोनित्वात्" (ब्र०सू० १।१।३) इत्यादिश्रुतिसूत्राद्यनुसारेण धर्मस्येव ब्रह्मणोऽपि वेदैकसमधिगम्यत्वमुपेयते। वेदार्थस्योपपत्तये बुद्ध्यारोहाय च "मन्तव्यः" (बृ० उ० २।४।५) इति श्रुत्यनुरोधेनैव श्रुत्यविरुद्धानुमानानि युक्तिरूपेणोपादीयन्ते।

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥

(न्या० कु० १।३)

इत्युदयनाचार्योक्तेः। नैयायिकादिभिरीश्वरोक्तत्वेन वेदस्य प्रामाण्यमुपेयते। तस्य च वेदोक्तत्वेन सिद्धावन्योन्याश्रयत्वापत्त्या स्वातन्त्र्येणानुमानप्रामाण्यमुच्यते, तच्च न युक्तम्; तथात्वेऽन्यैरपि वेदविरोधिभिर्बौद्धजैनखृष्टीयमोहम्मदमतानुयायिभिः स्वस्वसम्प्रदायानुगतग्रन्थ-कारस्यापि परमेश्वरत्वं सर्वज्ञत्वादिकं च साधयितुं शक्यत एवेति तैरविशेषापत्तिरेव वेदस्य स्यात्। तथा च वेदप्रामाण्यस्वातन्त्र्यं भज्येत।

यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।

(श्वे० उ० ६।१८)

इति श्रुत्या तु चतुर्मुखस्य ब्रह्मणो निर्मात्रा परमेश्वरेणापि वेदा न निर्मीयन्ते, किन्तु प्रवाहरूपेण नित्यसिद्धा वेदा ब्रह्मणो हृदि प्रहीयन्ते।

तत्र नैयायिकादिरीत्या परमेश्वरापरपर्य्यायस्य ब्रह्मणो निमित्तकारणत्वमेव, नोपादानत्वमपि, वेदान्तरीत्या तु तस्यैवोपादानत्वमपि "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति"(तै०उ० ३।१) इति जनिकर्त्तुः प्रकृतेर्ब्रह्मण उपादानत्वमपि स्पष्टमुक्तम्। अभिसंविशन्तीति ब्रह्मण एव प्रपञ्चलयाधिकरणत्वोक्तेः। नहि निमित्तमात्रस्य कुलालादेर्घटादिलयाधिकरणत्वं सम्भवति। अत एव बादरायणं सूत्रम् "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" प्रकृतिश्चकाराद् निमित्तञ्च ब्रह्मैवेति वक्ति।

ननु निर्विशेषब्रह्मणः कथमुपादानत्वं निमित्तत्वं च सम्भवति, विकारवत् कारणस्यैव मृदादेरुपादानत्वदर्शनात्। ब्रह्म च "निर्विकारो हरः शुद्धः, निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतिभिर्निर्विकारमेवोक्तमिति चेत्, न; तस्य परिणामितयोपादानत्वासंभवेऽपि विवर्त्ताधिष्ठानत्वेनोपादानत्वे बाधाभावात्। विवर्तकारणाज्ञानविषयत्वेन ब्रह्मणस्तत् संभवत्येव। तदेवोक्तं वार्त्तिककारैः—"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणमज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते" इति। श्रीमद्भागवतेऽपि भङ्ग्यन्तरेण तदेवोक्तम्—

ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥

न चोपादानलक्षणासंगतिरिति वाच्यम्, आत्मकार्यजनिहेतुत्वस्य तल्लक्षणस्य परिणाम्यपरिणाम्युभयसाधारण्येन निर्विकारे ब्रह्मण्यपि तत्संगतेः।

ननु ब्रह्मैवोपादानम्, उताज्ञानमपि, आद्ये सत्योपादनत्वेन प्रपञ्चस्य सत्यत्वापत्त्याऽज्ञानोपादानकत्वकल्पनविरोधः। द्वितीयेऽपि किं सूत्रद्वयस्य रज्जुं प्रतीव ब्रह्माज्ञानयोः समप्राधान्येनोपादानत्वम्, उत मायाशक्तिमद् ब्रह्मोपादानम्, अंशुरिव तन्तुद्वारा पटं प्रतीव मायाद्वारा ब्रह्म कारणं वा? नाद्यः, उभयोः समतयैव विकारित्वेन ब्रह्मणो विशिष्य निर्विकारत्वोक्त्ययोगात्। सितासितसूत्रारब्धपटस्य सितासितत्ववद् जगति पारमार्थिकतापारमार्थिकत्वयोरापातात्।

न द्वितीयः, ब्रह्मणो मायाख्यहेतूपरागमपेक्ष्य विकारित्वे मृदादिवत् परिणामित्वापत्तिः, विशिष्टस्य ब्रह्मत्वे निर्विकारश्रुतिविरोधः। अब्रह्मत्वे ब्रह्मणः कारणत्वासिद्धिः, विशिष्टस्य मृदादिवद् धर्मिसमसत्ताकरूपान्तरापत्तिरूपपरिणामाद् विवर्ताभ्युपगमबाधश्च।

न च विशिष्टापेक्षया परिणामत्वम्, शुद्धापेक्षया विवर्त्तत्वमिति वाच्यम्, शुद्धेऽपि विवर्तार्थमारोपितविकारस्यावश्यकत्वे निर्विकारश्रुतेस्तत्परत्वाभावप्रसङ्गात्। विशेष्ये तात्त्विकविकाराभावपरत्वे, विशिष्टे विकारोक्त्ययोगात् तत्त्वतो निर्विकार आरोपितविकाराविरोधात्।

न तृतीयः, अंशोस्तंन्तु प्रतीव ब्रह्मणो मायां प्रत्युपादानत्वाभावादिति चेत्, न; उभयापरिणामित्वेन तयोः कारणत्वाभ्युपगमात्। न चोभयोः परिणामित्वेन कारणत्वाङ्गीकारः, अज्ञानस्यैव तथात्वोपगमात्। ब्रह्मणस्त्वविद्यासाहित्येऽपि न परिणामः, किन्तु विवर्त्तः। न च प्रपञ्चसत्यत्वापत्तिः, परिणाम्युपादानसमसत्ताकत्वरूपस्य सत्यत्वस्य परिणामत्व-निर्वाहकत्वात्, ब्रह्मसमानसत्ताकत्वाभावेन तदपेक्षया परिणामत्वाभावात्, स्वसमानसत्ताक-विकाराहेतुतया निर्विकारत्वोपपत्तेश्च।

न च सत्यासत्यानुगतधूमत्वस्येव सत्यासत्यानुगतोपादानत्वस्यैकस्य सत्त्वमसिद्धमिति वाच्यम्, स्वनिष्ठजनिहेतुत्वस्योभयत्र सिद्धत्वात्। सत्यत्वासत्यत्वाभ्यां वैधर्म्येऽपि तयोस्तादृ-गुपादानत्वसत्त्वे बाधाभावात्, कथञ्चिद् वैधर्म्यस्य साधर्म्यविरोधित्वे साधर्म्यकथोच्छेदापत्तेः।

ननु ब्रह्मण एव रूपाद्याकाशाद्युपादानत्वसंभवेनाविद्योपादानकत्वकल्पना न युक्ता, अविद्यान्वयव्यतिरेकस्य निमित्ततामात्रेणान्यथासिद्धेरिति चेत्, न, घटकुण्डलादेः परिणाम्यपेक्षादर्शनेनाकाशादावपि परिणाम्युपादानत्वस्यावश्यकत्वात्।

न च ब्रह्मण एवातात्त्विकविकारसम्भवाद् न तत्कल्पनमिति वाच्यम्, तद्विषयकाज्ञान-परिणामत्वव्यतिरेकेण विकारेऽतात्त्विकत्वानिर्वाहात्। कार्यापेक्षितस्वसमानसत्ताकोपादानत्वे-नाप्यविद्योपादनत्वं सिद्ध्यति।

ननु भ्रमाधिष्ठानत्वेन ब्रह्मणो नोपादानत्वम्, अतीतासतोरनुपादानत्वेऽपि भ्रमाधिष्ठा-नत्वदर्शनात्, भ्रमाधिष्ठाने शुक्त्यादावुपादानत्वाव्यवहाराच्चेति चेत्, न; चैतन्यस्यैवाधिष्ठा-नत्वेनातीतादेरनधिष्ठानत्वात्। वृक्षादिषु पृथिवीत्वव्यवहाराभावेऽपि पृथ्वीत्वस्येव शुक्त्यादौ तदनपायात्। यदप्युक्तं मायोपादानमीश्वरनिमित्तं शुद्धं ब्रह्माधिष्ठानमिति पक्षेऽभिन्न-निमित्तोपादानत्वं नोपपद्यत इति तन्न, एकस्यैवाविद्योपहितत्वेनोपादानत्वस्याविद्या-परिणामेच्छाकृत्याद्याश्रयत्वेन निमित्तत्वस्यापि सम्भवात्।

ननु चैवं कुलालादिवदुपादानगोचरप्रयत्नादिमत्त्वं कर्तृत्वं भवति, तच्च कार्यस्य मिथ्यात्वेनोपपद्यते, कुलालादेरकल्पितं प्रत्येव कारणत्वदर्शनात्। रूप्यादिकं प्रति भ्रान्त-स्यान्यस्य वा कर्तृत्वादर्शनादिति चेत्, न; कुलालकार्यघटादावप्यकल्पितत्वस्यासंप्रतिपत्तेः, रूप्यादेरप्यकर्तृकत्वासिद्धेः, तत्रापि साक्षिणः कर्तृत्वाभ्युपगमात्। न ह्यदर्शनमात्रेण कर्त्रपलापः सम्भवति, त्वन्मतेऽपि सर्वज्ञकर्तुरसिद्ध्यापत्तेः। अत एव अधिष्ठानत्वं न कर्तृत्वम्, तथात्वेऽतिरिक्तोपादनत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्योक्तययोगभ्रान्त-

वदध्यासद्रष्टृत्वमपि न कर्तृत्वम्, भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्तृत्वायोगात्। नापि मायाविवद् व्यामोहकत्वमेव कर्तृत्वम्, व्यामोहनीयजीवादर्शने व्यामोहकत्वाभावात्, तद्दर्शने भ्रान्त्यापत्तेः। व्यामोहकत्वस्यारोपितत्वेनान्योऽन्याश्रयाच्च "नामरूपे व्याकरवाणि" इति श्रुत्यनुपपत्तेश्च, करवाणीति संकल्प्य मायाविनः कर्तृत्वाभात्। किन्त्विदं दर्शयानीत्यसंकल्प्य तस्य कर्तृत्वदर्शनात्, भ्रमाधिष्ठानत्वादिना सर्वज्ञालाभात् "जन्माद्यस्य यतः, शास्त्रयोनित्वात्" (ब्र. सू. १.२-३) इत्यादिसूत्रविरोधश्च।

उपादानगोचरप्रयत्नादिमत्त्वमपि कर्तृत्वं न सम्भवति, कल्पितं प्रति तदयोगादित्यपि निरस्तं वेदितव्यम्, उपादानगोचरप्रयत्नादिमत्त्वलक्षणकर्तृत्वस्य स्वात्म्यतादात्म्यवत् कार्यहेतुत्वस्य वा समर्थितत्वात्। मायाविवद् व्यामोहकत्वपक्षे व्यामुग्धजीवद्रष्टृत्वे भ्रान्तत्वापत्तिरिति, तदपि न दूषणम्, किन्तु भूषणमेव, भ्रान्तिज्ञस्याभ्रान्तत्वमेव। यदपि मायाविनः सङ्कल्पपूर्वककर्तृत्वादर्शनेन व्याकरवाणीति श्रुत्यनुपपत्तिरिति, तदपि तुच्छम्, तादृशसङ्कल्पादर्शनस्य मायाविन्यसम्प्रतिपत्तेः। यदपि जन्मादिसूत्रार्थमावश्यकस्फोटकशास्त्रयोनित्वसूत्रविरोध इति, तदपि न; मायावित्वेऽपि मायिकविश्वाकारमायासत्त्वांशपरिणामाधारतया सार्वज्ञ्यलाभात्। तथा च—"यतो वा इमानि भूतानि जायन्ते" इति "जनिकर्त्तुः प्रकृतिः" इति सूत्रप्रकृत्यर्थविहितपञ्चमीश्रुत्या "यत्प्रयन्त्यभिसंविशन्ति" इति स्थितिलयाधारत्वलिङ्गाद् ब्रह्मण उपादानत्वम्, "तदैक्षत, व्याकरवाणि" इति श्रुत्या च कर्तृत्वं सिद्ध्यति।

ननु 'पुत्रात् प्रमोदो जायते' इत्यादावनुपादाने पञ्चमीदर्शनात् प्रकृतिपदं कारणमात्रपरमिति चेन्न, "पशुना यजेत" इत्यादौ 'पशु'-शब्दस्य पशुमात्रवाचकत्वेऽपि "छागस्य वपाया अनुब्रूहि" इति वाक्यशेषानुसारेण पशुविशेषपरत्ववदत्रापि कारणमात्रार्थत्वेऽप्युपादानपरत्वोपपत्तेः। न च महाभाष्ये "गोलोमाजलोमविलोमभ्यो दूर्वा जायन्ते। अपक्रामन्ति तास्तेभ्यः" इत्यादिना लोमादीनां दूर्वादीन् प्रत्यवधित्वम् "ध्रुवमपायेऽपादानम्" इत्यनेनैवोपादानसंज्ञासिद्ध्या सूत्रमिदमनारम्भणीयमिति प्रत्याख्यातं कैयटेऽपि; अपक्रमणावाधित्वे लोमादिषु कार्यस्य प्रतीतिर्न सम्भवतीत्याशङ्क्य, बिलान्निष्क्रामतो दीर्घभोगस्य भोगिनोऽविच्छिन्नतया तत्रोपलब्धिरित्यवधित्वमेव तत्रोपपादितमिति वाच्यम्, अवधिपञ्चमीपक्षेऽपि 'शृङ्गाच्छरः' इत्यादौ नियामकाभावाद् निमित्तपरत्वेऽपि प्रकृते नियमसत्त्वाद् निमित्तपरत्वाभावात्। अत एव 'एतस्मादात्मन आकाशः संभूतः' इत्यादावपि प्रकृतिपञ्चमी, "सच्च त्यच्चाभवत्" (तै० उ० २।६) इति वाक्यशेषेण; "सोऽकामयत" (तै० उ० २।६) इत्यन्यवाक्येन च प्रतीतिसामानाधिकरण्यस्य नियामकत्वात्।

न च "स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, तत् सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च, त्यच्चाभवत्" इत्यादिश्रुत्या सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन जगत्सृष्टित्वानुपपत्त्या परमेश्वरस्य सत्त्वादिगुणाभिव्यक्तिपरत्वेन ब्रह्मोपादानत्वेनास्याः प्रामाण्यमन्यथाभवदिति कथमुपपद्यते ? नहि शुक्ती रूप्यमभवदित्युच्यत इति वाच्यम्, सदादिभवनस्यैव सृष्टिरूपतया तदानन्तर्य्याभावात्। 'तदनुप्रविश्य' इत्यस्य तु 'मुखं व्यादाय स्वपिति' इवोपपत्तिः। न चेदं सर्वमसृजदिति पौनरुक्त्यम्, निमित्तत्वमात्रभ्रान्तिव्युदासपरत्वात्। न च 'शुक्ती रूप्यमभवत्' इति व्यवहारादर्शनं शुक्तेरनुपादनप्रयुक्तमिति वाच्यम्, अदर्शनमात्रस्य व्यतिरेकाप्रयोजकत्वात्। एवमेव 'तद्भूतयोनिम्' इत्यत्र योनिशब्दोऽप्युपादानत्वं बोधयति। 'योनिष्ट इन्द्र सदने' इत्यादौ कदाचिद् निमित्ते तत्प्रयोगेऽपि, मुख्यस्तु शब्दस्वरसादिति न्यायेनौत्सर्गिकमुख्यार्थत्यागस्य प्रकृतेऽयोगात्। "असद् वा इदमग्र आसीत्, ततो वै सदजायत, सर्वं खल्विदं ब्रह्म, तज्जलानि" इति श्रुतयश्चोपादानत्वे प्रमाणम्। न च 'गुरुः स्याम्' इति संकल्प्य शिष्यसंपादनवत् 'बहु स्याम्' इति संकल्प्य तेजःप्रभृतिसर्जनं नोपादानत्वे तन्त्रमिति वाच्यम्, स्यामित्यनेन 'सुखी स्याम्' इतिवद् भाविसत्त्वोक्तेरीश्वरभिन्नानां तेषां पूर्वमेव सिद्ध्या तत्र संकल्पासंभवेन 'गुरुः स्याम्' इतिवत् तदनुपपत्त्या कार्यभावापत्तेरेव विवक्षणीयत्वात्। न चेक्षितृत्वस्रष्टृत्वादिना चेतनत्वेनावगतानां तेज-आदीनां सृज्यत्वानुपपत्त्या तदात्मना भवनं नोपपद्यत इति वाच्यम्, 'तत्तेज ऐक्षत' इत्यत्र तेजआद्यवच्छिन्नचैतन्यस्य विवक्षणेनावच्छेदकतेज-आदिसर्जने बाधकाभावेन सृज्यत्वोपपत्तेः।

### श्रीमद्भागवते तत्त्वलक्षणम्

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥ इति।

अद्वयं यज्ज्ञानम् सर्वविधभेदशून्यं यत् स्वप्रकाशं ज्ञानं तदेव तत्त्वमिति तत्त्वविदो वदन्ति। तदेवाद्वितीयत्वात् त्रिविधपरिच्छेदशून्यत्वेनानन्तम्, ज्ञानत्वादवेद्यत्वे सत्यपरोक्षत्वात् स्वप्रकाशम्, अद्वितीयत्वादेव सर्वोपद्रवविवर्जितत्वात् परमानन्दरूपम्, त्रिकालाबाध्यत्वात् परमसत्यं च। तदेवानतिशयबृहत्त्वाद् ब्रह्मात्मनामप्यात्मत्वात् परमात्मा, अचिन्त्यानन्तभगैः कल्याणगुणगणैश्च सेव्यमानत्वाद् भगवानित्यप्युच्यते।

यत्तु कैश्चिद् ब्रह्मतायां ज्योतीरूपतयैतस्यामूर्तता, भगवत्तायां च ज्योतिष्मत्त्वेन मूर्तता, प्राकृतगुणगणराहित्येन निर्विशेषता, अप्राकृतानन्तकल्याणगुणगणाकरतया सविशेषता

च प्रोच्यते। तन्न; 'तत्त्वं यज्ज्ञानमद्वयम्' इति तत्त्वलक्षणस्यैकविधत्वेन तदनुपपत्तेः। एतेन किरणादित्यवद् ब्रह्मभगवतोर्भेदः, कृष्णादित्यस्य किरणरूपं ब्रह्मेत्याद्युक्तयोऽपि भावमात्र-मूलिकाः, न तत्त्वानुसारिण्यः, तथात्वेऽनौपनिषदत्वापत्तेः। श्रीमद्भागवते च—

"यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्"

इति कृष्णस्य पूर्णब्रह्मत्वोक्तिः, "अथातो ब्रह्मजिज्ञासा" (ब्र०सू० १।१।१) इति चतुर्लक्षण्याम् उत्तरमीमांसायामपि ब्रह्मण एव विचार्यत्वोक्तिरिति तस्यैवौपनिषदत्वमपि स्पष्टमेव।

अपि च—ज्योतिर्ज्योतिष्मतोर्भेदे स्वगतभेदप्रसक्तया 'अद्वयम्' इत्यस्यानौपचारि-कत्वानुपपत्तिः। तयोर्भेदाभावे धर्मधर्मिभावश्च निर्मूलः। विरुद्धत्वान्न स्वाभाविको भेदाभेदः सम्भवदुक्तिकः, औपाधिकश्चातात्त्विक एवेति तन्मूलकवादोऽपि तथाविध एव। अचिन्त्योऽपि मनोवचनातीतत्वादनन्तत्वाद् वा, अनिर्वचनीयत्वाद् वा ? नाद्यौ, तथानुपगमादेव; नान्त्यः, तथात्वे सिद्धान्तहानिः।

"एकमेवाद्वितीयम्" इति त्रिविधभेदनिषेधिका श्रुतिस्तु स्वगतभेदमपि निषेधत्येव। "सदेव सोम्येदमग्र आसीत्" इति श्रुताविदमर्थस्य सदात्मकत्वावधारणेऽपि 'एकमेवाद्वितीयम्' इति विशेषणत्रयोपादानं त्रिविधभेदवारणायैव, अन्यथा तदानर्थक्यापत्तिः। एवमेव "नेह नानास्ति किञ्चन, नात्र काचन भिदाऽस्ति" इति श्रुत्योः 'किञ्चन-काचनशब्दाभ्यां नानाभि-दादिपदव्यवहृतस्य भेदस्य सर्वविधस्यैव निषेधः। 'नात्र कश्चन घटः' इत्युक्तौ घटत्वावच्छिन्न-प्रतियोगिताकस्यैव निषेधस्यावगमदर्शनात्।

अपि च, ज्योतिष्मदादित्यस्थानीयाद् भगवतः सकाशाद् ज्योतिःस्थानीयस्य ब्रह्मणो न्यूनत्वे ब्रह्मत्वमेव नोपपद्यते। सङ्कोचे मानाभावेन "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतौ 'अनन्त-' पदसमभिव्याहारेण च निरतिशयबृहतोऽर्थस्यैव ब्रह्मशब्दार्थत्वात्। ततो यत्रातिशयकल्पना-परम्परायां वाचस्पतेरपि मतिः श्राम्येत्, तस्याः समाप्तावेवानतिशयबृहत्त्वोपपत्त्या यस्यैव भगवतः कृष्णस्य वानतिशयबृहत्त्वमुच्यते, तस्यैव ब्रह्मत्वोपपत्तिः।

इयांस्तु विशेषः—आदित्यस्थानीयस्य ज्योतिष्मतः किरणानां ज्योतिषां प्रदेशेषु भवन्मतेऽविद्यमानत्वेन देशपरिच्छेदः, अस्मन्मते तु भगवतः कृष्णस्य वा सर्वविधपरिच्छेद-राहित्येनानतिशयबृहत्त्वोपपत्त्या तत्रैवानुपचारेणाद्वयत्वानन्तत्वब्रह्मत्वाद्युपपत्तिः। एवमेवा-प्राकृतगुणसत्त्वेऽपि प्राकृतगुणराहित्याभिप्रायेण निर्गुणत्वाभिधानेऽप्राकृतकायसत्त्वेऽपि प्राकृत-

कायराहित्यमात्रेण कायत्वाभिधाने निष्क्रियत्वाव्रणत्वादिशब्दानामपि तथार्थत्वापत्तिः। न च तत्र सगुणत्वादिश्रवणं विशिष्यते, सक्रियत्वादिश्रवणस्यापि सत्त्वे तदनुपपत्तेः। तथा चानिर्वाच्याचिन्त्यदिव्यलीलाशक्त्याप्राकृतदिव्यगुणगणाद्यङ्गीकारेणैव निर्गुणस्यापि सगुणत्वाद्युपपत्तिः, "निर्गुणं मां गुणाः सर्वे भजन्ति निरपेक्षकम्" इत्याद्युक्तेः।

न च सधनस्य धननिरपेक्षत्वेऽपि निर्धनस्य निरपेक्षानुपपत्तिवत् सगुणस्य गुणनिरपेक्षत्वेऽपि निर्गुणस्य गुणानपेक्षतानुपपत्तिरिति वाच्यम्, तत्र गुणकृत्याभावेन तदुपपत्तेः। निर्धनस्यानाप्तकामस्य भवत्यपेक्षा, पूर्णकामस्य भगवतस्तु गुणाद्यनपेक्षता युज्यत एव। तथा हि—ब्रह्मणि परमात्मनि भगवति महत्त्वातिशयाधायकत्वेनानन्दातिशयाधायकत्वेन वानर्थनिवर्हकत्वेन वा गुणानां नोपयोगः। तस्य निरतिशयबृहत्त्वात्, निरतिशयानन्तानन्दरूपत्वात्, नित्यनिरस्तसमस्तानर्थसत्ताकत्वाच्च नेतोऽन्यो गुणोपयोगः। अतस्तत्र गुणकृत्याभावेन निर्गुणोऽपि निरपेक्ष एव।

यत्तु कैश्चिन्निराकारस्य प्रेमानास्पदत्वमुच्यते। तदप्यज्ञानविजृम्भितम्; परमाभिमतसगुणसाकारप्राप्तिसुखस्यापि निराकारत्वे सत्यपि प्रेमास्पदत्वदर्शनात्। तं निर्गुणं निरपेक्षं गुणाः स्वगुणत्वाय भजन्ति। यथा कौस्तुभमणेरधिभूषणाय तत्तपस्तुष्ट इव तमङ्गीकरोति, न कण्ठभूषणाय। एवमेव गुणानां गुणत्वायैव तत्तपस्तुष्ट इव तानङ्गीकरोति, न त्वस्य सगुणत्वाय, अनर्थनिबर्हणाय, महत्त्वातिशयानन्दातिशयाधानाय वा। श्रीधरस्वाम्यादिभिरपि तत्त्वश्लोके ब्रह्मणि परमात्मनि भगवति न वैलक्षण्यमङ्गीकृतम्, निर्मूलत्वाच्छास्त्रयुक्तिविरुद्धत्वाच्च।

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥
(शिशुपालवध० १।२)

इति न्यायस्य नात्र प्रसक्तिः, सर्वान्तरतमे ब्रह्मणि भगवति परमात्मनि सन्निधानासन्निधानादिकृतस्य तारतम्यस्यानुपपत्तेः। लक्षणैक्येन लक्ष्यवैलक्षण्यानुपपत्तेरेकत्रैवानतिशयबृहत्तमत्वेनात्मनामप्यात्मत्वेन गुणगणसेव्यत्वेन च ब्रह्म-परमात्म-भगवत्त्वाद्युपपत्तेश्च।

सकलसच्छास्त्रतात्पर्यगोचरस्याशेषविशेषातीतस्य, निर्गुणस्य, निराकारस्य, सच्चिदानन्दघनस्य, अचिन्त्यशक्त्यानन्तकल्याणगुणगणाकरस्य, अनन्तकोटिकन्दर्पसुन्दरस्य, शक्रशतकोटिविलासस्य, नभश्शतकोटिप्रविस्तारस्य, वायुशतकोटिविपुलबलस्य, रविशतकोटिप्रखरप्रकाशस्य, शशिशतकोटिसुशीतलस्य, कालशतकोटिदुस्तरस्य, अमितकोटितीर्थपावनाभिधानस्य,

मेरुशतकोटिनिश्चलस्य, सिन्धुशतकोटिगम्भीरस्य, कामधेनुशतकोटिकामपूरकस्य, शारदाशतकोटिचतुरस्य, विधिशतकोटिसृष्टिनिपुणस्य, विष्णुशतकोटिपालकस्य, रुद्रशतकोटिसंहारकस्य, धनदशतकोटिसमैश्वर्यस्य, मायाशतकोटिदुर्घटघटनापटीयसः, शेषशतकोटिधारकस्य भगवतोऽनुपमत्वमेव ।

वस्तुतो यथा शतकोटिखद्योतैरपि नादित्यस्योपमेयत्वम् , तथैवानन्तकोटयादित्यैरपि प्रकाशप्राखर्यादौ भगवतो नोपमेयत्वं सम्भवति, तत एवाशेषविशेषातीतस्यानन्तगुणगणाकरस्य भगवतः संस्तवे मनोवचनातीतत्वादनन्तगुणत्वाच्च ब्रह्मादीनामप्यसामर्थ्यं श्रूयते। भक्तकल्पपादपस्य सर्वेऽपि गुणा भक्तोपयोगिन एव। सर्वशास्त्रपरमतात्पर्यविषयस्य, कर्मोपासनतत्त्वज्ञानादिसमाराध्यस्य भगवत एव मुक्तोपसृप्यत्वमपि तत्र तत्रोक्तमेव। "मुमुक्षुर्वै शरणमहं प्रपद्ये, यमेवैष वृणुते, तमेव चाद्यं पुरुषं प्रपद्ये, आत्मक्रीड आत्मरतिः" इत्यादिश्रुतिस्मृतिभिर्मुमुक्षूणां मुक्तानां चाप्यस्यैव प्रपदनीयताबोधनात् ।

निर्दृश्यनिर्विशेषब्रह्मसाक्षात्काराय सगुणसाकारस्य भगवतोऽनन्तसौन्दर्यमाधुर्य-सारसर्वस्वमयी श्रीमूर्तिर्ध्येयत्वेनोक्ता। तथान्ते प्रहसितस्य ध्यानमुक्त्वा तत्रैव "भक्त्यार्द्रयाऽर्पितमना न पृथग् दिदृक्षेत्" इत्युक्तम्। ततश्चोक्तम्—

एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥

अस्यार्थः श्रीधरस्वामिरीत्या—एवं ध्यानमार्गेण हरौ प्रतिलब्धो भावः प्रेम येन सः। तथा भक्त्या द्रवद् हृदयं यस्य सः। तथा प्रमोदादुद्गतानि पुलकानि यस्य सः। तथा औत्कण्ठ्येन प्रवृत्तया बाष्पस्याश्रुणः कलया मुहुरर्द्यमान आनन्दसम्प्लवे निमज्जमानो दुर्ग्रहस्य भगवतो ग्रहणे बडिशं मत्स्यवेधनमिवोपायभूतं चित्तमपि ध्येयाद् वियुङ्क्ते। तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ।

यथा दुर्ग्रहस्य मत्स्यस्य ग्रहणाय बडिशः प्रयुज्यते, तथैव निर्गुणस्य निर्विशेषब्रह्मणो ग्रहणाय चित्तं प्रयुज्यते। तदर्थमेव निर्बीजः सबीजश्चेति द्विविधो योगो भवति। तत्र—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥
(श्रीमद्भगवद्गी० ६।२६)

इति निर्बीजयोग उक्तः। सबीजे तु परमानन्दमूर्तौ हरौ ध्यायमानेऽयत्नत एव चित्तोपरमो भवति ।

तदुक्तं श्रीमद्भागवते—

हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते ।

इति ( ३।२५।३६ )

चित्तस्य विषयाद् वियोजनमतीव दुष्करं भवति । तत्र पूर्वं भगवत्सौन्दर्यमाधुर्या-द्याकृष्टतयाऽलौकिकेभ्यो विषयेभ्यश्चित्तवियोजनमनायासेन सिद्धयति । परमानन्दरससारसर्वस्व-मयाद् मनःपरिकल्पिताद् भगवतः श्रीविग्रहाद् जनितप्रेमानन्दोद्रेकेण च प्रयत्नशैथिल्यम् , प्रयत्नशैथिल्येन च ध्येयो ग्रहीतुं न शक्यते । ध्येयाकारवृत्तिव्यापारस्य प्रयत्नसाध्यत्वाद् ध्यानवृत्त्यभावे ध्यानाश्रयस्य ध्यातुरपि सत्त्वं न सिद्धयति । तथा च ध्यानाश्रयस्य ध्यातु-र्ध्यानविषयस्य ध्येयस्य चाभावे ध्यानमयं चित्तमपि विषयाश्रयशून्यं सत् तैलवर्त्त्यभावे यथा दीपशिखा प्रविलीयते महाभूतमये ज्योतिषि, तथैव ब्रह्मणि प्रविलीयते । एवं प्रयत्न-शैथिल्येन ध्येयरूपविषयस्य ग्रहणेऽसमर्थत्वात्, अन्यस्य विषयस्य च पूर्वमेव त्यक्तत्वाद् निर्विषयं भवति चित्तम् । ध्येयसम्बन्धं विना ध्यातर्यवस्थानासम्भवाद् निराश्रयं च भवति ।

न च पूर्ववत् पुनरपि शब्दादिस्तस्य विषयः सम्भवति, परमानन्दानुभवेन ततो विरक्तत्वात् । ततो वृत्तिरूपतां परित्यज्य निर्वाणम् = लयं गच्छति = ब्रह्माकारेण परिणमते, अर्चिर्ज्वालाश्रयविषयापगमे महाभूतज्योतीरूपेण परिणमते । तदानीमव्यवधाने ध्यातृ-ध्येयविभागशून्यम् , एकमखण्डमात्मानं समनुगतमीक्षते, प्रतिनिवृत्तदेहाद्युपाध्याकारगुण-प्रवाहत्वात् ।

एवं सम्प्रज्ञातस्य निरोधे प्रविलये सति सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलया-दासंस्कारमात्रा वृत्तिरुदेति । तस्यां 'नेति नेति' इति पर्युदसनाद् निर्बीजः समाधिर्भवति । तदा पुरुषो वृत्तिसारूप्यमपहाय स्वरूपनिष्ठो भवति । तदुक्तम्—

"मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ।

आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ इति ।

स च सुप्तोत्थित इव न पुनः संसरति, महावाक्यजन्यया ब्रह्माकारया मनसश्चरमया वृत्त्या अविद्यासहितस्य मनसो निवृत्तत्वात् । सुषुप्तावविद्याशेषत्वात् पुनः संसर-णम् । अत्र तु तस्यानिवृत्तिरिति विशेषः । यथा जन्मनैवाकाशपूर्णस्य घटस्य रजोधूमा-दिभिरागन्तुकैरुपाधिभिरेवाकाशराहित्यं भाति, तथैव जन्मनैव ब्रह्माकारस्य चित्तस्य प्रपञ्चाकारतायामेव ब्रह्मानाकारता प्रतीयते, विषयापगमे तु चित्तस्य स्वाभाविकी ब्रह्मा-

कारतैव भाति। श्रीजीवगोस्वामिविश्वनाथचक्रवर्त्यादिरीत्या 'पृथङ् न दिदृक्षेत्' इत्युक्त्या, अतः पुरुषार्थसारादन्यस्य वस्तुनोऽसम्भवात् पृथग् ज्ञातुं द्रष्टुं च नेच्छेत्। भगवत्स्वरूपसौन्दर्य-माधुर्यास्वादानन्दसंदोह एव परमः समाधिः। योगमहागह्वराद् योगिनोऽप्याकृष्य भक्ति-रससुधामहार्णवे निमज्जयितुमेव योगाङ्गत्वेन परमभक्तिरूपभगवत्स्वरूपसौन्दर्यध्यानवर्णनम्। अत एव योगज्ञानादिनिष्ठा अपि भगवतः स्वरूपे रज्यन्ते।

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया।
गृहीतचेता राजर्षे आख्यानं यदधीतवान्॥
स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽ-
प्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।
अद्वैतवीथीपथिकैरुपास्याः स्वाराज्यसिंहासनलब्धदीक्षाः।
शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेन॥

एतद्रीत्या कश्चिदतिमन्दो महदननुगृहीत एवैतां ध्यानमाधुरीमुपभुज्याप्यलब्धा-स्वादनिष्ठो जिहासति। स एव वियुङ्क्ते चित्तं श्रीविग्रहात्। भक्तिरसवञ्चितः स भक्त्यैव दीयमानं निर्दुःखं प्रत्यगात्मानुभवात्मकं मोक्षं प्राप्नोति, न तु ब्रह्मानन्दानुभवात्मकं मोक्षं प्राप्नोति। एतद्रीत्या श्लोकार्थोऽपीत्थम्—

हरौ भगवति मनोहरत्वाद् भगषट्कत्वाद् माधुर्यैश्वर्यपूर्णेऽपि प्रतिलब्धभावः श्लेषेण प्रतिरूपतयैव, न त्वनुरूपतया। द्रवद्धृदयोऽपि उत्पुलकोऽपि बाष्पकलया मुहुरर्द्यमानोऽपि। तस्मादपि स्वरूपात् चित्तबडिशं वियुङ्क्ते वियोजयतीति।

यद्यपि 'ज्ञानं च मयि संन्यसेत्' इति ज्ञानस्य संन्यासविधानं दृश्यते; तथापि भक्ति-संन्यासविधानं न कुत्रापि दृश्यते, प्रत्युत 'भक्त्यार्द्रयाऽर्पितमना न पृथग् दिदृक्षेत्' इति निषेधसद्भावादयं मन्दधीः स्वेच्छयैव वियोजयति। वियुञ्ज्यादिति विध्यप्रयोगाद् विषय-रसौत्कण्ठ्यदूरीकरणार्थं भगवन्माधुर्ये निःक्षिप्तं यत् चित्तं तस्य तन्माधुर्यौत्कण्ठ्यस्यापि निवृत्तये तच्चित्तं ततोऽपि निवर्तयति। शनकैरित्यनेन सम्यग् युक्तत्वे वियोजनं दुर्घटमेव। अतः शनैः शनैश्चतुष्पञ्चवारेण सप्ताष्टवारेण वावश्यं वियोजयति।

बडिशमश्मसारमयं भवति। तन्न नवनीतादिवद् द्रुतं भवति, किन्तु वह्नितापा-धिक्यात् किञ्चिद् द्रवदेव तत्क्षण एव पुनः कठोरमपि भवति। अत एव 'द्रवद्धृदयः' इत्युक्तम्, न तु 'द्रुतहृदयः' इति।

बडिशं यथा मत्स्यग्रहणार्थं गङ्गादि तीर्थजलस्नानपरमपि कुटिलमरसं च भवति, मीनलोभनमिष्टपिष्टखण्डावृतमुखत्वाद् दाम्भिकं च, तथैव विगीतयोगिनश्चित्तं तीर्थपूतमपि कुटिलं कठोरं च भवति, भगवदाकर्पकध्यानभक्त्यावृतमुखत्वाद् दाम्भिकं च, "धर्मः प्रोज्झितकैतव..........." इत्यत्र मोक्षाभिसन्धेरपि कैतवत्वेन व्याख्यानात्। कैवल्येच्छादोषादेव सर्वश्रेष्ठापि ध्यानरूपा श्रीभक्तिदेवी योगाङ्गत्वेनोपासितापि पश्चात् त्यक्ता। भागवतोक्तचित्तबडिशदृष्टान्तेन बडिशजीवधीवरत्वमस्य योगिनो ध्वनितम्। योगिचित्तबडिशस्य स्पर्शो भगवतोऽपि कष्टकरः। तत एव भगवानेव तस्मै हारिततादृशचित्तबडिशाय योगिधीवराय प्रत्यगात्मानुभवाख्यमेव मोक्षं ददाति, न ब्रह्मानन्दात्मकम्। यस्तु गीतोक्तो योगी भगवद्ध्यानमजहदेव दृष्टः, तस्मै तूभयमपि ददाति। योग्ययोगादिनिष्ठस्तु न भगवन्मधुररूपात् चित्तं वियोक्तुमीष्टे। तदुक्तम्—

धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति।
मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा॥ इति।

श्रीमद्भागवते ( ११।२९।५ ) उद्धवेन चोक्तम्—

तं त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद् विसृजेत को नु। इति।

श्रीनारदेनाप्युक्तम्--

स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः। इति।

किञ्च, अर्पितमना भगवते मनः समर्प्य तस्मिन् मनसि स्वत्वाभावात् कथं तस्माद् वियोजयेत्? कथं वा दत्तापहारी भवेत्? भगवानपि भक्तानामेव हृदि तिष्ठति, न योगिनाम्।

भक्त्या गृहीतचरणः परया च तेषां नापैति नाथ हृदयाम्बुरुहात् स्वपुंसाम्।
येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः॥
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥
जीवन्मुक्ताः प्रपद्यन्ते पुनः संसारवासनाम्।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः॥

इति वासनाभाष्योक्तेश्च।

नानुव्रजति यो मोहाद् व्रजन्तं हरिमीश्वरम्।
ज्ञानाग्निदग्धकर्मापि स भवेद् राक्षसाधमः॥

इत्यादिवचनैस्तस्य पतनं जीवन्मुक्त्यभावश्च प्रसज्यते ।

वस्तुतस्तु भगवद्व्यतिरिक्तवस्तुदर्शनज्ञानादिकमेव 'न पृथग् दिदृक्षेत्' इत्यनेन निषिद्धम्, "आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्" इत्युक्तेः । युगपत् सर्वस्वरूपचिन्तनासम्भवेन यथा सुस्मितमुखारविन्दचिन्तनावेशवशात् पादारविन्दचिन्तनत्यागोऽवश्यंभावी, सौगन्ध्यचिन्तनकाले सौन्दर्यचिन्तनत्यागः, सौरस्यचिन्तनकाले तस्यापि त्यागः। शौर्यवीर्यप्रतापसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यचिन्त्यानन्तकल्याणगुणगणचिन्तनकाले श्रीविग्रहचिन्तनत्यागः प्रसज्यत एव। न तावता तस्यापराधत्वम्। तथैव भगवतो निर्गुणस्वरूपचिन्तनेऽपि न दोषः, "निर्गुणं मां गुणाः सर्वे भजन्ति निरपेक्षकम्" इत्युक्तिदिशा तस्य गुणैरप्याराध्यमानत्वात् ।

यथा कौस्तुभादीनां भगवदलङ्काराणां यद्यपि लोकोत्तरं माहात्म्यम्, तथापि भगवदङ्गानि तेषामप्यलङ्कारभूतानि । "भूषणभूषणाङ्गम्, कण्ठं च कौस्तुभमणेरधिभूषणार्थम्" इत्याद्युक्तेः । यो भगवान् त्रिपुटीदशायां ध्येयरूपेण भासते, स एव ध्यातृध्यानादित्रिपुट्यभावदशायां तत्साक्षिनिर्विशेषपरब्रह्मरूपेण भासते । तथा च भगवदवमानकल्पना वराकी क्व समुदेति? तस्यापराधत्वे तु पतनमेव स्यात् । इह तु तस्य जीवन्मुक्तिवर्णनं दृश्यते। अत एव रसिका अप्याहुः—यथा विषयिणां विषयानादराभावेऽपि निद्रावशात् तत्सेवने शैथिल्यं स्यात्, तथा भगवतः श्रीविग्रहाद्यनादराभावेऽपि मुक्तिवासनावशात् तद्धारणे शिथिलप्रयत्नो भवतीति तस्य जीवन्मुक्तिवर्णनं सङ्गच्छते ।

वस्तुतस्तु भगवत्स्वरूप-सौन्दर्य-माधुर्य-रसामृतावगाहनजनितप्रेमानन्दसमुद्रेकवशादेव यथा कण्ठावरोधो वाक् च गद्गदा जायते, तथैव चित्तप्रयत्नशैथिल्यादेव ध्येयाकारवृत्त्यजननेन ध्येयास्फुरणं भवति त्यागप्रयत्नमन्तरैव । अन्यत्र सर्वविषयाभानं महता प्रयत्नेनापि दुष्करम्, इह तु प्रेमोद्रेकजनितप्रयत्नशैथिल्येनैव तत् सम्पद्यते । तदानीमेव जिज्ञासोर्महावाक्याद्यभ्याससंस्कारवतोऽनायासेन भगवत एव निर्गुणस्वरूपसाक्षात्कारो जायते। ज्ञानिनां चापि पुनः पुनः सगुणनिर्गुणस्वरूपमाधुर्यानुभूतौ न कापि बाधा, निर्गुणस्वरूपसाक्षात्कारानन्तरमपि सगुणसाकारस्वरूपगुणमाधुर्यानुभवे बाधाभावात्। अत एव "स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारः" इत्याद्युक्तयः सङ्गच्छन्ते । न च तदद्वैतसिद्धान्तेन विरुध्यते ।

तदुक्तम् त्रिपुरारहस्ये—

यत्सुभक्तैरतिशयप्रीत्या कैतववर्जनात् ।
स्वभावस्य स्वरसतो ज्ञात्वापि स्वाद्वयं पदम् ।
विभेदभावमाहृत्य सेव्यतेऽत्यन्ततत्परैः ॥ इति ।

बोधसारेऽपि—

पारमार्थिकमद्वैतं द्वैतं भजनहेतवे ।
तादृशी यदि भक्तिः स्यात् सा तु मुक्तिशताधिका ॥
द्वैतं मोहाय बोधात् प्राग् जाते बोधे मनीषया ।
भक्त्यर्थं भावितं द्वैतमद्वैतादपि सुन्दरम् ॥

एवं ज्ञानवतां सगुणब्रह्मसेवनं निर्गुणब्रह्मानुभवश्च तुल्य एव ।

प्रियतमहृदये वा खेलतु प्रेमरीत्या
पदयुगपरिचर्यां प्रेयसी वा विधत्ताम् ।
विहरतु विदितार्थो निर्विकल्पे समाधौ
ननु भजनविधौ वा तुल्यमेतद् द्वयं स्यात् ॥ इति ।

व्यवहारे तु सगुणस्याचिन्त्यकल्याणगुणगणाकरस्य भजनमेव शोभावहम् ।

विश्वेश्वरोऽपि सुधिया गलितेऽपि भेदे
भावेन भक्तिसहितेन समर्चनीयः ।
प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते
चैलाञ्चलव्यवहितेन निरीक्षणीयः ॥ इति ।

अत एव मुधैव "एवं हरौ भगवति प्रतिलब्धभावः" इत्यस्यान्यथावर्णनम् । 'वियुञ्ज्यात्' इति विध्यभावेऽपि प्रयत्नशैथिल्येन ध्यात्राद्यभावभासकस्वप्रकाशब्रह्मानुभवः सिद्ध्यत्येव, तन्निन्दनं तु दूषणमेव, भगवतो निर्गुणस्वरूपस्यापि सगुणस्वरूपस्येवाराध्यत्वाविशेषात् । यथा कस्यचिदन्धभक्तस्य गुरोः पादयोरन्यतरस्य भेदबुद्ध्या सेवनम्, अपरस्य ताडनं मौर्ख्यमेव, तद्वदिहाप्यनुसन्धेयम् ।

यदुक्तम्—'ज्ञानञ्च मयि संन्यसेद् इति ज्ञानसंन्यासवद् भक्तिसंन्यासविध्यभावात्, तदयुक्तम्' इति । तदपि न; यतो महावाक्यजन्यब्रह्माकारवृत्तिरूपस्य ज्ञानस्यानित्यत्वेन तत्त्याग उचित एव, 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्' इति पुरुषसाक्षात्काराद् गुणवैतृष्ण्यस्योक्तत्वात् ।

सत्त्वपुरुषान्यताख्यातिरपि परिणामिनी प्रतिसङ्क्रमणशीला शान्ता च। तद्विपरीता चितिश्चाप्रतिसङ्क्रमणशीला, अपरिणामिनी अनन्ता चेति ख्यातिरपि हेयैव। न चैतावता पुनरपि सत्त्वपुरुषविवेकख्यातिनाशात् पुनरप्यविवेको जायते, तद्धेतोरविद्यायाः समूलकाषं कषितत्वात्, स्वरूपभूतज्ञानस्याविनाशित्वाच्च। एवमेव ध्यानवृत्तिरूपाया भक्तेस्त्यागेऽपि निरतिशयपरप्रेमास्पदे भगवति नित्यनिरतिशयप्रेमलक्षणाया भक्तेरनपायात्।

न च 'वियुङ्क्ते' इति लिङादिविधिप्रत्ययाभावाद् न विधित्वमिति वाच्यम्, 'इडो यजति', 'तनूनपातं यजति' इत्यादिषु लट्प्रयोगेऽपि विध्यभ्युपगमात्, 'द्रष्टव्यः' इति विधिप्रत्ययसत्त्वेपि विध्यनभ्युपगमात्, परतन्त्रे ज्ञाने विध्यसम्भवात्, पुरुषतन्त्रे कर्मण्येव विधिसम्भवाच्च। तथा च भगवद्व्यतिरिक्तवस्तुप्राप्तये भगवद्ध्यानत्याग एव निन्दितः,

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥

इत्युक्तेः।

मुखचन्द्रचिन्तनार्थं पादारविन्दचिन्तनत्यागवद् निर्गुणस्वरूपचिन्तनार्थं सगुणस्वरूपत्यागस्य तत्र तत्रोक्तत्वात्। यथा—

तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत्। इति।

यदपि च—"अर्पितमनाः कुतस्तदपहरणे दत्तापहारेण न प्रत्यवेयात्" इति, तदपि न; तदपोहस्य विहितत्वात्। यथा पादारविन्दसमर्पितस्य मनसः पुनर्मुखारविन्दसमर्पणे न दत्तापहारदोषः। यथा—

एकैकशोऽङ्गानि धियाऽनुभावयेत् पादादियावद्धसितं गदाभृतः।
जितं जितं स्थानमपोह्य धारयेत् परं परं शुद्ध्यति धीर्यथा यथा ॥

इत्युक्तत्वात्। तथैव भगवत एव सगुणस्वरूपस्येव निर्गुणस्वरूपस्य ध्याने तदपोहे दोषाभावात्।

एतेन 'बडिशजीविकासादृश्येन तस्य निकर्षो ज्ञापितः' इत्यप्यपास्तम्, चित्ते बडिशारोपस्य भक्तिरसलम्पटे चित्ते लाम्पट्यारोपवद् अदोषत्वात्। "भक्तिः सिद्धेर्गरीयसी, नैकात्मतां मे स्पृहयन्ति केचित्" इत्यादिकमपि न ब्रह्मज्ञानेन विरुध्यते, परमहंसत्वसिद्धये ज्ञानिनामपि भक्त्यपेक्षत्वे बाधाभावात्। नहि तदर्थं द्वैतसत्त्वाद्वैतासत्त्वस्यावश्यकता, पारमार्थिकाद्वैतव्यावहारिकद्वैताभ्यां तदुपपत्तेः। अत एव 'प्रतिलब्धभावः' इत्यादौ न भक्त्याभासवर्णनम्, गौणार्थकल्पने प्रमाणाभावात्।

श्रीवीरराघवीयव्याख्यायां श्रीधरीयव्याख्यायामिव भक्तेरेव वर्णनं निरूपितम्, न भक्त्याभासस्य। तथा हि—एवं दिव्यविग्रहचिन्तावसाने दिव्यात्मस्वरूपचिन्ता तत्प्रकारत्वेन प्रत्यगात्मचिन्ता च कार्येत्याह। प्रतिलब्धो भावः प्रेमातिशयो येन, भक्त्या इव द्रवद् हृदयं यस्य, प्रेमार्द्रादुद्गतानि पुलकानि यस्य, औत्कण्ठ्याश्रुकलया मुहुरर्द्यमान आनन्द-सम्प्लवे निमज्जमानः, चित्तवडिशं मत्स्यवन्धनं दुर्ग्रहस्य भगवतो ग्रहणे मत्स्यबन्धनमिवोपायपूतं चित्तमपि ध्येयाद् भगवद्विग्रहाच्छनकैर्वियुञ्ज्यादिति।

श्रीधरस्वामिरीत्या तु प्रेमोद्रेकात् प्रयत्नशैथिल्याद् वियोगानुकूलव्यापाराभावेऽपि ध्येयाकारवृत्त्युदयानुकूलव्यापाराभावादेव ध्येयास्फुरणेन स्वतः सिद्ध्यति तद्वियोगः। श्रीवीर-राघवीये व्याख्याने चित्तस्य वडिशं चित्तापहारिणं भगवद्विग्रहं प्रत्यपादानस्यैव कर्मत्व-विवक्षया द्वितीयेत्यप्युक्तम्। तथा च भगवद्विग्रहस्यैव माधुर्यातिशयाच्चित्तापहारकत्वेन वडिशत्वम्। तथा च भगवद्विग्रहध्यानेन निगृहीतस्य चेतसस्ततो वियोज्य दिव्यात्मध्याने तत्प्रवर्तनमिहाभिप्रेतम्।

श्रीवल्लभाचार्यरीत्या तु हरौ सर्वदुःखनिवर्तके सर्वपुरुषार्थदायके भगवति प्रतिलब्ध एवं पूर्वोक्तो भावो येन, द्रवद्धृदयः, यथा तापेन हिमघृतादिकं द्रवति, तथा भक्त्या हृदयस्य द्रवणे देहवैक्लव्यं भवति। आनन्दप्रतिबन्धकस्य हृदयस्य द्रुतत्वात् प्रमोदे जातोत्पुलको भवति, तदा भगवति प्रेमाधिक्यात् कण्ठनिरोधोऽपि भवति। तत औत्कण्ठ्ये या बाष्पकला उत्पद्यते, तया मुहुरर्द्यमानः, सफलायां भक्तौ सिद्धायां तच्चापि चित्तस्य वडिशं वशीकरणहेतु भगवद्रूपं मनःपरिकल्पितमिति शनकैर्वियुङ्क्ते, त्याजयति। अत्रापि मनःपरिकल्पिताद् भगवद्रूपाद् वडिशात् चित्तवियोजनमुक्तम्। नात्र भगवदनादरादिकं शङ्कितम्। पुनश्च सुबोधिन्यामन्यतो निवृत्तं मनो भगवन्मूर्तिं कल्पयित्वा तत्र निर्वृत्तं स्थितम्। तस्मिंस्तु गते मुक्ताश्रयं निर्विषयं च जातम्। आश्रयत्वविषयत्वे एतावत्कालमत्रैव स्थिते। पूर्वविषयास्तु पूर्वमेव त्यक्ताः। भगवद्रसस्य चास्वादितत्वादिदानीं तत्र विषयेभ्यो विरक्तम्। एवं सर्वथा विषयाभावे निर्वाणं कारणे लयं च स्वयमेव गच्छति। एवं भगवत्कृपया भगवदानन्दानुभवेन शब्दादिविषयेभ्यो विरक्तं स्वाश्रयाहङ्कारलयाद् मुक्ताश्रयम्, अत एव ध्यातृध्येयानुसन्धानाभावाद् निर्विषयं च सद् मनः सहसा = अनायासेन निर्वाणमृच्छति, नानाविध-वृत्तिरूपतां परित्यज्य परमकारणब्रह्माकारेण परिणमते। यथा अर्चिर्ज्वाला तैलवर्त्यौ अनुवती साश्रया सप्रकाशा सती, तैलवर्त्यपगमे निराश्रया निःप्रकाशा च स्वकारणमहाभूतज्योती-

रूपेण परिणमते, तद्वत्। अत्रैवाव्यवधानम् = ध्यानादिविभागशून्यम्, अत एव एकमखण्ड-मनुगतमात्मानमीक्षते।

श्रीशुकदेवरीत्या तु यथा मत्स्यग्रहणसाधनं लोहकण्टकम्, तत्तथाविधविषयग्रहण-साधनं चित्तबडिशं शनकैरयत्नत एव विषयेभ्यो वियुङ्क्ते, उपरतं च भवतीत्युक्तम्।

यत्तूक्तम्—"भगवान् प्रत्यगात्मानुभवरूपं मोक्षं ददाति, न ब्रह्मात्मानुभवरूपम्"इति, तन्न; "तत्त्वमसि, अहं ब्रह्मास्मि" इत्यादिश्रुतिशतविरोधात्, प्रत्यक्चैतन्याभिन्नपरब्रह्म-प्राप्तिरेव ब्रह्मज्ञानफलमिति श्रुतिशतबोधितत्वाच्च।

यदुक्तम्—"बडिशशब्देन चेदं ध्वन्यते यद् गङ्गादितीर्थस्थानीये भगवति बडिशस्थानीयेन चित्तेन ग्राह्यत्वाद् मत्स्यस्थानीयस्य स्वप्रकाशानन्दरूपे ह्रासे तदंशे सजातीय-तया व्यक्तस्य निर्विशेषब्रह्मण उपलम्भात् सिद्धार्थतया कृततत्त्यागस्य तस्य धीवरत्वमेव लब्धम्"इति, तदपि तुच्छम्; निर्विशेषब्रह्मणः सर्ववेदान्ततात्पर्यविषयत्वेन सर्वोत्कर्ष-शालित्वेन तस्यैव सगुणसाकारब्रह्मरूपेणाविर्भावावगमेन तन्न्यग्भावकल्पनाया निष्प्रमाण-कत्वात्।

किञ्च, न ह्यत्र निर्विशेषब्रह्मप्राप्त्यनन्तरं सगुणध्यानत्याग उक्तः; किन्तु सगुण-ध्यानत्यागानन्तरमेव चित्तस्य निराश्रयविषयत्वे निर्वाणे सति तदन्वीक्षणवर्णनम्।

वस्तुतस्तु मत्स्यस्येव दुर्ग्रहस्य निर्विशेषब्रह्मणो ग्रहणोपायभूतं चित्तं बडिशमिव भवति। तत्र यथा बडिशे पिष्टमिष्टादिकं योज्यते, तथैव चित्ते श्रीभगवतः परमानन्दमय-श्रीविग्रहध्यानजनितप्रसादलेशो योज्यते। तेन निर्वृत्तिकं निर्विकल्पसमाधिदशापन्नं तद् ब्रह्माकारतया परिणतं ब्रह्मग्राहकं भवति। भगवत्प्रसादस्य परमफलं तु तत्स्वरूपरसास्वाद एव।

> अथापि ते देवपदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि।
> जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्॥

इति पदाम्बुजद्वयप्रसादलेशानुगृहीतस्यैव भगवतो निर्गुणरूपज्ञानमुक्तम्।
अन्यत्रापि भङ्ग्यन्तरेण तदेवोक्तम्—

> पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये।
> वैराग्यसारं प्रतिलभ्यबोधं यथाऽञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम्॥
> तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्।
> त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते॥

इह प्रथमश्लोकेन कथामृतपानतज्जनितभक्तिलाभबुद्धिवैशद्यवैराग्यज्ञानलाभक्रमेण भगवत्प्राप्तिरुक्ता। द्वितीयेनातद्व्यावृत्त्या आत्मसमाधियोगबलेन बलिष्ठप्रकृतिजयद्वारापि भगवत्पदप्राप्तिः। उत्तरमार्गे काठिन्यम्, पूर्वमार्गे तु सारल्यम्। गीतायामपि "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादिभिर्भगवत्प्रसादहेतुको भगवत्स्वरूपसाक्षात्कार उक्तः। भगवतः श्रीविग्रहप्रादुर्भावस्य तत्त्वसाक्षात्कारो मुख्यं फलम्, तमन्तरा साक्षात्कारा-सम्भवापातात्, "सत्त्वं न चेद् धातरिदं निजं भवेद् विज्ञानमज्ञानभिदापमार्जनम्" इत्याद्युक्तेश्च। अज्ञानभिद्विज्ञानं मार्जनमाप, आप्नुयात्; यद्यस्य विशुद्धसत्त्वमयस्वरूपस्याविर्भावो न स्यात्। अत एव भक्तिरसायनकृता जिज्ञासूनां श्रीभक्तेर्भगवत्स्वरूपसौन्दर्यादिरसास्वादनं दृष्टम्। तत्त्वसाक्षात्कारक्रमेण मोक्षश्चादृष्टमिति दृष्टादृष्टात्मकं फलम्। ज्ञानिनां मोक्षस्य तु ज्ञानेन पूर्वमेव सिद्धत्वाद् दृष्टं भक्तिरसास्वादनमेव फलम्। कंसादीनां तु तमोरजोभिर्दृष्टफलस्य प्रतिबद्धत्वाददृष्टं मोक्षात्मकमेव फलमुक्तमिति संक्षेपः।

श्रीमद्भगवता ब्रह्मणे चतुःश्लोकीभागवतमुक्तम्—

ज्ञानं परमगुह्यं मे यद् विज्ञानसमन्वितम्।
सरहस्यं तदङ्गं च गृहाण गदितं मया॥
यावानहं यथाभावो यद्रूपगुणकर्मकः।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्॥
अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः॥
यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा॥
एतन्मतं समातिष्ठ परमेण समाधिना।
भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्॥

(श्रीमद्भाग० २।९।३०-३६)

अत्र ज्ञानं शास्त्रोक्तम्, विज्ञानमनुभवः, रहस्यं भक्तिः, तदङ्गसाधनं भक्तिरूपं च मया गदितम्। गृहाणेति भगवता वर्धापितो ब्रह्मा यावानहं स्वरूपतः, यथा भावो यादृक् सत्तावान्, यानि रूपाणि, गुणाः कर्माणि च यस्य मम, सोऽहं यथा तथैव मदनुग्रहात् तव तत्त्वविज्ञानमस्तु। अत्र रूपशब्देन श्यामद्विभुजचतुर्भुजत्वादीनि, रामत्वनृसिंहत्वादीनि, गुणा भक्तवात्सल्यादयः, कर्माणि तत्तल्लीलालक्ष्मीपरिग्रहगोवर्धनोद्धरणादीनि, सृष्टिस्थितिसंहारात्मकानि च। तेन न केवलं निर्विशेषमेव ब्रह्म चतुःश्लोकीप्रतिपाद्यम्, किन्तु दिव्यगुणकर्मादिविशेषवदपि सृष्टेः पूर्वमहमेवासम्, नान्यत् किञ्चित्: यत् सत् स्थूलमसन् सूक्ष्मपरं तयोः कारणं प्रधानम्, तस्याप्यन्तर्मुखतया मय्येव लीनत्वात्। अहं च तदानीमासमेव, न चान्यदकरवम्; पश्चात् सृष्टेरनन्तरमप्यहमेवास्मि, यदेतद् विश्वं तदप्यहमस्मि, प्रलये योऽवशिष्यते सोऽप्यहमेव। अनेनाद्यनन्तत्वादद्वितीयत्वाच्च परिपूर्णोऽहमित्युक्तं भवति।

ऋतेऽर्थं वास्तवार्थं विनापि यतः किमनिरुक्तमात्मन्यधिष्ठाने प्रतीयते, सदपि च न प्रतीयेत, तदात्मनो मायां विद्यात्। यथा आभासो द्विचन्द्रादिरित्यर्थं विना प्रतीतौ दृष्टान्तः, यथा तम इति सतोऽप्रतीतौ दृष्टान्तः। तमो राहुर्यथा ग्रहमण्डले स्थितोऽपि न दृश्यते, तथा; अर्थाद् यया वास्तवं परमार्थं विनैव मिथ्याभूतोऽपि देहादिरात्मत्वेन प्रतीयते, सन्नपि = नित्यप्रकाशमानोऽपि देहादिभिन्न आत्मेति न प्रतीयते, तामात्मनः परमेश्वरस्य मायां विद्यात्। मायाया आवरणविक्षेपरूपे द्वे शक्ती भवतः। तत्रावरणशक्त्या स्वरूपाज्ञानम्, विक्षेपशक्त्या देहे आत्माभिमानः। असतः प्रतीतौ दृष्टान्तो यथा—आभासः = चन्द्रादेर्द्वित्वाभावेऽपि बुद्धिविपर्य्ययाद् दृष्टिदोषाद् वा चन्द्रद्वयं कदाचित् प्रतीयते। सतोऽप्रतीतौ दृष्टान्तो यथा—यथा तमो गाढान्धकारावृतगृहोदरे सन्तोऽपि घटादयो न प्रतीयन्ते, तम एव प्रतीयते। एवं नात्मा प्रतीयते, किन्तु देहादिरेव प्रतीयते। यथा वा तमः = राहुर्ग्रहमण्डले सन्नपि न प्रतीयते, तथैवात्मा सन्नपि न प्रतीयते, असन्नपि देहादिः प्रतीयते।

यथा महाभूतानि भौतिकेष्वनुसृष्टेरनन्तरं प्रविष्टानि, तेषूपलभ्यमानत्वात्; अप्रविष्टानि च, प्रागेव कारणतया तेषु विद्यमानत्वात्, तथैव भूतभौतिकेषूपलभ्यमानत्वादहं प्रविष्टः, कारणत्वात् प्रागेव विद्यमानत्वादप्रविष्टोऽप्यहं कारणस्य कार्य्यापेक्षयाधिकव्याप्तिसद्भावात् स्वकार्यशरीरेषु महान्ति भूतानि प्रविष्टानि, ततोऽधिकव्याप्तिसद्भावादप्रविष्टानि च, तथाहमप्यनन्तदेशकालव्याप्तेषु भूतेषु प्रविष्टः, तेभ्यो बहिरपि स्थितत्वात् तेषु न प्रविष्टश्च।

आत्मनस्तत्त्वजिज्ञासुनैतावदेव जिज्ञास्यम्—कार्य्येषु कारणत्वेनान्वयोऽनुवृत्तिः, कारणावस्थायां च तेभ्यो व्यतिरेकः, तथा जाग्रदाद्यवस्थासु तत्तत्साक्षितया अन्वयो व्यतिरेकश्च।

समाध्यादौ 'यत् स्यात् सर्वत्र सर्वदा च, तदेवात्मा', अर्थाद् यदा कार्य्याणि जायन्ते, तदोपादानत्वेन परेशस्य सर्वत्रानुवृत्तिः, कुण्डलादिषु कनकस्येव। यदा अविकृतकारणरूपेणावतिष्ठते, तदा कार्य्याणामभावात् तेभ्यो व्यतिरेकः, अविकृतसुवर्णवद् जाग्रदादिषु साक्षित्वेनानुवृत्तिरात्मनः, समाधौ च तेभ्यो व्यावृत्तिरात्मनः।

एतेन जगत्कारणं यत्किमपि नित्यसिद्धं स्वप्रकाशम्, तदेव श्रेयस्कामैरन्वेषणीयम्। एतन्मतं परमेण समाधिना समातिष्ठ, तेन भवान् कल्पविकल्पेषु न कदाचिद् विमुह्यति।

इदमेव भागवतं किञ्चिद् विस्तरेण ब्रह्मणा स्वपुत्राय नारदाय द्वितीयस्कन्धे सप्तमाध्याये प्रोक्तम्—

यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत् क्रौडीं तनुं सकलयज्ञमयीमनन्तः।
अन्तर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाद्रिमिव वज्रधरो ददार॥

इत्यारभ्य षट्चत्वारिंशच्छ्लोकपर्य्यन्तं भगवल्लीला उपवर्ण्य, निराकारनिर्विकारनिर्गुणरूपमन्ते प्रदर्शितम्—

शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम्।
शब्दो न यत्र पुरुकारकवान् क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना॥
तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्।
सध्र्यङ्नियम्य यतयो यमकर्त्तहेतिं जह्युः स्वराडिति निपानखनित्रमिन्द्रः॥

सोऽयं तेऽभिहितस्तात भगवान् विश्वभावनः।
समासेन हरेर्नान्यदन्यस्मात् सदसच्च यत्॥
इदं भागवतं नाम यन्मे भगवतोदितम्।
संग्रहोऽयं विभूतीनां त्वमेतद् विपुलीकुरु॥
यथा हरौ भगवति नृणां भक्तिर्भविष्यति।
सर्वात्मन्यखिलाधारे इति सङ्कल्प्य वर्णय॥

(श्रीमद्भाग० २।७।४७–५२)

यस्मिन् मनोधारणां विधाय मायां तरन्ति, तत् किमित्यपेक्षायामाह—तद् ब्रह्मैव भगवतः पदं स्वरूपम्, तच्च अजस्रसुखम्। यद् नित्यम्, विशोकम्, शश्वत्प्रशान्तम्, अभयम्,

समम्, भेदशून्यम्, प्रतिबोधमात्रम् , ज्ञानैकरसम् , ज्ञानमपि न विषयोपप्लुतम् , किन्तु शुद्धम्, सदसतः परम् , विषयकरणसङ्गशून्यं वृत्तेरेव विषयोपरागः, न ज्ञानस्येत्यर्थः । तदेवात्मतत्त्वं ज्ञातुः स्वरूपं ततोऽभिन्नम् ।

ननु "तं त्वौपनिषदं पुरुषं पृच्छामि" इति तस्य शब्दबोध्यत्वप्रतीतेः कुतो ज्ञान-रूपत्वमिति चेत् , तत्राह—शब्दो न यत्र तथा चारोपनिवृत्तावेव शब्दव्यापारो न तद्बोधे, तस्य स्वप्रकाशत्वात् । अन्यत्र सुखस्य नानाकारकसाध्यक्रियाफलत्वात् सप्रपञ्चतैव, परमत्र तु बहुकारकसाध्यक्रियार्थरूपं सप्रपञ्चं सुखं न भवति, तस्य नित्यनिरुपमसुखरूपत्वात् । उत्पाद्याप्यविकार्यसंस्कार्यरूपं चतुर्विधं क्रियाफलं च तत्र नास्ति । वस्तुतस्त्विन्द्रियै-र्ज्ञानांशाभिव्यक्तिरिव क्रियाभिरानन्दांशाभिव्यक्तिमात्रं क्रियते, नोत्पत्त्यादिकमिति । ननूत्पत्त्याद्यभावेऽपि मायामलापाकरणेन विकार्यत्वमेव स्यात् , व्रीहीणामिव तुषापाकरणे-नेत्याशङ्क्याह—माया परैत्यभिमुखे विलज्जमाना, विलज्जमानेव माया यस्याभिमुखे स्थातुं न शक्नोति, तत्र मायामलकल्पना दूरोत्सारितैव, तस्मिन् भगवति नियमितमनसां कृतार्थानां न किमपि कृत्यमवशिष्यत इत्याह—सध्र्यङ् सहचरं मनो यस्मिन् नियम्य यतयः कर्त्तो भेदः, तन्निरासोऽकर्त्तः, तस्य हेतिं साधनं जह्युः = त्यजेयुः, अनुपयोगाद् नाद्रियन्त इत्यर्थः । तत्र दृष्टान्तो यथा—स्वराट् पर्जन्यरूपेण विराजमान इन्द्रो निपानखनित्रम् ( निपीयतेऽस्मिन्निति निपानम्, कूपः, तस्य खनित्रम् = खननसाधनम्, कूपखननसाधनम् ) नादत्ते। अथवा यथा स्वराट् अकिञ्चन इन्द्रः सन् = समृद्धः सन् कूपखननादिसाधनं परशुकुद्दालादिकं जहातीति तद्वत् ।

सदसत्कार्यं कारणं च हरेरन्यद् न भवति । ननु हरेस्तदव्यतिरेके तद्गतविकारप्रसङ्गः स्यात्, तत्राह—नान्यस्मात् कार्यभूतात् कारणभूतो हरिः कार्याद् व्यतिरिक्त इत्यर्थः । इदं भागवतं तद् यन्मे भगवतोदितविभूतीनां भगवल्लीलानामत्र संग्रहो विद्यते, त्वमेतद् व्यासायो-पदिश्य विपुलीकुरु विस्तारयेत्यर्थः । विस्तारप्रकारश्चोच्यते यथावर्णितेन नृणां हरौ भक्ति-र्भविष्यतीति संचिन्त्य हरिलीलाप्राधान्येन श्रीभागवतं वर्णय, न तु भक्तिरसविधानेन केवलं तत्त्वमित्यर्थः ।

अद्वितीयो भगवानेव तत्त्वम् । यथा—

विषयाभिनिवेशेन नात्मानं यत् स्मरेत् पुनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥
जन्मत्वात्मतया पुंसः सर्वभावेन भूरिद ।
विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥

(श्रीमद्भाग० ११।२२।३८।३९)

अत्यन्ताभिनिवेशेनान्याननुसन्धाने सुषुप्तौ मरणे चात्यन्तविस्मृतिर्मृत्युः, भोगप्रदकर्मोपरमस्य हेतोः साम्याद् विषयस्य देहस्य सर्वभावेन स्वीकृतिरभिमान एव जन्म भवति। देहस्योत्पत्तिविनाशौ नात्मन इत्यर्थः।

आसीद् ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम्।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे॥
(श्रीमद्भाग० ११।२४।२)

ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥
(श्रीमद्भाग० ३।३२।२८)

य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः।
विनानुवादं न च तन्मनीषितं सम्यग् यतस्त्यक्तमुपाददत् पुमान्॥
(श्रीमद्भाग० १०।३।१८)

अहं भवान् न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि॥
(श्रीमद्भाग० ४।२८।६२)

इत्यादिवचनैर्ज्ञानस्वरूपस्य ब्रह्मण एव भ्रान्त्या शब्दादिमत्प्रपञ्चवत्त्वेन भानं भवति। सृष्टेः प्राक् तु ज्ञानम्, ब्रह्म, अर्थो विषयश्चैकमेवासीत्। सर्वस्यार्थस्य ब्रह्मशक्तिमयत्वाच्छक्तेस्तु तदात्मकत्वादैक्यं युज्यते। सृष्टिप्रलययोरुभयत्रापि दृश्यगुणेषु स्वात्मव्यतिरेकेण सत्त्वव्यवसायो नाबोधमूलक एव।

रहूगणजडभरतसंवादप्रसङ्गेऽपि तदेव तत्त्वम्—

यदा क्षितावेव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम्।
तन्नामतोऽन्यद् व्यवहारमूलं निरूप्यतां सत्क्रिययानुमेयम्॥

इति चराचरस्य क्षितावेव नाशं प्रभवं चोक्त्वा क्षितेरन्यस्य विकारजातस्याभावाद् नाममात्रादन्यसत्त्वं निषिद्धम्।

एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात् परमाणवो ये।
अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः॥

क्षितेरपि न सत्यता, क्षितिशब्दस्यापि वृत्तं वर्त्तनमर्थं विनैव निरुक्तम्। यद् वा क्षितिशब्दवृत्तं यस्मिन् तदपि मिथ्यात्वेनैव निरुक्तम्। कुत एतदित्याह—असन्निधानात् = असत्सु सूक्ष्मेषु परमाणुषु स्वकारणभूतेषु निधानाल्लयात् परमाणुव्यतिरेकेण क्षितिर्नास्तीत्यर्थः। तर्हि परमाणवः सत्याः सन्त्विति तत्राप्याह—ते मनसा कार्य्यानुपपत्त्या वादिभिः कल्पिताः।

येषां समूहेन विशेषाः कृताः, तेषां समूहः पृथ्वी बुद्ध्यालम्बनमित्यर्थः। अवयविनो निराकृतत्वात् समूहशब्दोपादानं तेऽपि न सत्याः, अविद्यया प्रपञ्चस्य भगवन्मायाविलासितत्वादज्ञानेनैव कल्पिताः।

## श्रीमद्भागवते निर्गुणनिर्विशेषब्रह्मबोधप्रकारनिरूपणम्

स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत् स्वप्नजागरसुषुप्तिषु सद् बहिश्च।
देहेन्द्रियासुहृदयानि चरन्ति येन सञ्जीवितानि तदवेहि परं नरेन्द्र॥
नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः।
शब्दोऽपि बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः॥
सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम्।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत्॥
नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद् व्यभिचारिणो हि।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत्॥
अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र।
सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः॥
यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद् गुणकर्मजानि।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद् यथामलदृशोः सवितृप्रकाशः॥

(श्रीमद्भाग० ११।३।३५–४०)

पूर्वमुक्तम् "नारायणपरो मायामञ्जस्तरति दुस्तराम्" तच्छ्रुत्वा राज्ञा नारायणाभिधानस्य परमात्मनो निष्ठा याथात्म्यं जिज्ञासितम्। निर्विशेषमेव वस्तु नारायणशब्दस्यार्थः, तत्र कश्चिद् वा विशेषः। तत्राह— पिप्पलायनो यश्चास्य विश्वस्य स्थित्युद्भवप्रलयहेतुः, स्वयं चाहेतुः = हेतुरहितः, स नारायणः परमेव तत्त्वमवेहि, स्वप्नजागरसुषुप्तिषु सदनुवर्त्तमानम्। यत् "तुरीयं त्रिषु संततम्" इति श्रुतेर्बहिश्च समाध्यादौ यत् सद् ब्रह्म तदेव तत्त्वम्। देहेन्द्रियप्राणमनांसि येन सञ्जीवितानि चरन्ति = स्वस्वविषयेषु प्रवर्त्तन्ते, तदेव तद्देहेन्द्रियादिसङ्घातः स्वविलक्षणचेतनप्रयुक्तः, संहतत्वात् शय्याप्रासादिवत्। शय्यादयः स्वविलक्षणचेतनदेवदत्तादिप्रयोजनप्रयुक्ता दृश्यन्ते, तथैव देहादयो मन्तव्याः। देहेन्द्रियादयोऽनेकात्मकाः, परतः प्रकाश्याः, सुखदुःखमोहात्मकाः, संहताः परिच्छिन्नाश्च भवन्ति। तद्विलक्षण आत्मा असंहतः, सुखदुःखमोहातीतः, एकः, स्वप्रकाशः, अपरिच्छिन्नः सिद्धयति।

एतत् परमतत्त्वं मनो न विशति, न विषयीकरोति वाग्, उत वागपि कण्ठताल्वाद्यष्टस्थानानुपक्ताग्नेयं वागिन्द्रियं चक्षुः, आत्मा, बुद्धिः, प्राणाः, अन्येन्द्रियाणि च ज्ञानशक्त्या क्रियाशक्त्या च न प्राप्नुवन्ति। यथाऽनलं स्वा अंशभूता अर्चिषो विस्फुलिङ्गादयो न प्रकाशयन्ति, दहन्ति च, तथा जडासु मनआदिवृत्तिष्वभिव्यज्यमानस्यात्मप्रकाशस्य तत्तद्वृत्तिप्रकाशकस्य न तत्प्रकाशाविषयत्वम्।

यथा वह्नितादात्म्यापन्नस्य दग्धुरप्ययःपिण्डस्यान्यदाह्यदाहकत्वेऽपि नाग्नेर्दाहकत्वं संभवति, तस्य दग्धुरप्ययःपिण्डस्य दग्धृत्वात्। स्वतो दग्धृत्वशून्येऽयःपिण्डे सातिशयानित्यदग्धृत्वसमर्पकत्वात्। स्वस्य च निरतिशयनित्यदाहकत्वशक्तिसम्पन्नत्वात्, तथैव श्रोत्रप्राणादिषु स्वतो जडत्वात् प्रकाशादिशून्येष्वप्यात्मतादात्म्याध्यासेन सातिशयानित्यशब्दादिप्रकाशादिशक्तिसम्पन्नेष्वपि नित्यनिरतिशयप्रकाशात्मकब्रह्मात्मप्रकाशकत्वं न सम्भवति, तस्य श्रोत्रादीनामपि श्रोत्रादित्वात्। "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः, यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतिभ्यः।

ननु "तं त्वौपनिषदम्" इति श्रुत्या ब्रह्मणः शब्दगोचरत्वं प्रतीयते। तत्राह—शब्दोऽप्यात्ममूलमात्मनि प्रमाणं सदर्थोक्तम्, अर्थादुक्तं यथा भवति तथा आह, न साक्षात्, कुतः? बोधकनिषेधकतया स्वस्यैव बोधकनिषेधरूपत्वात्।

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।
तद्वाचानभ्युदितं येन वागभ्युपपद्यते॥
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।
यन्मनसा न मनुते न चक्षुषा पश्यति कश्चनैनम्॥

इति श्रुतीनां ब्रह्मणो मनोवचनाद्यगम्यत्वबोधकत्वात्।

ननु तर्हि कथमुच्यते 'अर्थोक्तमाह' इति, अत आह—यद्दतेन निषेधसिद्धिः "अथात आदेशो नेति नेति, अस्थूलमनणु, यतो वाचो निवर्त्तन्ते" इत्यादिनिषेधस्य यदवधिभूतं ब्रह्म तदृते ब्रह्म विना निषेधसिद्धिर्न भवति, सर्वस्य निषेधस्य सावधित्वात्। यथा किञ्चिद् घटादि क्वचिद् भूतलादौ निषिध्यते, तथैव नेति नेत्यादिनिषेधा अपि यत्र निषेध्यं निषेधन्ति, तस्यार्थात् सिद्धिर्भवति। किञ्च, असाक्षिकयोर्भावाभावयोर्माना-

भावाद् निषेधरूपो बाधोऽपि स साक्षिको मन्तव्यः। तथा च यः सर्वबाधसाक्षी शिष्यते, स एव नारायण इति शब्दोऽर्थोक्तमाहेति युक्तमेव। ननु तर्हि प्रमाणाविषयत्वाद् नास्त्येवेति चेत्, तत्राह—"सत्त्वं रजस्तमः" इति। सत् = स्थूलं कार्यम्, असत् = सूक्ष्मम् अकारणम्, तत् सर्वं ब्रह्मैव, कुत इति चेत्, सदसतोर्यत्परं कारणं तदेव ब्रह्म, कार्यं च कारणाद् भिन्नं न भवति, वाचारम्भणश्रुतेः।

ननु कथमेकं बहुविधस्य कारणम ? तत्राह—उरुशक्तिः, उरुः = महती मायालक्षणा शक्तिर्यस्य। तत् कथं बहुधा भवतीत्युच्यते—आदौ यदेकं ब्रह्म तदेव सत्त्वं रजस्तम इति त्रिवृत्प्रधानं प्रवदन्ति। ततः क्रियाशक्त्या सूत्रम्, ज्ञानशक्त्या महानिति तदेव प्रवदन्ति। ततोऽहमिति जीवोपाधिमहङ्कारं च तदेव प्रवदन्ति। यथा गोधूमादि-बीजेऽङ्कुरोत्पादिनी शक्तिः, यथा वाग्नौ दाहिका शक्तिर्न गोधूमादिभ्यो व्यतिरिच्यते, नापि तद्रूपैव, तथैव सति ब्रह्मणि प्रपञ्चोत्पादिनी शक्तिर्न सतो व्यतिरिक्ता, न वा सद्रूपिणी; वह्निविलक्षणा वह्निशक्तिरिव सद्विलक्षणापि सच्छक्तिर्न तद्भिन्ना, तादृक् शक्तिमयं ब्रह्मैव तत्प्रकाशचलनावष्टम्भसापेक्षं सत्त्वरजस्तमोरूपं भवति। तदात्मकाद-हङ्कारादेव मनःप्राणेन्द्रियादिमयं समष्टिसूक्ष्मदेहविशिष्टं हिरण्यगर्भरूपं भवति। प्राण-प्रधानया क्रियाशक्त्या सूत्रम्, बुद्धिप्रधानया ज्ञानशक्त्या महान् भवति, अहङ्कारोपाधितो जीवश्च तदेव भवति। ततो ज्ञानक्रियार्थफलरूपतया तदेव व्यवह्रियते। तत्र ज्ञानम्, देवताः, क्रियाः, इन्द्रियाणि, अर्थाः, विषयाः, फलम्, प्रकाशः, सुखदुःखादि वा तत्तद्रूपतया ब्रह्मैव भाति। तथा च सर्वस्वरूपेण स्वतो भासमानस्य, स्वतः सिद्धस्य प्रमाणानपेक्षत्वेन प्रमाणाविषयत्वेऽपि नासत्त्वं वक्तुं शक्यम्।

ननु ब्रह्मणः सर्वात्मकत्वे सर्वस्य कार्यस्य विकारवत्त्वेन ब्रह्मणोऽपि तत्प्राप्तिरित्याह—आत्मा न जजान, न जातः, जन्माभावादेव तन्मूलकास्तित्वलक्षणोऽपि विकारो तत्र न भवति, नैधते, वृद्ध्यभावादेव परिणामोऽपि निरस्तः, यस्माद् व्यभिचारिणां बालयुवादि-देहानामागमापायिनां सवनवित्, न ह्यवस्थावतां द्रष्टा तदवस्थो भवति। ननु निरवस्थः कोऽसौ ? तत आह—शश्वदनपाय्युपलब्धिमात्रं कूटस्थनित्यस्वप्रकाशबोधैकरस एवात्मा। तदेवेन्द्रियभेदेन विकल्पितं भवति। तथा च तद्द्वास्या नीलाकारा वृत्तय एव जायन्ते, विनश्यन्ति च, न शुद्धज्ञानम्; व्यभिचारिष्वव्यभिचारे दृष्टान्तः प्राणो यथेति। यथाऽण्डेषु, पेशिषु, तरुषु, उद्भिज्जेषु तत्र तत्र जीवं प्राण उपधावति, तथैवात्मा निर्विकारोऽपि

जागरादौ सविकार इव भवति, जागरे साहङ्कारः सुखदुःखादिमान्, स्वप्ने च तत्संस्कारवान् भवति। यदा तु सुप्ताविन्द्रियगणे सन्नेऽहमि = अहङ्कारे च सन्ने, तदा निर्विकारः कूटस्थ आत्मा भासते।

दर्शनस्पर्शनादिविशेषज्ञानशून्यस्य सुखात्मसुषुप्तिसाक्षिणो नः सर्वेषां स्मृतिर्भवति। अननुभूतस्यास्मरणादेवास्यात्मानुभवः, सुप्तौ विषयसम्बन्धाभावात् तु न स्पष्टः, "यद्वै तन्न पश्यति, पश्यन् वै तन्न पश्यति, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेः। भगवद्भक्त्या चेतःशुद्धौ निर्दोषदृशः सवितृप्रकाशवद् ब्रह्मप्रकाशो भवति।

आशयं लिङ्गशरीरमुपाधिमृते विकारहेतोरुपाधेरभावात्, तत्तु सर्वस्य लये शून्यमेव स्यात्, कथं कूटस्थ आत्मा? अत एवाह—'तदनुस्मृतिर्नः' इति।

सेयं भगवतो माया यन्नयेन विरुध्यते।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्॥
यदर्थेन विनामुष्य पुंस आत्मविपर्ययः।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकम्॥
यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणम्॥
स वै निवृत्तिधर्मेण वासुदेवानुकम्पया।
भगवद्भक्तियोगेन तिरोधत्ते शनैरिह॥

भगवन्मायया भ्रममूलिका संसृतिर्जलचन्द्रकम्पस्वाप्निकस्वशिरश्छेदनादिरिव जीवस्य बन्धनादिकम्। स्वधर्मेण भगवद्भक्त्या तत्त्वज्ञानेन तन्निवृत्तिः। मायायाश्च विचाररमणीयत्वमप्युक्तम्।

## श्रुत्यादिविचारोऽपि परमद्वैतभगवदनुगुणः

"साक्षी चेता केवलो निर्गुणश्च", "नेह नानास्ति किञ्चन" (बृ० उ० ४।४।१९), "शिवमद्वैतम्..................", "एकमेवाद्वितीयम्" (छा० उ० ६।२।१),

एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः॥
परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः।
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति॥

इत्यादिश्रुतिस्मृतिवचनैर्ब्रह्मणो निर्विशेषत्वमवगम्यते। विष्णुपुराणभागवतसूतसंहितादिवचनसहस्रैर्ब्रह्मणो निर्गुणत्वमेवावगम्यते। 'याथातथ्यतोऽर्थान् व्यदधाद्' इति मन्त्रस्तु पूर्वसृष्टप्रकारेण सर्जनं प्रतिपादयति, न तु जगत्सत्यत्वम्, न वा तत्सर्जनस्य सत्यत्वम्।

विश्वस्य सत्यत्वेऽपि व्यावहारिकमेव सत्यत्वम्, न पारमार्थिकम्, "नेह नानास्ति किञ्चन" इति ( बृ० उ० ४।४।१९ ) त्रैकालिकनिषेधकश्रुतिविरोधात्।

ननु ब्रह्मण एव व्यावहारिकत्वम्, प्रपञ्चस्य तु सत्यत्वमेव किन्न स्यात्? विनिगमनाविरहादिति चेत्, न; तात्पर्यानुपपत्तिगतिसामान्ययोरेव विनिगमकत्वात्।

अद्वैतश्रुतिः षड्विधलिङ्गतात्पर्योपेता। तत्रोपक्रमोपसंहारयोरैकरूप्यमभ्यासोऽर्थवाद इति त्रिविधं तात्पर्यलिङ्गं तु न विप्रतिपन्नम्, सर्वासामेवोपनिषदामेवं प्रवृत्तेः। मानान्तरासिद्धतया मोक्षहेतुज्ञानविषयतया चाज्ञातत्वं सप्रयोजनत्वं च निर्विवादमेव। अबाधितत्वमात्रं तु सन्दिग्धम्। तच्चान्यथानुपपत्तिगतिसामान्याभ्यां च निर्णीयते। न हि सर्वप्रपञ्चनिषेधरूपमद्वैतं व्यावहारिकम्, येन तत्र श्रुतेर्व्यावहारिकं प्रामाण्यं स्यात्। तेनाद्वैते तात्त्विकमेव प्रामाण्यम्, परस्परविरुद्धयोर्द्वयोस्तात्त्विकत्वासम्भवात्, वस्तुनि विकल्पासम्भवाच्च तात्त्विकव्यावहारिकप्रामाण्यभेदेन व्यवस्थोपपत्तेः। स्तुतिपरत्वेनातत्परस्य विश्वसत्यत्ववाक्यस्यैवान्यथाव्याख्यानं युक्तम्।

मन्त्रार्थस्तु—

विश्वं सत्यं मघवाना युवोरिदापश्च न प्र मिनन्ति व्रतं वाम्।
अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम्॥

( ऋ० सं० २।२४।१२ )

अत्र सायणभाष्यम्—हे मघवाना! मघमिति धननाम। तद्वन्तौ इन्द्राब्रह्मणस्पती युवोरित्, युवयोरेव। विश्वं सर्वं स्तोत्रम्। सत्यं यथार्थम्। स्तुत्या यद् यद् गुणजातं प्रतिपाद्यते, तत् सर्वं युवयोर्विद्यमानमेव, न त्वारोपितमित्यर्थः। तथा च न इत्येतत्पदद्वयसमुदायः। ऐकपद्यं त्वध्यापकसाम्प्रदायिकं यद्येवशब्दस्य पूर्वपदे न आपश्च आपोऽपि। उपलक्षणमेतत्। एतदुपलक्षितानि सर्वाण्यपि भूतानि वां युवयोः। व्रतं कर्म। न प्रमिनन्ति न हिंसन्ति। हे इन्द्राब्रह्मणस्पती! नः अस्माकम्। हविः अच्छ आभिमुख्येन जिगातं गच्छतम्। आगच्छतमिति यावत्। तत्र दृष्टान्तः—युजेव वाजिना। युजा रथे नियुक्तौ

वाजिनौ वेजनवन्तौ अश्वौ। अन्नं घासं प्रति यथा स्वयमेव शीघ्रं गच्छतः, तद्वत् शीघ्रमागच्छतामित्यर्थः।

आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत्।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि॥

(ऋ० सं० ७।१८।१९)

अत्र = अस्मिन्। सर्वताता सर्वतातौ युद्धेय इन्द्रः। भेदं नास्तिकम्, भेदनामकं वा सुदासः शत्रुम्। प्र मुषायत् प्रामुष्णात्। अवधीदित्यर्थः। तम् इन्द्रम्। यमुना आवत् अतोषयत्। तत्तीरवासी जनः सर्वोऽप्यतोषयदित्यर्थः। तृत्सवः = तृत्सोः पुरुषाश्चावत्। 'आवत्' इत्येकवचनं बहुवचनान्ततया विपरिणतं सदत्र सम्बध्यते। किञ्च, अजासः अजाः जनपदाः, शिग्रवः जनपदाः, यक्षवश्च जनपदाः, अश्व्यानि अश्वसम्बन्धीनि। शीर्षाणि शिरांसि। युद्धे हतानामश्वानां शिरांसीत्यर्थः। बलिम् उपहारम्। तस्मा इन्द्राय उपजभ्रुः उपजहुः। यद्वा अश्व्यानि शीर्षाणि युद्धे गृहीतान् मुख्यान् अश्वान् इन्द्राय उपहारं जहुरित्यर्थः।

अत्र भेदस्य तन्नामकस्य नास्तिकस्यापवाद उक्तः।

चतुर्धा हि खलु सामानाधिकरण्यम्—१. इदं रजतमित्यध्यासे। २. स्थाणुः पुमानिति बाधायाम्। ३. नीलमुत्पलमिति विशेषणविशेष्यभावे। ४. तत्त्वमसीत्यभेदे। 'विश्वं सत्यम्' इह त्वध्यासे बाधायां वा सामानाधिकरण्यमुपपद्यते। तेन 'विश्वं सत्यम्' इति वाक्यस्य षड्विधतात्पर्यबोधकलिङ्गोपेताया अद्वैतश्रुतेर्बाधकत्वं न सम्भवति।

यदुक्तम्—"ब्रह्मणि द्वितीयाभावो भूतप्रकृतिबाधो वा विशेषणरूप एव मन्तव्यः। उपलक्षणत्वे तस्य कादाचित्कत्वेन कदाचित् प्रपञ्चाभावाभावस्यापि सत्त्वे प्रपञ्चस्य सत्त्वापत्तिः स्यात्। एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयोरेकस्यासत्त्वेऽपरसत्त्वावश्यम्भावात्। प्रपञ्चबाधस्य बाधे प्रपञ्चसत्त्वोत्पत्तिः। अबाधे तेन ब्रह्मणि प्रतियोगितासम्बन्धेन प्रपञ्चस्य तदभावस्य च भाने सविकल्पकत्वापत्तिः। तत्त्वज्ञानेन प्रपञ्चबाधे जाते तत्त्वज्ञानस्यापि बाधे प्रपञ्चबाधबाधः केन सेत्स्यति" इति, तन्न; अभावस्य बाधस्य वाधिकरणरूपतया बाधस्य ब्रह्मानतिरिक्तत्वेन तद्बाधस्याप्रसक्तेः। तदतिरिक्तत्वे ब्रह्मातिरिक्तस्य मिथ्यात्वेन ब्रह्मज्ञानबाध्यत्वमेव। ब्रह्मातिरिक्तत्वेन प्रपञ्चाभावस्योप-

लक्षणत्वे तस्य कदाचित्कत्वेऽपि न प्रपञ्चसत्त्वापत्तिः, तत्त्वज्ञानेन मूलाविद्यानाशेन तत्सत्त्वहेत्वभावात्। यथाऽविद्यानिवृत्तिः १. सती, २. असती, ३. सदसती, ४. सदसद्विलक्षणा वा? सत्त्वे द्वैतापत्तिः, असत्त्वे साध्यत्वानुपपत्तिः, विरोधात् सदसत्त्वानुपपत्तिः, सदसद्विलक्षणत्वे च मिथ्यात्वापत्तिरित्यनुपपत्तौ ज्ञातत्वोपलक्षितस्यात्मन एव निवृत्तिरूपतोक्ता। तत्र ज्ञानस्य ज्ञातताायाश्चोपलक्षणत्वेन तदभावेऽपि न क्षतिः। न च तत्रोपलक्षणस्य कादाचित्कत्वेऽपि ज्ञाननाशानन्तरमपि पुनर्ज्ञानं सम्भाव्यते, तद्धेत्वभावादिति। तद्वत् प्रकृतेऽपि बोध्यम्। प्रपञ्चाभावस्य मिथ्यात्वेन तद्बाधे प्रपञ्चसत्त्वापत्तिर्हेत्वभावादेव नोदेति। एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयोरेकस्य निषेधेऽपरस्य तत्रैव सत्त्वापत्तिर्यत्र निषेध्यतावच्छेदकमुभयवृत्ति न भवेत्। प्रकृते तु दृश्यत्वादिकं निषेध्यतावच्छेदकमुभयवृत्त्येव, "न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते" इति भामत्युक्तेः, घटाभावस्य भूतलात्मकत्ववद् बन्धनिवृत्तेरपि ब्रह्मात्मकत्वे न काचिदनुपपत्तिः। न च जलादौ गन्धाभावोऽपि गन्धप्रतियोगिको जलादिरूप एवेति गन्धाभावोऽपि चाक्षुषः स्यादिति चक्षुःसंयुक्तविशेषणतायाः सन्निकर्षस्य सत्त्वेन तस्य चाक्षुषत्वप्रसक्तेः। यथा च भवन्मते इन्द्रियायोग्यत्वादेव तद्वारणम्, तथाऽस्मन्मतेऽपि। तथा च जलादेर्जलत्वादिनैव चक्षुर्ग्राह्यत्वम्, न गन्धप्रतियोगिकत्वेन रूपेण। चक्षुरयोग्यत्वं घ्राणयोग्यत्वमभ्युपगम्यत एव। ततोऽधिकरणस्वरूपत्वेऽप्यापत्त्यनुपपत्त्यभावेनाधिकरणभूतब्रह्माभिन्नो बन्धविरह इति न तेन द्वैतमापादयितुं शक्यम्।

ननु तथापि भूतलादेर्घटत्वावच्छिन्नप्रतियोगिताकत्वेऽभ्युपगम्यमाने प्रतियोगितावच्छेदकीभूतघटत्वादिज्ञानं विना भूतलादिज्ञानासम्भवो यथा, तथैव ब्रह्मणः प्रपञ्चाभावाधिकरणत्वे घटत्वाद्यखिलधर्मावच्छिन्नप्रतियोगिताकत्वापत्त्या तद्बोधकवाक्याखण्डार्थत्वहानिः, तत्तद्धर्मज्ञानं विना ब्रह्मज्ञानासम्भवश्च स्यादिति चेन्न; अभावस्याभावत्वेनैव रूपेण ज्ञाने प्रतियोगितावच्छेदकज्ञानस्यापेक्षितत्वेऽप्यभावत्वावच्छिन्नविषयताशून्ये भूतलमित्यादिज्ञाने तदनपेक्षणात्। अत एव प्रमेयमित्यादिज्ञाने भासमानस्याभावस्य प्रतियोगितावच्छेदकज्ञानं नापेक्ष्यते। अत एव ब्रह्मसाक्षात्कारेणाभावत्वावच्छिन्नविषयताशून्येन प्रतियोगितावच्छेदकज्ञानं नापेक्ष्यते। न चैवमभावस्य ब्रह्मरूपत्वेऽभावत्वधर्मस्य ब्रह्मण्यनिवृत्त्या द्वैतापत्तिस्तदवस्थैवेति वाच्यम्, घटाभाववद् भूतलमिति प्रतीतिसिद्धस्यात्यन्ताभावस्याभावत्वेन भूतलत्वेनाधाराधेयभावोपपत्त्यर्थं भूतलादावभावत्वधर्मकल्पनेऽपि साक्षात्कारेणा-

विद्यानिवृत्तिस्थानापन्नस्याविद्यात्यन्ताभावस्य शुद्धब्रह्मरूपत्वेन मोक्षदशायामाधाराधेय-प्रतीत्यनुपपत्त्या ब्रह्मण्यभावत्वकल्पनायोगात्। वस्तूपगमे प्रतीतेरेव शरणत्वात्। बद्ध-पुरुषदृष्ट्या शब्दानुमानादिनाऽविद्यानाशवद् ब्रह्मेति प्रतीत्या तत्कल्पनेऽपि तत्प्रतीतिविषयस्य ब्रह्मणः सोपाधिकतया तत्राधाराधेयकल्पनेऽपि बाधाभावात्। मुक्तिदशायां प्रतीतिविरहेण शुद्धे ब्रह्मण्यभावत्वाकल्पनात्, अविद्यात्यन्ताभावस्य शुद्धब्रह्मरूपत्वेऽपि शुद्धस्य ब्रह्मणोऽ-विद्याप्रतियोगिकत्वं न सम्भवति। तेन शुद्धस्य न सप्रतियोगिकत्वं सखण्डत्वं वा। अभावत्वेन विशिष्टे एवाभावे सप्रतियोगिकत्वं भवति, न तु तद्रहिते निर्विशेषे। ध्वंसस्या-त्यन्ताभावातिरिक्तत्वे तस्य जन्यत्वं ध्वंसत्वेनैव रूपेण, न त्वधिकरणात्मकत्वेन। अतोऽ-विद्याध्वंसस्य ब्रह्मरूपत्वेऽपि ध्वंसत्वधर्मशून्ये ब्रह्मणि न जन्यत्वादिकमापाद्यते। एतेनैव घटादिभेदोऽपि व्याख्यातः, भेदत्वेनैव भेदे तत्प्रतियोगिकत्वापेक्षणात्।

अन्ये त्वज्ञाननाशस्य नाशसम्भवाद् द्वैतापत्तिं परिहर्तुं भावाद्वैतं वर्णयन्ति। भावकार्यस्यैवोपादानसहभावनियमेनाविद्यानाशात्मककार्यस्याज्ञानरूपोपादानमन्तराऽप्यवस्थान-सिद्धेः। उपादानसहभावनियमेऽपि "उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्षते" इति नैयायिकादिरीत्यापि यथोपादाने विनष्टेऽपि क्षणं कार्यमवतिष्ठते, तथैव मूलाज्ञाननाशेऽ-विद्यानाशलक्षणं कार्यं तिष्ठति तत्र क्षणमात्रम्, अत्र त्वनन्तकालं यावदियान् भेदः।

ब्रह्मज्ञानेतराबाध्यत्वमेव व्यावहारिकत्वम्, न त्वत्यन्ताबाध्यत्वम्, मिथ्यात्वश्रुतेः। न च मिथ्यार्थप्रतिपादकत्वेनाप्रामाण्यापत्तिरिति वाच्यम्, स्वप्नार्थप्रतिपादनवत् तदुपपत्तेः। न चैवं प्रपञ्चासत्त्वबोधकश्रुतेरप्रामाण्यापत्तिरिति वाच्यम्, अतत्त्वावेदकत्वलक्षण-प्रामाण्यस्य तत्राभीष्टत्वात्। परमतात्पर्येण तु ब्रह्मबोधकत्वेन सर्वश्रुतीनां तत्त्वावेद-कत्वाभ्युपगमात्।

अस्मिन्नेवार्थे—

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञा श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः॥

(श्रीमद्भाग० १।२।२३)

स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन्।
भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः॥

(श्रीमद्भाग० १।३।३६)

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम् ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥
गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥
एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ।
तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तद्व्रतम् ।
भवत्यकर्त्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥
कार्य्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥

(श्रीमद्भाग० ३।२६।३–८)

अत्र प्रकृतिगुणैरेव परमेश्वरस्य प्रपञ्चकारणत्वम् । तद्द्वारैव तस्य ब्रह्महरिशिवात्मकत्वमुक्तम् । तस्य सर्वान्तर्यामित्वे सर्वभोक्तृत्वेऽपि स्वातन्त्र्यनिर्लेपत्वं चोक्तम्, तस्य निर्गुणत्वम्, प्रत्यक्त्वम्, सर्वभासकत्वम्, विश्वकर्तुरप्यकर्तृत्वं स्पष्टमुक्तम् ।

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥

(श्रीमद्भाग० ३।२७।४)

इत्यर्थस्यासत्त्वेऽपि स्वप्नादिवद् ध्यानवशात् तद्भानमुक्तम् ।

अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसम्मतया चिरम् ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥
भुक्तभोगपरित्यक्ता दृष्टदोषा च नित्यशः ।
नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ।
तदेव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥

इति (३।२७।२१-२५) भागवते निष्कामस्वधर्मानुष्ठानेन, श्रुतसंभृतया भक्त्या, तपसा, वैराग्येण, तत्त्वज्ञानेन प्रकृतेरभिभवः, प्रतिबोधेन, स्वप्नस्येव तत्त्वज्ञानेन विश्वभ्रमस्याकिञ्चित्करत्वमुक्तम् ।

त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो वदन्त्यनीहादगुणादविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥ इति ।
(श्रीमद्भाग० १०।३।१९)

अत्राशेषविशेषातीतस्य निर्गुणस्य निर्विकारस्यानीहस्यापि स्वानिर्वाच्यमायावशात् सर्वप्रपञ्चहेतुत्वमुक्तम् ।

तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते मायां त उद्यदपि यत् सदिवावभाति ॥

इति सच्चिदानन्दघने परमात्मन्येव विश्वस्य कल्पितत्वं स्वप्नाभत्वं स्पष्टमुक्तम् ।

एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः ।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः॥
एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ।
गुर्वर्कलब्धोपनिषत्सु चक्षुषा ये ते तरन्तीव भवानृताम्बुधिम् ॥
आत्मानमेवात्मतया विजानतां तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत् प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥
अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥
त्वामात्मानं परं मत्वा परमात्मानमेव च ।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता ॥
अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः ।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः॥
(श्रीमद्भाग० १०।१४।२२-२८)

एतैः परमात्मनोऽद्वयम्, पूर्णत्वम्, सर्वोपाधिविमुक्तत्वम्, सर्वान्तरात्मत्वम्, तदज्ञानेनैव तस्य सप्रपञ्चत्वम्, तज्ज्ञानेनैव प्रपञ्चप्रविलयनं रज्जुसर्पभवाभवदृष्टान्तेनोक्तम्। भवबन्ध-मोक्षयोरपि तरणावहोरात्रवदात्मनि कल्पितत्वम्, भगवत एव प्रत्यगात्मतत्त्वं तदज्ञानेनानर्थः। अतद्व्यावृत्त्या स्वात्मभूतस्य परमात्मनोऽपरोक्षसाक्षात्कारेणानर्थनिवृत्तिः। तत्साक्षात्कारायापि भगवद्भक्तिरत्यन्तमपेक्षितेति तदप्युक्तम्—

अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्॥

(श्रीमद्भाग० १०।१४।२९)

सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः।
इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि॥
देहात्मवादिनां पुंसामपि राजन्यसत्तम।
यथा देहः प्रियतमस्तथा न ह्यनु ये च तम्॥
तस्मात् प्रियतमः स्वात्मा सर्वेषामपि देहिनाम्।
तदर्थमेव सकलं जगदेतच्चराचरम्॥
कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥

(श्रीमद्भाग० १०।१४।५०–५५)

अत्र सर्वापेक्षया प्रत्यगात्मन एव निरतिशयनिरुपाधिकपरप्रेमास्पदत्वमुक्तम्। श्रीकृष्णश्च सकलात्मनां प्रत्यगात्मैवास्ति। तत एव तस्य सर्वप्राणिपरप्रेमास्पदत्वमुक्तम्।

## श्रुतिसूत्राद्यविरोधः

यत्तु केनचिदुक्तम्—"कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" (वा० सं० ४०।८); "नाभाव उपलब्धेः" (ब्र० सू० २।२।२८); "वैधर्म्याच्च न स्वप्नादिवत्" (ब्र० सू० २।२।२९), "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" (श्री० भ० गी० १६।८) इति सर्वज्ञत्वादिगुणविशिष्टेन परेशेन सत्यमिदं जगन्निर्मितम, प्रत्यक्षादिप्रमाणैः सत्यत्वेन निश्चितत्वात्, जगन्नास्तीति तदनुभवविरोधिज्ञानाभावाच्च। न तु स्वप्नादिवज्जगन्मिथ्या, प्रत्यक्षादिप्रमाणसिद्धस्य जगतस्तद्विरुद्धं मिथ्यात्वं वदन्त आसुरा एवेति, तत्तुच्छम्; मन्त्रस्थस्य सत्यशब्दस्य व्यावहारिकसत्यपरत्वसम्भवेन

जगन्मिथ्यात्वाविरोधित्वात्। न च सत्यभेदोऽप्रामाणिक इति वाच्यम्; 'राजराजः', 'मन्मथ-मन्मथः' इत्यादिवत् "सत्यस्य सत्यम्" इति (बृ० उ० २।१।२०) औपनिषदप्रयोगदर्शनात् सत्यभेदसिद्धेः। यथा राज्ञां राजा राजराज इति सामान्येभ्यो राजभ्यो राजराजोऽतिरिच्यते, तथैव सत्यस्य सत्यं ब्रह्मापि सामान्यसत्येभ्यो विलक्षणं सिध्यति। अत एवात्यन्ताबाध्यत्वं पारमार्थिकसत्यत्वम्, व्यवहारकालाबाध्यत्वं व्यावहारिकसत्यत्वम्, प्रतिभासकालाबाध्यत्वं प्रातिभासिकसत्यत्वमिति सत्यभेदः सिद्धः। "एकमेवाद्वितीयम्" (छा० उ० ६।२।१), "नेह नानास्ति किञ्चन" (बृ० उ० ४।४।१९); "नात्र काचन भिदास्ति, अतोऽन्यदार्तम्" (बृ० उ० ३।४।२) इत्यादिश्रुतिभिर्ब्रह्मणः सजातीयादिभेदत्रयशून्यत्वश्रवणेन तदन्यस्य प्रपञ्चस्यार्तत्वश्रवणेन च जगति पारमार्थिकसत्यत्वस्य बाधितत्वेन व्यावहारिकसत्यत्व-प्रतिपादन एव विश्वसत्यत्वबोधकवाक्यं पर्यवस्यति। न च ब्रह्मबोधकवाक्यस्यैव व्यावहारिकसत्यत्वबोधने तात्पर्यमिति साम्प्रतम्, तस्याव्यवहार्यत्वात्; 'अव्यवहार्यम्' इति श्रुतेश्च।

यथा संसारापेक्षया कौस्तुभ-पीताम्बरप्रभृतीनां भगवदीयालङ्कारवसनानां परमोत्कर्ष-शालित्वेऽपि भगवत्स्वरूपापेक्षयाऽपकर्ष एव भगवदङ्गानामेतदलङ्कारभूतत्वेनालङ्कारान-पेक्षणात्। अत एवोक्तम्—"भूषणभूषणाङ्गम्" (श्रीमद्भाग० ३।२।१२) इति। भूषणानां भूषणान्यङ्गानि यस्येति तद्व्युत्पत्तेः। "कण्ठञ्च कौस्तुभमणेरधिभूषणार्थम्" (३।२८।२६) इति भागवतोक्तेः।

गुणास्तु ततोऽप्यन्तरङ्गत्वेन यद्यपि परमोत्कर्षं भजन्ते, तथापि भगवान् गुणा-पेक्षयाऽप्युत्कृष्टः, गुणानपेक्षकत्वात्; निरतिशयानन्दरूपे तस्मिन्ननाधेयानन्दातिशय-त्वात्। नापि महत्त्वातिशयाधानम्; अनन्तपदसमभिव्याहृतब्रह्मपदस्य निरतिशयबृहत्त्व-पर्यवसायित्वेन तत्र महत्त्वाधानासम्भवात्। नापि तत्रानर्थनिवर्हणं गुणकृत्यं सम्भवति, तस्मिन्ननर्थस्य नित्यनिरस्तसत्ताकत्वात्। अत एवोक्तम्—"निर्गुणं मां गुणाः सर्वे भजन्ति निरपेक्षकम्" इति भागवते।

भूषणवसनगुणाद्यपेक्षया भगवत्स्वरूपे उत्कर्षवत् तत्सत्यत्वेऽप्युत्कर्षः, सत्यत्वस्य तत्स्वरूपानतिरिक्तत्वात्। अत एव भगवत्स्वरूपसत्तापेक्षया किञ्चिन्न्यूनसत्ताका एव गुणादयः। एतेन जगतः सत्यत्वानुभवविरोधिज्ञानाभावात् प्रपञ्चस्य पारमार्थिकसत्यत्वमिति पराहतम्, पूर्वोक्तश्रौतानुभवस्यैव तद्विरोधित्वात्। तेन भगवत्स्वरूपसमानसत्ताकस्य

अन्यस्याभावादेवाद्वितीयबोधकश्रुतिसामञ्जस्यम् । तावतैव च तद्भिन्नस्य मिथ्यात्वेन स्वप्नापेक्षयाऽबाध्यत्वेन सत्यत्वं च सङ्गच्छते । जगतश्च प्रलयपर्यन्तस्थायित्वेनौपचारिकमेव शाश्वतत्वमपि सङ्गच्छते । प्रवाहरूपेण तत्त्वज्ञानात् प्रागनुवर्तमानत्वेन च सत्यत्वादिकं सङ्गच्छते । बाधाबाधवैधर्म्येण च न स्वप्नादिवज्जाग्रत्स्तम्भादिप्रत्ययस्य निरालम्बनतेति तु 'वैधर्म्याच्च न स्वप्नादिवदिति सूत्रार्थः ।

न च वेदान्तिभिर्बाह्यार्थापलापः क्रियते, न वा प्रत्ययानां निरालम्बनताऽभ्युपेयते । तद्रीत्या स्वप्नादिप्रत्ययानामपि प्रातीतिकानिर्वचनीयपदार्थालम्बनतैव । जाग्रत्प्रत्ययानां तु सति प्रमातरि बाधाभावात्, स्वप्नादिप्रत्ययानां च सति प्रमातरि बाध्यत्वेन वैधर्म्यमुपपद्यते । "जागरितगोचराः स्तम्भादिप्रत्यया बाह्यार्थशून्या निरालम्बनाः, प्रत्ययत्वात् स्वप्नादिप्रत्ययवत्" इति विज्ञानवादिमतनिराकरणार्थमिदं सूत्रम् । बाधाबाधवैधर्म्येण तदपोद्यते । दोषजनितत्व-तदजनितत्वाभ्यां च वैधर्म्यम् । जाग्रत्प्रत्ययस्यापि बाध्यत्वेन स्वप्नादिप्रत्ययबाधकत्वानुपपत्तौ स्वप्नादिदृष्टान्तानुपपत्तिश्च । तन्मते स्वप्नादिप्रत्ययस्य स्मृतिरूपत्वेन जाग्रत्प्रत्ययस्य च प्रमाणजनितत्वेनोपलब्धिरूपत्वेनापि तयोर्वैधर्म्यं सिध्यति । तेन बाह्यार्थापलापनिराकरणमेव सूत्राभिप्रेतम् ।

न चानिर्वचनीयत्वरूपमिथ्यात्वापलापः सूत्राभिप्रेतः, तस्य बाह्यार्थनिराकरणेऽनुपयोगित्वात् । वेदान्तिनस्तु न बाह्यार्थमपलपन्ति, किन्तु तस्यानिर्वचनीयत्वमेव व्यवस्थापयन्ति । अनिर्वचनीयत्वेनोभयोः साधर्म्येऽपि सति प्रमातरि बाध्यत्वाबाध्यत्वाभ्यां वैधर्म्यमपि सिध्यत्येव । न हि केनचिद् धर्मेण वह्निजलयोः साधर्म्येऽपि जलवद् वह्नेरनुष्णत्वमपि सिध्यति, तस्यानुभवविरुद्धत्वेन तत्रासत्त्वात् ।

बौद्धैस्तु मिथ्याशब्दोऽपह्नववचनोऽभ्युपेयते, वेदान्तिभिस्त्वनिर्वचनीयतावचन इति भेदेन स्वप्नादिदृष्टान्तेन प्रपञ्चस्यापलापो न शक्यो वैधर्म्यादेवेति तन्निराकरणम् । प्रपञ्चस्य स्वप्नादिवद् मिथ्यात्वं तु वक्तुं शक्यमेव, दृश्यत्वपरिच्छिन्नत्वजडत्वादिभिः साधर्म्यात् । प्रपञ्चस्य सति प्रमातरि बाध्यत्वाभावेऽपि ब्रह्मज्ञानेन प्रमात्रादिसहितस्य तस्य बाध्यत्वाभ्युपगमात् । अत एव 'असत्यमप्रतिष्ठन्ते' इत्यत्र असत्यशब्दोऽपलापवचन एव, नानिर्वचनीयतावचनः, अप्रतिष्ठमिति विशेषणात् । न ह्यनिर्वचनीयमप्रतिष्ठं भवति, सर्वस्यैवारोपस्याधिष्ठानसापेक्षत्वेनाधिष्ठानप्रतिष्ठत्वात् । रजतादीनां शुक्त्याद्यधिष्ठानकत्ववत् प्रपञ्चस्यापि ब्रह्माधिष्ठानकत्वानपायात् । अप्रतिष्ठमनीश्वरमसत्यं जगदिति शून्यवादिनो वदन्ति,

न वेदान्तिनः, तेषां दिशा प्रपञ्चस्याभिन्ननिमित्तोपादानकत्वेन परमेश्वरस्याधिष्ठानस्य चाभ्युपगमात्। "यतो वा इमानि भूतानि जायन्ते", "जन्माद्यस्य यतः" इति श्रुति-सूत्रयोस्तत्रैव स्वारस्यात्।

प्रपञ्चमिथ्यात्वं तु 'भूतप्रकृतिमोक्षं च' इति भूतप्रकृतिबाधोक्त्या निगदव्याख्यातमेव। न च मोक्षशब्दस्य बाधार्थकत्वे मानाभाव इति वाच्यम्, बन्धनिवृत्तेरेव मोक्षशब्दार्थत्वेन भूतप्रकृतिलक्षणबन्धनिवृत्तेर्बाधपर्यवसायित्वेन बाधानतिरिक्तत्वात्।

यदुक्तम्—"शून्यवादिबौद्धरीत्या ब्रह्मबोधकप्रमाणानाम् "नेह नानास्ति किञ्चन" इति निषेध्यसमर्पकत्वेनानुवादकत्वम्, ब्रह्मसत्यत्वप्रतिपादने तात्पर्याभावादिति, तत्तुच्छम्; शून्यवादिभिः श्रुतिप्रामाण्यानभ्युपगमात्, तवैव नव्यशून्यवादित्वापत्तेश्च। तथापि न मनोरथपूर्तिः, उपक्रमोपसंहारादिषड्विधनिर्णायकलिङ्गविरोधात्। 'नेह नानास्ति किञ्चन' इति श्रुत्या 'इह'पदनिर्देश्यब्रह्मणो न निषेधः, तस्य निषेधाधिकरणत्वनिर्देशात्। न हि 'भूतले घटो नास्ति' इत्युक्तौ कश्चिदमूढो भूतलनिषेधं प्रत्येति, नञस्तदसम्बन्धात्। किं च नानापदवाच्यो भेदः, स च ब्रह्मणि निषिध्यते।

ननु नानापदेन सत्यस्वरूपम्, आनन्दस्वरूपम्, प्रकाशस्वरूपम्, अपरिच्छिन्न-स्वरूपं च ब्रह्मणि निषिध्यत इति चेत्, न, ब्रह्मणः सत्यादिस्वरूपत्वेन तदधिकरणत्वाभ्युपगमेन त्वदुक्तेरपार्थकत्वात्। नापि धर्मधर्मिभावो ब्रह्मणि, तस्य निर्विशेषत्वात्। नहि स्वरूपं निषेद्धुं शक्यम्, स्वरूपत्वादेव। अपि च—किञ्चनेति नानाशब्दस्य विशेषणम्, तथा च निःसङ्कोचेन सर्वविधभेदो निषिध्यते। न च सत्यानन्दादिभेदः, किन्तु ब्रह्मण एवाबाध्यत्वेन सत्यत्वम्, स्वप्रकाशत्वेन चिद्रूपत्वम्, सर्वोपद्रवशून्यत्वेनानन्दरूपत्वम्। तथा च निषेद्धुं शक्यं यद् दृश्यं तदेव निषिध्यते, न निषेधसाक्षि ब्रह्म, तस्य सर्वसाक्षित्वादेव। किं च एवं ब्रह्मभिन्नस्य सत्यादेर्निषेधेऽपि ब्रह्मणो निषेधः सर्वथाऽशक्य एव, तस्य तादृशनिषेधा-धिकरणत्वात् साक्षित्वात् च।

यदुक्तम्—'नेति नेति' इति निषेधद्वयदर्शनेनापि प्रपञ्चब्रह्मणोरुभयोरपि निषेध इति, तन्न; तथात्वे सत्यज्ञानानन्दादिनिषेधाय 'नेति'शब्दबहुत्वापेक्षणापातात्। वस्तु-तस्तु—"पृथिव्यप्तेजांसि मूर्तं वायुश्चान्तरिक्षञ्चामूर्तम्।" "द्वे वाव ब्रह्मणो रूपे—मूर्तञ्चैवा-मूर्तञ्च" (बृ० उ० २।३।१) इत्युपक्रम्य मूर्तामूर्तप्रभेदं दर्शयित्वा "अथात आदेशो नेति नेति, न ह्येतस्मादिति नेत्यन्यत्परमस्ति" (बृ० उ० २।३।६)। न ह्यत्रेदं तदिति विशेषितं किञ्चित्

प्रतिषेध्यमुपलभ्यते। 'इति'शब्देन त्वत्र प्रतिषेध्यम्, किमपि समर्प्यत इति परत्वान्नञ्-प्रयोगस्य। 'इति'शब्दश्चैवंशब्दवत् सन्निहितालम्बनकः प्रयुज्यते। सन्निहितं चात्र प्रकरण-सामर्थ्याद् ब्रह्मणः सप्रपञ्चं रूपद्वयम्, अतस्तदेव रूपद्वयं द्वाभ्यां निषेधाभ्यां निषिध्यते।

ननु ब्रह्मणो वाङ्मनसातीतत्वादसम्भाव्यसद्भावत्वात् तदेव प्रतिषेध्यम्, न रूपद्वयम्; तस्य प्रत्यक्षादिगोचरत्वेन निषेधानर्हत्वात्। अभ्यासस्त्वादरार्थमेवेति चेत्, न; 'ब्रह्म ते ब्रवाणि' इत्याद्युपक्रमविरोधात्, "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्यादिनिन्दा-विरोधाच्च, 'अस्तीत्येवोपलब्धव्यः' इत्यवधारणात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च। वाङ्-मनसातीतत्वं तु नाभावाभिप्रायेणोक्तम्, 'ब्रह्मविदाप्नोति परम्' इति 'सत्यं ज्ञानमनन्तं ब्रह्म' इति महता समारोहेण ब्रह्मप्रतिपाद्यतदभावाभिलापासम्भवात्। "प्रक्षालनाद्धि पङ्कस्य दूराद-स्पर्शनं वरम्" इति न्यायात्। किन्तु वाङ्मनसातीतत्वेन विषयानन्तःपातित्वेन प्रत्यगात्म-भूतमेव तद् ब्रह्मेति बोध्यते, नित्यशुद्धबुद्धमुक्तस्वभावत्वात्।

नापि नेति नेतीति निषेधद्वयेन रूपद्वयं रूपवद् ब्रह्म च प्रतिषेधनीयम्; तथात्वे शून्यवादप्रसङ्गात्। कञ्चित् परमार्थमनवलम्ब्य निषेधानुपपत्तेः। रज्ज्वादिषु सर्पादयो निषि-ध्यन्ते। अपरिशिष्यमाणे कस्मिंश्चिन्निषेधो नोपपद्यते, परिशिष्यमाणे च तस्यैव ब्रह्म-त्वात्। अत्रैव च "प्रकृतैतावत्त्वं प्रतिषेधति ब्रवीति च ततो भूयः" (ब्र० सू० ३।२।२२) इति श्रीबादरायणः प्रकृतैतावत्त्वं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं शब्दः प्रतिषेधतीत्याह। तथा चाध्यात्मिकस्य, आधिदैविकस्य, मूर्तामूर्तात्मकस्य रूपद्वयस्यैव सन्निहितत्वात् 'इति'शब्देन तस्यैव ग्रहणम्। नञा तस्यैव सम्बन्धः। ब्रह्मणस्तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टस्याप्रधानत्वेन न नञा सम्बन्धः। रूपद्वयस्य सप्रपञ्चस्य निरूपणानन्तरं रूपवतः स्वरूपजिज्ञासायाम् "अथात आदेशो नेति नेति" इत्युक्तम्। तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपनिरूपणं क्रियते। तदा-स्पदं हि सर्वमिदं कार्यं नेति नेतीति निषिद्धम्, कार्यस्य वाचारम्भणशब्दादिभ्यो मिथ्यात्वेन प्रतिपेद्धुं शक्यत्वात्। न तु ब्रह्मणो निषेधस्तत्र कथमपि सम्भवति, सर्वकल्पनाधिष्ठानत्वात्।

न च रूपद्वयस्यापि शास्त्रोक्तत्वात् कथं शास्त्रेणैव बाध इति वाच्यम्; तथाविधशास्त्रस्य लोकसिद्धानुवादकत्वेन रूपद्वयस्य प्रतिपिपादयिषितत्वेनानिर्देशात्। शुद्धब्रह्मस्वरूपप्रतिपाद-नायैव कल्पितं रूपद्वयं प्रतिषेधाय परामृशति शास्त्रम्। द्वौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः। अथवा एको मूर्तामूर्तात्मकं भूतराशिम्, अपरश्च वासनाराशिं प्रति-षेधति। अथवा वीप्सायां द्वित्वम्, तेन यत्किञ्चिदुत्प्रेक्ष्यते तत्सर्वं न भवतीति तदर्थः।

परिगणितप्रतिषेधे यदि नैतद् ब्रह्म, किमन्यद् ब्रह्मेति भवेद् जिज्ञासा। वीप्सायां तु समस्तविषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासोपशाम्यति, प्रपञ्चप्रतिषेधात् "भूयो ब्रह्म ब्रवीति अन्यत् परमस्ति" (बृ० उ० २।३।६) अभावावसाने प्रतिषेधे क्रियमाणे किमन्यत् परमस्तीति ब्रूयात्। तत्र नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्वक्ति। न ह्येतस्माद् ब्रह्मणो व्यतिरिक्तमस्तीत्यतो 'नेति नेति' इत्युच्यते। अप्रतिषिद्धं ब्रह्म मास्तीत्येव। अथवा न ह्येतस्मादिति, 'न' इति प्रपञ्चप्रतिषेधरूपादादेशनादन्यत् परब्रह्मण आदेशनमस्तीति तदुक्त्वा ब्रवीति च 'ततो भूयः' इत्यंशेन। "सत्यस्य सत्यमिति, प्राणा वै सत्यम्, तेषामेष सत्यम्" (बृ० उ० २।१।२०) इति हि ब्रवीति। तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं स्यात्। अभावावसाने तु सत्यस्य सत्यं किमित्युच्येत, तच्चानिन्द्रियग्राह्यत्वात् सर्वदृश्यसाक्षित्वादव्यक्तमेव। संराधनेनैव तत्साक्षात्कार इत्यपि "अपि च संराधने प्रत्यक्षानुमानाभ्याम्" (ब्र० सू० ३।२।२४) इत्यत्रोक्तमेव।

यदुक्तम्—"असद्वा इदमग्र आसीत्" इति श्रुत्या ब्रह्म नास्तीति प्रतिपाद्यत इति, तदपि तुच्छम्; 'कथमसतः सज्जायेत' इत्यसत्प्रतिक्षेपपूर्वकं कारणस्य सत्त्वप्रतिपादनविरोधात्।

यत्तु पूर्वपक्षरूपेण—"ब्रह्मणो जगतश्च सत्यत्वे गौरवम्", अद्वैतिमते तु "ब्रह्मसत्यत्वेनैव निर्वाहः" इति प्रतिपादितम्; यच्च शून्यवादिप्रत्युत्तररूपेणोक्तम् "तदुभयोरनङ्गीकारेणास्माकमत्यन्तं लाघवम्" इति, तदुभयमप्यसत्; अनुक्तोपालम्भात्। नाद्वैतिभिर्लाघवाय प्रपञ्चमिथ्यात्वमङ्गीक्रियते, किन्तु श्रुतियुक्तिसिद्धत्वात्। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "अतोऽन्यदार्तम्" "नेह नानास्ति किञ्चन" इत्यादिश्रुतिभिः प्रपञ्चो मिथ्या, जडत्वात्, परिच्छिन्नत्वात्, दृश्यत्वात्, रज्जुसर्पादिवदिति युक्तिभिश्च प्रपञ्चस्य मिथ्यात्वं सिध्यति। न च जगत्स्वरूपं तत्सत्यत्वञ्च श्रुतिगम्यम्; तस्य लौकिकप्रमाणसिद्धत्वात्, प्रत्यक्षानुमानानवगतगन्तृत्वेनैवाननुवादकत्वेन श्रुतिप्रमाण्यासिद्धेः। ब्रह्मणस्तु प्रत्यक्षानुमानाभ्यामज्ञातत्वेन तत्प्रतिपादकत्वेनैव श्रुतिप्रामाण्यम्, यदुक्तम्—"गाढनिद्रायामद्वैतिभिरद्वितीयात्मानुभवाभ्युपगमात्, अनुभवसिद्धत्वेन कुतस्तस्य वेदैकगम्यता? तेन सर्वशून्यस्यैवापूर्वत्वात्, तत्प्रतिपादकत्वेनैव श्रुतिप्रामाण्यमिति, तदप्यतितुच्छम्; श्रुतिप्रामाण्यमनुपगच्छद्भिरपि बौद्धैस्तज्ज्ञातत्वेन शून्यस्यापूर्वत्वासम्भवात्। न चाद्वैतिभिर्निद्रायामद्वितीयात्मानुभवोऽभ्युपेयते, सौषुप्तानुभवस्य सोपाधिकात्मगोचरत्वात्। अत

एव न पुनरनुत्थानापत्तिः, "सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति" इति श्रुत्या मायासंवलितेनैव सत्ता, सुषुप्तौ जीवात्मनः सम्प[illegible]क्तत्वात्।

यदुक्तम्—"कथमसतः सज्जायेत" इति श्रुत्या चार्वाकमतनिराकरणमेव क्रियते, न शून्यवादिमतनिराकरणम्। शून्यवादिमते प्रपञ्चस्य मिथ्यात्वमेव, "न शून्यादुत्पत्तिः" इति, तदपि तुच्छम्; सत्यस्योत्पत्तिप्रतिषेधे त्वद्रीत्यापि सत्यस्य जगतोऽनुत्पत्तिप्रसङ्गात्। तस्मात् सत्त्वेन प्रतीयमानस्य जगतोऽसत्कारणत्वप्रतिषेध एव श्रुत्यर्थः। शून्यवाद्यपि सांवृतं कार्यकारणभावमभ्युपेत्यैव शून्यतत्त्वमुपदिशति, "द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना" इत्युक्तेः। अत एव "असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्" इति श्रुतिरप्यसद्वादिनिन्दापरैव, न निन्दानुवादिनी, "अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः" इति सद्वादपर्यवसायित्वावगमात्। अन्यथाऽसद्वादप्रतिपादनं स्यात्। न च तथोपलभ्यते। भ्रमस्य साधिष्ठानत्वेन निषेधस्य च साक्षिसापेक्षत्वेनापि शून्यनिरासो युक्त एव। सर्वापलापरूपस्य शून्यस्य पुरुषार्थत्वमप्ययुक्तमेव।

नन्वद्वितीयब्रह्मात्मप्रतिपादनस्याप्यपुरुषार्थत्वमेवेति चेत्, न; तस्य परमानन्दरूपत्वेन परमपुरुषार्थरूपत्वात्। सुषुप्तौ सावरणस्यापि तस्य सुखरूपत्वेन सर्वाभिलषणीयत्वाच्च।

ननु जगति दुःखनिवारणायात्महत्याप्रवृत्तिदर्शनात् संसारतापनिवृत्तये सर्वशून्यतापि काम्येति कथं न शून्यस्य पुरुषार्थत्वेन शास्त्रविषयता स्यादिति चेत्, न, दुःखहेतोः शरीरादेर्नाशस्यैव तत्र भ्रान्त्याऽऽत्मनाशव्यपदेश्यत्वेन तददोषात्। अपि च यथा जलस्यौष्ण्यम्, अग्नेश्चानुष्णत्वमौपाधिकं न स्वाभाविकम्, तथैव प्रेमास्पदत्वमात्मनः स्वाभाविकम्, औपाधिकमेव द्वेष्यत्वम्। तापनिवारणार्थमात्महत्याप्रवृत्तिर्मोहादेव, तस्याः पातकजनकत्वात्।

यदुक्तम्—"अद्वितीयाखण्डात्मभावं न कश्चिद् वाञ्छति, सर्वोऽपि मित्र-कलत्र-साहित्यमेव कामयते। सुषुप्तौ तु श्रमपरिहारार्थमेव प्रवृत्तिः" इति, तत्तुच्छम्, मित्रकलत्रसम्पत्तिमतामपि तत्त्यागेनाद्वितीयात्मप्राप्त्यर्थं वनवासतपश्चरणादिदर्शनात्, सुषुप्तौ प्रवृत्तिदर्शनाच्च। भयश्रमादिहेतोर्द्वैतस्य निवृत्त्यैव सुषुप्तौ श्रमपरिहारोऽपि। "द्वितीयाद्वै भयं भवति" इति श्रुतेश्च। भगवदाराधने तपस्यायां च बाधकत्वादपि तत्त्यागो युक्त एव। शिवविष्णुवादीनां तु उमारमादिमतामपि दृढब्रह्मात्मनिष्ठानां बाह्यदृष्ट्या प्रपञ्चवतामप्यद्वैतात्मनिष्ठतैव। "पश्यन् शृण्वन् स्पृशन्……नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्" इति गीतोक्तेः।

निर्गुणे कथं श्रुतिप्रवृत्तिः ?

ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे ॥

इत्यत्रापि प्रश्नो राज्ञोपस्थापितो यत् सदसतः परेऽनिर्देश्ये निर्गुणे ब्रह्मणि गुणवृत्तयः श्रुतयः कथं चरन्ति ?

अयमभिप्रायः—मुख्या-लक्षणा-गौणीभेदेन त्रिधा शब्दप्रवृत्तयो भवन्ति । मुख्यापि रूढियोगभेदेन द्विधा प्रवर्त्तते । तत्र रूढिः स्वरूपेण, जात्या, गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसंकेतेन प्रवर्त्तते । 'डित्थो डवित्थः' इति शब्दौ स्वरूपेण निर्देशार्हे काष्ठमयगजे तन्मये मृगे च संकेतेन प्रवर्त्तेते । 'डित्थः काष्ठमयो हस्ती, डवित्थस्तन्मयो मृगः' इति वचनात् ।

गोशब्दो जात्या गोवस्तुनि, शुक्ल इति च गुणेन शुक्लवर्णे गवादौ प्रवर्त्तते । लक्षणाऽपि तेनैव संकेतेनाभिहितार्थसम्बन्धिनि प्रवर्त्तते, यथा 'गङ्गायां घोषः'; गौणी चाभिहितार्थलक्ष्यमाणगुणयोगात् तद्गुणयुक्ते सदृशे प्रवर्त्तते, यथा 'सिंहो देवदत्तः' । तदुक्तम्—

अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥
(त० वा० ३।४।१२)

एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन प्रवर्त्तमाना वृत्तिर्योगवृत्तिः, यथा—पङ्कजम्, औपगवः, पाचक इति । ब्रह्मणि रूढिर्न प्रवर्त्तते, स्वरूपेणानिर्देश्यत्वात् । निर्गुणत्वात् चानिर्देश्यता, "निर्गुणं निष्क्रियं शान्तम्" इति श्रुतिभिर्ब्रह्मणो निर्गुणत्वनिष्क्रियत्वप्रतिपादनात् । सदसतः कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि सम्बन्धाभावाल्लक्षणायोगवृत्त्योश्च तत्रासंभवाल्लक्षणायोगवृत्तिभ्यामपि शब्दानां तत्र न प्रवृत्तिः । पदार्थत्वाभावे वाक्यार्थत्वमपि ब्रह्मणो न संभवति, अपदार्थस्य वाक्यार्थत्वासंभवात् । तथा च कथं ब्रह्मणः श्रुतिगोचरत्वमिति । तत्रोत्तरं तु—यद्यपि गुणैरनभिभूतं सर्वज्ञं सर्वशक्ति सगुणमेव ब्रह्म प्रतिपादयन्ति श्रुतयः, तथापि तात्पर्य्येण निर्गुणे पर्य्यवस्यन्ति । तथाहि—"यः सर्वज्ञः सर्वविद्यस्य सर्वमयं तपः, सर्वस्य वशी सर्वस्येशानः, तदैक्षत्, तत्तेजोऽसृजत्, सत्यं ज्ञानमनन्तं ब्रह्म" इत्याद्याः श्रुतयः सर्वकर्मफलदातारं समस्तकल्याणगुणगणनिलयं सच्चिदानन्दं भगवन्तं प्रतिपादयन्ति । संसारिणो जीवस्य संसारनिवृत्तये तत्त्वमस्यादीनि महावाक्यानि तथाभूतेश्वरतां बोधयन्ति । तत्र तत्त्वंपदयोः सामानाधिकरण्यं

भासते, तच्च प्रकारान्तरेणाघटमानं ब्रह्मणि पर्य्यवसानं गमयति। तथाहि नह्यत्र वैश्वदेव्य-भिक्षावदेकार्थाभिधानेन सामानाधिकरण्यं घटते, कुतः? भिन्नार्थत्वात्। तत्र वैश्वदेवीति तद्धितो देवतायुक्तामामिक्षां वदति, सामान्यतो बोधितस्यामिक्षापदसान्निध्यात् तस्य विशेषतो विषयार्पणं भवति। तदुक्तम्—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्॥

न चाजहत्स्वार्थया निरूढलक्षणया वा विशेषणविशेष्यभावेन 'नीलमुत्पलम्' इतिवत् तदुपपद्यते, विरुद्धार्थत्वेन तदयोगात्। 'स्वबुद्धया रज्यते येन विशेष्यं तद्विशेषणम्', यथा विशेष्यमुत्पलं नीलबुद्धया रज्यते, न तथा त्वंपदार्थेन तत्पदार्थो रज्यते, न वा तत्पदार्थत्वेन त्वंपदार्थो रज्यते, सर्वज्ञत्वाल्पज्ञत्वाभ्यां तदसंभवात्। न वा जहत्स्वार्थया लक्षणया कुसुमितद्रुमागङ्गेतिवत् सामानाधिकरण्यं संभवति, एकार्थत्वस्य विवक्षितत्वात्। तस्माद् भागत्याग-रूपया जहदजहत्स्वार्थया लक्षणया 'सोऽयं देवदत्तः' इतिवद् विरुद्धांशत्यागेनानुगतचिदंशेनै-कार्थेन सामानाधिकरण्येन निर्गुणे पर्य्यवसानम्।

तदुक्तम्—"अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि, श्रुतयस्त्वयि हि फलन्त्यत-न्निरसनेन भवन्ति धनाः" इत्युपसंहाराच्च। उपासनादिवाक्यानां तु क्रियार्थप्रवृत्तसृष्टयालम्बनेन ज्ञानसाधनविधानेन तत्परत्वं मलनिवृत्त्यौपयिकत्वेन कर्मकाण्डवाक्यानामपि तत्रैव पर्य्य-वसानम्, "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः। 'असङ्गो नहि सज्जते' इति रीत्या वस्तुभूत-संयोगसमवायादिसम्बन्धाभावेऽप्याध्यासिकसम्बन्धाभ्युपगमेन वाच्यार्थाधिष्ठाने शक्यसम्बन्धिनि लक्षणाभ्युपगमे बाधाभावाच्च।

जय जय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः।
अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽत्मना च चरतोऽनुचरेन्निगमः॥

श्रीमद्भाग० १०-८७-१४

इति वेदस्तुतेः प्रथममन्त्रेऽपि तत् स्पष्टम्।

हे अजित! जय जय उत्कर्षमाविष्कुरु, आदरेण वीप्सा। कथमिति चेत्? अगजग-दोकसाम् = स्थावरजङ्गमशरीरनिवासिनां जीवानाम्, अजाम् = अविद्याम्, जहि = नाशय। ननु गुणवती सा किमिति हन्तव्या, तत्राह—दोषायानन्दादिस्वरूपावरणाय गृहीता गुणा यया

ताम्, दोषगृभीतगुणां तां स्वैरिणीव परप्रतारणाय गुणान् गृह्णाति, न वस्तुतो गुणवतीत्यर्थः, तर्हि मय्यपि दोषमावहेदिति चेत्, न; त्वमसि = त्वमात्मना = स्वरूपेणैव, समवरुद्धसमस्तभगः = सम्प्राप्तपरमैश्वर्यः, वशीकृतमायत्वात्। जीवास्त्वविद्यापरवशत्वाद् न तथा। अत एव न ते स्वयं ज्ञानवैराग्यादिना तां हन्तुं समर्थाः, तेषां त्वमेवाखिलशक्त्युद्बोधकः। न चैवंभूते मयि किं प्रमाणमिति चेद्, वयं श्रुतय एव प्रमाणम्।

ननु कथं श्रुतीनामपि प्रवृत्तिरित्याहुः—क्वचित् = कदाचित्, अजया = मायया, क्रीडन्तं नित्यमलुप्तभगतया सत्यज्ञानानन्तानन्दैकरसात्मना च चरन्तं निगमोऽनुचरेत्, प्रतिपादयतीत्यर्थः।

स्वेन शुद्धरूपेण वर्त्तमानमेव मायया चरन्तं तदालम्बनेन निगमस्तात्पर्य्येण त्वां प्रतिपादयति।

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक्।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान्॥

पूर्वमीमांसका ब्रह्मात्मपराणामपि वाक्यानां क्रियार्थत्वमाहुः—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्। विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः॥" इति न्यायेभ्यः। परमेतत् सर्वं कर्मकाण्डाभिप्रायेणैव तज्ज्ञेयम्। "यूपं तक्षति यूपमष्टास्रीकरोति। पत्न्यावेक्षितमाज्यं भवति" इति ज्ञानानां संस्कारत्वेन पराङ्गताभ्युपेयते, तथापि ब्रह्मज्ञानस्य न पराङ्गता, एकमेवाद्वितीयम्, ब्रह्मविज्ञानमानन्दं ब्रह्म" इति कर्माङ्गविपरीतात्मप्रतिपादनात्, तत एव भट्टपादैरप्युक्तम्। सर्वत्रैव हि विज्ञानसंस्कारत्वेन गम्यते, पराङ्गत्वं चात्मविज्ञानादन्यत्रेत्यवधार्य्यतामिति स्पष्टमात्मविज्ञानस्य पराङ्गता वारितैव। अन्यत्रापि भट्टपादैरुक्तमित्याह नास्तिक्यनिराकरिष्णुः "आत्मास्तितां भाष्यकृदत्र युक्त्या दृढत्वमेतद्विषयप्रबोधाः। प्रयाति वेदान्तनिषेवणेन" इति वेदान्तनिषेवणेनैवात्मतत्त्वविज्ञानमभीष्टम्। उदयनाचार्य्येणापि वेदान्तवेद्यात्मन एवोत्कर्ष उक्तः—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधके बलिनि वेदनये जयश्रीः।
नो चेदनित्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः॥

इदं विश्वं सत्, सत उत्पन्नत्वात्, यथा कनकादुत्पन्नं कुण्डलादि तदात्मकं भवति, तद्वत् तत्र यदि सदभेदः साध्यते, तदापादानत्वनिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्याह—'ननु

तर्कहतम्' ननु नाभेदं साधयामः, किन्तु तदुत्पन्नत्वेन कुण्डलादिवद् भेदं व्यासेधामः। तत्राभेद एव स्यादिति शङ्काया अनैकान्तिकत्वेन दूषयति व्यभिचरति—क्व च क्व च, पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु तथा दर्शनात्। ननु तदुत्पन्नत्वं नाम तदुपादानत्वम्, न तु तन्निमित्तत्वम्, अतो नानैकान्तिकत्वमित्याशङ्क्याह—क्व च गुणोपादानस्यापि फणिनो न गुणत्वम्, किन्तु मिथ्यात्वम्, अन्यथा कुण्डलादिवदबाधप्रसङ्गात्।

ननु तत्र न गुणमात्रं फणिन उपादानम्, किन्त्वविद्यया युक्तम्। तथाभूतस्यावस्तुत्वाद् युक्तं फणिनो मिथ्यात्वमित्याशङ्क्य, तत्तुल्यमत्रापीति दूषयति—न तथोभययुक्। अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम्, तथाभूतस्य न वस्तुसत्त्वम्, अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्वं प्रपञ्चस्य।

## तत्र सत्कार्य्यवादिनः

यदसत् तन्न क्रियते, यथा शशविषाणमसच्चेत्, कार्य्यं तदपि न क्रियेत, असत्त्वात् क्रियते, तस्मात् सत्तैव क्रियमाणत्वस्य भवनकर्तृत्वव्यापत्वात्, तदपि सत्त्वमेव कार्य्यस्यासतः कर्तृत्वायोगात्। किं च, कारकत्वाविशेषेऽपि तन्त्वाद्यात्मका एव भवन्ति पटादयः, न कुविन्दाद्यात्मकाः। न ह्यसत्त्वे कश्चिद् विशेषः, तस्मात् तन्त्वादिषु सन्त एव पटादयो मन्तव्याः।

यदि पटादयस्तन्त्वादिषु कारणेष्वसन्तः, तदा तन्त्वादिभ्य एव। कस्मादुत्पद्यन्ते? असत्त्वाविशेषाद् वीरणादिभ्यः कुतो नोत्पद्यन्ते? पट एव वा कुतस्तन्तुभ्यो जायते, कटादयः कुतो न जायन्ते? नियमदर्शनात् स्वकारणे कार्यस्य सत्त्वमुपेयम्। अपि चाशक्तात् कारणादशक्यस्य कार्य्यस्योत्पत्त्याऽतिप्रसङ्गात्। शक्तादेव कारणाच्छक्यस्यैव कार्य्यस्योत्पत्तिर्मन्तव्या। शक्तिमानेव शक्तो भवति, शक्तिश्च सम्बन्धरूपा संयोगादिवद् द्विष्ठैव मन्तव्या। शक्यस्य कार्यस्यासत्त्वे कथमुपपद्येत, कारणं च कार्योपहितमर्य्यादं भवति। ततो यथा कुण्डलाभावे कुण्डलोपहितमर्यादः कुण्डली न भवति, तथैव कार्य्याभावे कारणमपि न भवति।

## तत्रासत्कार्य्यवादिनः

ननु क्रियमाणत्वं न प्रमापकं भवति, असाधारणत्वात्, अनुपलब्धिविरोधाच्च। किंच, यथाऽसदशक्यक्रियम्, तथैव सदपि, सत्त्वात्। सती शक्तिरपरिणामिनी न क्रियागोचरः। यदि कार्यमजातविनष्टरूपातिशयमव्यवधानमनतिदूरस्थानम्, तदा कथं स्वस्थेन्द्रियादेः पुंसः कदाचित् प्रत्यक्षम्, कदाचित् परोक्षमेव, कदाचिदनुमानमागमं वापेक्षते।

ननु धर्मलक्षणावस्थाभेदाद् धर्मिधर्मलक्षणाधिकरणास्तिस्रः परिणतयो भवन्ति। यथैकस्य सुवर्णधर्मिणः कटकमुकुटकुण्डलादयो धर्मा उपजननायापधर्माणः, तेषां च लक्षणपरिणामो भवति। हेमकारः कुण्डलं भङ्क्त्वा मुकुटं रचयति, तदा कुण्डलो वर्तमानतालक्षणं हित्वा अतीततालक्षणमापद्यते; मुकुटस्त्वनागततालक्षणं हित्वा वर्त्तमानतां प्रतिपद्यते, तथैव लक्षणगतोऽवस्थापरिणामोऽपि दृश्यते। प्रतिक्षणमुत्पत्तिनिरोधधर्माणोऽभिनवतमाभिनवतराभिनवपुराणपुराणतरपुराणतमाः, प्रयत्नरचितस्यापि वस्त्रादेः प्रान्ते पुराणतमत्वोपलम्भात्। तथा च नानातिशयं कार्यम्, किन्त्वेकातिशयोत्पत्त्यान्यातिशयानिवृत्त्या व्यवहारभेदोपपत्तिरिति चेन्न, विकल्पानुपपत्तेः।

तथा हि—त्रिविधोऽप्ययं परिणामरूपोऽतिशयो धर्मिणि कादाचित्कः सनातनो वा। कादाचित्कत्वे समान्यातोऽसदुत्पादः सनातनत्वे कुतो नैकस्मिन् धर्मिणि कुण्डलादयोऽतीतत्वादयो नवपुराणत्वादयश्च युगपत् प्रतीयन्ते। यदि तु कादाचित्कत्वेऽपि शक्त्यात्मना तेषां सत्त्वमित्युच्येत, तदपि किं शक्तिरतिशयश्च किमेकमेव तत्त्वं नाना वा ? एकत्वे जन्माजन्मनिवृत्त्यनिवृत्तिप्रत्यक्षतापरोक्षतादीनामेकत्र यौगपद्यव्याघातः; नानात्वे तु शक्तेः सत्त्वेऽपि कथं नातिशयस्यासत उत्पादः ? अतिशयस्यापि सर्वदैव सत्त्वे पूर्वोक्तो व्याघातः। अभिव्यक्त्यनभिव्यक्तिभ्यामपि न समाधानं सम्भवति, अतिशयस्य तयोः सदातनत्वे सैवाव्यवस्था, कादाचित्कत्वे त्वसदुत्पत्तिप्रसङ्गः, असत्त्वेऽपि कारणसामर्थ्यनियमात्।

कार्य्यनियम उपपद्यते, अन्यथा प्रधानोपादानत्वाद् विश्वस्य प्रधानस्य चान्वयितया सर्वत्रैकरूपत्वादुपादानात्मकत्वादुपादेयस्य कार्य्यजातस्य सर्वं सर्वतः सर्वत्र सर्वदा सर्वथा सदेव स्यात्। तथा चेदमतो नेदमिह नेदमिदानीं नेदमिदमेवं नेदमिति नियमो न स्यात्, विवेकहेतोरभावात्।

ननु सर्वत्र सत्त्वाविशेषेऽपि हेतुसामर्थ्यनियमादभिव्यक्तिनियम इति चेत्, तर्ह्यसदुत्पत्त्यापि किमपराद्धम्? येन तस्यां नियमो न स्यात्। सर्वेषां सर्वात्मकत्वादभिव्यक्तिभेदानुपपत्तेश्च दुरधिगमो नियमः। एतेन कुविन्दादिसमवधानेऽपि पटस्य नियमेन तन्त्वात्मकत्वेन सत्कार्यसाधनमिति प्रत्युक्तम्।

शक्तिश्च शक्यविषयापि शक्ताश्रयम्विनापि शक्यसद्भावम्। ज्ञानमिव ज्ञेयविषयमपि ज्ञात्राश्रयमन्तरेणापि ज्ञेयमुत्पत्स्यते। कारणत्वं च कार्य्यं प्रति कारणस्य शक्तिभेदः। स च

कारणाश्रय एव; न कार्यकारणोभयाश्रयः। निरूपणञ्च कार्य्यावगमाधीनम्, न कार्य्यसत्त्वाधीनम्। तस्मात् तन्त्वादयः स्वव्यापारात् प्रागसत्कार्य्यमुत्पादयन्ति, कारणत्वादभिव्यक्तिकारणवत्।

## पातञ्जलास्तु

सत्कार्यवादिनोऽपि नैकान्तेन सत एवोत्पत्तिमिच्छन्ति, अपि तूपादेयस्योपादानरूपेण सतः, न तूपादेयरूपेणापि सतः। अत एव यथा कुविन्दादिभ्यो भिन्नदेशे पटा उपलभ्यन्ते, नैवं तन्त्वादिभ्योः। धर्मधर्मिभावश्चायं नैकान्तिकभेदे गवाश्वस्येव भवितुमर्हति, नाप्यभेदे धर्मिरूपस्येव। तस्मात् कथञ्चिद् भेदः, कथञ्चिदभेदश्चापि स्वीकर्त्तव्यः, उपादेयरूपेणापि सत्त्वे तूत्पत्तेरनुपपत्तेः साधनानां वैयर्थ्यात्। निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायातिपातात्। न चासत उत्पत्तौ तस्य क्रियां प्रति कारकत्वानुपपत्त्या कथं कर्मकारकत्वमिति वाच्यम्, 'मञ्चाः क्रोशन्ति' इतिवत् तस्य मुख्यकारकत्वाभावेऽप्यौपचारिककारकप्रयोगे बाधाभावात्।

## तथाद्वैतिनस्तु

मृत्पिण्डादौ घटादिकार्य्यस्य स्वेन रूपेण सत्त्वे कुलालादिव्यापारवैयर्थ्यदर्शनात्, वालुकादौ तैलस्यासत्त्वे कारकव्यापारशतैरपि तदनुत्पत्तिदर्शनात्, सत्कार्यवादोऽसत्कार्यवादश्च नोपपद्यते। तथाहि—'परमाणुः परमाण्वन्तरेण युज्यमानो द्व्यणुकमारभते' इत्युपेयते। तत्र द्व्यणुकासमवायिकारणरूपः संयोगः, परमाण्वोः कार्त्स्न्येनैकदेशेन वा? आद्ये स्थौल्यानुपपत्तिः, द्वितीये सावयवत्वापत्तिः, तथात्वे तस्यापि जन्यत्वेन मूलकारणत्वानुपपत्तिः।

परिणामोऽपि प्रधानस्य कार्त्स्न्येन, एकदेशेन वा? आद्ये कारणविनाशापत्तिः, द्वितीये सावयवत्वापत्तिः। कार्य्यमपि कारणव्यापारात् पूर्वं सत्, असद् वा? कथं कार्य्यकारणभावग्रहः? खपुष्पेण कस्यचित् सम्बन्धानुपपत्तेः। ननूत्पद्यते घट इतिवत् प्रतियोगित्वेनासतोऽपि कार्य्यत्वं भविष्यतीति चेन्न, विकल्पानुपपत्तेः। प्रागभावप्रतियोगित्वं निराश्रयं साश्रयं वा? आद्ये शशविषाणतुल्यता, द्वितीये सत्कार्यवादापत्तिः। प्रागभावप्रतियोगित्वाश्रयत्वेनैव कार्य्यसत्त्वाङ्गीकारात्। सत्कार्यवादोऽपि न घटते, कारणव्यापारवैयर्थ्यात्। आविर्भावतिरोभावयोरपि सदसत्त्वविकल्पग्रासात्। तस्मात् सदसद्विलक्षणत्वेनानिर्वचनीयतैव कार्यस्येति मन्तव्यम्।

विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम ननाम तत् ॥
अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥

इति दशलक्षणस्य पुराणस्य, विशेषतः श्रीमद्भागवतपुराणस्य मुक्त्याश्रये मुक्तोपसृप्ये सर्वाधिष्ठाने सर्वप्राणिपरप्रेमास्पदे भगवत्येव तात्पर्य्यम्। अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मण एव प्रपञ्चमानत्वेन तस्यैव विजिज्ञापयिषितत्वात्। भगवांश्चागुणोऽनाकारोऽप्यचिन्त्यानन्तकल्याणगुणनिषेव्यो दिव्यसौन्दर्यमाधुर्य्यसौगन्ध्यसौस्वर्य्यसौरस्यलावण्यामृतसिन्धुसारसर्वस्वाकारत्वेनानन्तकोटिकन्दर्पदर्पदलनपटुतमविग्रहवत्त्वेन च योगिमुनिसुरेन्द्रसेव्यः सर्वान्तरात्मैव। तदुक्तम्—

श्रोत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् ।
तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम् ॥

विशेषतश्च श्रीकृष्णस्वरूपो दशमे दशमो हरिरिति रीत्या दशमे दशमस्कन्धे दशम आश्रयो मुक्त्याश्रयो मुक्त्योपसृप्यः श्रीकृष्णः प्राधान्येन निरूपितः। सत्यज्ञानानन्तानन्दमनाकारमपि नानाकारं ब्रह्मैव प्रस्फुरति। श्रीकृष्णस्य सच्चिदानन्दरससारसरोजरूपत्वेन परमहंसमहामुनीन्द्रमनोमिलिन्दप्रेमास्पदत्वं भवति। प्रेमास्पदस्यानन्दसारसर्वस्वस्य सौन्दर्य्यमयता स्वारसिकी, सौन्दर्य्यज्ञानतज्जनितरागविशेषस्यैव प्रेमस्वरूपत्वात्। स्वात्मन एव निरतिशयनिरुपाधिकपरप्रेमास्पदत्वदर्शनात् प्रेमसौन्दर्य्ययोरभेद एव पर्य्यवस्यति। तस्मिन्नभिन्न एवात्मनि प्रेमसारसर्वस्वस्य श्रीकृष्णरूपेण प्रादुर्भावः, सौन्दर्य्यसारसर्वस्वस्य श्रीराधारूपेणाभिव्यक्तिः।

"एकं ज्योतिरभूद् द्वेधा राधामाधवरूपकम्" इति ऋक्परिशिष्टोक्तेस्तयोरैक्येऽपि द्वित्वम्, द्वित्वेऽप्यैक्यम्, लीलारसविशेषरसास्वादहेतुकत्वेनोपपत्तेः। एवं गौरतेजःसंवलितस्य श्यामधाम्नः श्यामलमहसालिङ्गितस्य गौरतेजसश्च स्वरूपैक्यमेव। परस्परभावात्मकत्वेनापि परस्परात्मता युज्यते। श्यामहृत्स्थगौरगोचरानुरागामृतमहाब्धिमृगाङ्करूपं गौरं महः, गौरमहाभावामृतमहाम्भोधिशशाङ्करूपं श्यामलं महः, तत एव तदनुरागसुखमास्वाद्य परमहंसा अपि श्रीपरमहंसा भवन्ति। स्वसुखनिभृतचेतसोऽपि तदीयरुचिलीलाकृष्टसारा भवन्ति। नैर्गुण्यस्थापि तल्लीलारसास्वादने रमन्ते। आत्मारामा आप्तकामा अपि तद्रसकामा भवन्ति।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥

तेषाममलात्मनां परमहंसमहामुनीनां भजनीयस्वरूपोपस्थापनेन भक्तियोगविधानार्थमेव भगवतोऽवतरणं कृष्णरूपेण,

तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥

इति कुन्तीदेव्या वचनात् ।

शृङ्गाररससारसुधासरोवरसमुद्भूतसरोजस्वरूपं सकलगुणवृन्दावनं वृन्दावनम्, तत्रत्यकिञ्जल्करूपा विद्युत्पुञ्जपिञ्जरा गोपसीमन्तिन्यः, तत्रत्यः परागः श्रीकृष्णः, तत्रत्यमकरन्दरूपा वृषभानुजा आत्मारामस्य श्रीकृष्णस्यात्मरूपैव सा। दशमेऽपि रासपञ्चाध्याय्यां सम्पूर्णैश्वर्य्यमाधुर्य्यरूपेण भगवतः प्रादुर्भावः। यथा समानस्यैव स्वातीजलविन्दोरधिष्ठानभेदेन गोरोचनमुक्तागजमुक्तादिरूपेण परिणतिविशेषो दृश्यते, तथैव व्रज-वृन्दावन-निकुञ्जादिभेदेन पूर्णपूर्णतरपूर्णतमरूपेण प्रभोः प्रकाशभेदो व्यज्यते। तत एव व्रजे वने निकुञ्जे च पूर्ण-पूर्णतर-पूर्णतमरूपेण भगवतोऽभिव्यक्तिर्जायते, श्रीराधया सार्द्धमेव श्रीकृष्णस्य पूर्णतमरूपेणाभिव्यक्तिः। तच्च स्वरूपमुद्वर्तितमिव, सौरभ्येणाभिव्यक्तमिव, स्नेहेन स्नातमिव, माधुर्य्येण स्नातमिव, स्वाङ्गमहसा स्नातमिव, तारुण्यामृतधारया कारुण्यामृतधारया च मार्जितमिव, लावण्येनानुलिप्तमिव, सौन्दर्य्येण भूषितमिव त्रैलोक्यलक्ष्म्या, तस्मादेवानन्तानन्तब्रह्माण्डेषु सौन्दर्यमाधुर्य्यलावण्यादिकं वितीर्य्यते व्यज्यते च । सौन्दर्य्यमाधुर्य्यसारस्य सौगन्ध्यसुधाजलनिधिभ्योऽङ्गप्रत्यङ्गेभ्यः कणस्थानीयान्यत्र तान्युपलभ्यन्ते,

स्वमूर्त्या लोकलावण्यनिर्मुक्त्यालोचनं नृणाम् ।
गीर्भिस्ताः स्मरतां ................................ ॥
आच्छिद्य विर्त्ति सुश्लोकां वितत्य ह्यञ्जसानुकौ ॥

इत्यादि श्रीभागवतोक्तेः ।

अत्र परमानन्दरसामृतसिन्धोर्भगवतः श्रीकृष्णस्य माधुर्यसारसर्वस्वरूपा श्रीराधा। काश्चित् तु तदङ्गरश्मिभूताः, अन्याश्च तदङ्गकायव्यूहप्रायाः; काश्चित् तु परमानन्दसुधासिन्धोर्भगवतस्तरङ्गभूताः, काश्चित् तु तस्याचिन्त्यानन्तकल्याणगुणाधिष्ठात्र्यो महाशक्तयो गोपाङ्गनाभावमुपगताः, काश्चित् तु विशिष्टास्तत्परप्रकृतिततयो गोपसीमन्तिनीभावमुपजग्मुः; अन्यास्त्वनन्तानन्तब्रह्माण्डतत्युपादानभूताः, काश्चित्तु तदवान्तरानन्तकार्योत्पादानुकूला

अचिन्त्यज्ञानगोचरा अवान्तराः शक्तयः। काश्चित् तु विशिष्टभक्तानां बुद्धितद्वृत्तिरूपाः, अपराश्च अग्निकुमाररूपाः। काश्चन देवाङ्गनारूपाः, अन्याः श्रुतिरूपाः, मुनिरूपाः। अन्याश्च अयोध्यामिथिलादिषु रामस्वरूपानुरागिण्यस्तद्वरदानप्रभावाद् गोपालीभावमुपागताः। काश्चित् तु तत्पदार्थात्मका भगवतोंऽशा एव स्वीयमेव सौन्दर्यमाधुर्यादिकमनुभवितुं व्रजवधूभावमुपगताः, तदेकलभ्यत्वात् तदनुभवस्य। मणिमयप्राङ्गणे दिव्यरत्नस्तम्भेषु चात्मनः प्रतिविम्बमालोक्य प्रभुस्तन्माधुर्यलुब्धमानसस्तदनुभवितुं गोपाङ्गनात्वं गतः। तन्मोहो यथा—

रत्नस्थले जानुचरः कुमारः सङ्क्रान्तमात्मीयमुखारविन्दम्।
आदातुकामस्तदलाभखेदान्निरीक्ष्य धात्रीवदनं रुरोद॥

कोटिकोटिकन्दर्पा अपि श्रीकृष्णस्य पादारविन्दनखमणिचन्द्रिकाकणमालोक्य तन्माधुर्यानुभवस्य गोपाङ्गनाभावमात्रैकलभ्यत्वात् तेऽपि तद्भावमापेदिरे।

साधनसिद्धा गोप्यो जनकपुरायोध्यादिगता अग्निकुमारदेवाङ्गनारूपा अनेकविधाः श्रुतिरूपा मुनिरूपाश्च याः पूर्वमुक्तास्ता अपि पुनर्द्विविधाः—अन्यपूर्विकाः, अनन्यपूर्विकाश्च। ऊढाः, अनूढाः, स्वकीयाश्च परकीयात्वमपि समुत्कण्ठावर्धनायोपगता अभिमानमात्रमेव तत्, न तु वास्तवम्।

मायाकल्पिततादृक् स्त्रीशीलनेनानुसूयुभिः।
न जातु व्रजदेवीनां पतिभिः सह सङ्गमः॥
प्रच्छन्नकामिता ह्यासां गोकुलेन्द्रस्य सौख्यदा।

व्रजसीमन्तिनीनां परमोत्कर्षस्तु भगवतैव व्यञ्जितः।

यद्यपि भगवदङ्गसङ्गेन पूर्णतां मन्यमानानां कासाञ्चित् पुनरुत्कण्ठां संवर्धयितुं भगवदन्तर्धानं युक्तम्, तथापि श्रीगोपाङ्गनानां प्रेम्णो महत्परिमाणत्वेन परमाणुमहतो ह्रासवृद्ध्यसंभवाद् भगवदन्तर्धानादिकम्, न तदनुवृत्त्यतिशयप्रयोजकम्, किन्तु तासां वैप्रलम्भिकप्रतापमहोत्कर्षविजिज्ञापयिषयैव भगवता स्वान्तार्धापनम्। अत एवोक्तम्—

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः।
यामाभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना॥

'वः' इति सम्बन्धमात्रे षष्ठी, युष्मान् प्रति स्वसाधुकृत्यं स्वीयप्रत्युपकारकृत्यं न पारये, ब्रह्मायुषाऽपि कर्त्तुं न शक्नोमीति भावः।

यद्वा 'वः' युष्माकं यदसाधारणं साधुकृत्यं तदहं न पारये। सर्वनैरपेक्ष्येण सर्वोपाधिराहित्येन निर्मलप्रेमविशेषेण निरवद्यसंयुजां निर्दोषप्रेममयसम्बन्धवतीनां निर्दोषचित्तैकाग्र्यवतीनां वा दुर्जरा गेहशृङ्खलाः संवृश्च्य मदर्थे युक्तायुक्ताप्रतीक्षणात् प्रोज्झितलोकाः, धर्माधर्माप्रतीक्षणात् त्यक्तवेदाः, सर्वनैरपेक्ष्येण संत्यक्तस्वाः, निरस्तात्माऽऽत्मीयज्ञातिधना मामभजन्। नाहं तथाकर्तुं समर्थः, पित्रोः, बन्धुषु, तथाऽन्येषु चाहं स्निह्यामि।

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" (श्रीमद्भ० गी० ४।११) इति प्रतिज्ञातोऽपि च्युतः। तस्माद् वः साधुत्वेनैव तद् युष्मत् साधुकृत्यं प्रति यातु, प्रतिकृतं भवतु। भवतीनां सौशील्येनैव ममानृण्यम्, वस्तुतस्तु ऋण्येव भवामीति भावः।

परमपूज्याभिस्ताभिस्तु विचारितं यत् परमेश्वरत्वादेवायं सर्वगुणपरिपूर्णः, सर्वदोषगन्धरहितोऽप्यस्मत्प्रेमरसज्ञोऽप्यस्मान् प्रेमवत्त्वेनोत्कर्षयितुं स्वं चापकर्षयितुम्, अस्मदृणीभवितुमेवास्मान् त्यक्त्वाऽन्तर्हितः। तदिमं स्वयमेव पराबुभूषुं विजिगीषवो वयमेवाधन्याः। एवं भवितुमपारयन्त्योऽनेन फलतः प्रेम्णा जिता एवाऽभूम इति विश्वनाथचक्रवर्त्तिनामभिप्रायः।

निकुञ्जोपासनायां यद्यपि श्रीकृष्णस्य रसिकत्ववदनन्यत्वमपि सम्पद्यते। श्रीकृष्णप्रेम्णोऽपि राधैकनिष्ठत्वं भवति, परमत्रापि विवेचनमर्हतीदं यच्छ्रीकृष्णस्य तत्र परमेश्वरत्वम्, सर्वसंभजनीयत्वं विद्यते न वा? प्रथमे—"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति प्रतिज्ञानुसारेण तस्य भक्तभजनानुविधायित्वमपि सेत्स्यति। अन्ते तदनीश्वरत्वापत्तिः। श्रीकृष्णस्य शक्तिविशेष ईश्वरः, भक्तभजनानुविधायी कृष्णस्तु न तथेति, तदपि न मनोज्ञम्; स रूपान्तरेणान्यत्रापि स्निह्यतीत्यस्यानपायात्। गुरोरनेकशिष्योपास्यत्ववद् भगवतः परमेश्वरस्यानेकजीवोपास्यत्वोपासकानुग्राहकत्वादिकं युज्यत एव। सूर्यस्य प्रतिप्रतिबिम्बं प्रतिबिम्बत्ववद् भगवतोऽपि प्रतिजीवमीश्वरत्वं भिन्नमेव। श्रीवाचस्पतिमिश्ररीत्या यथा तत्तत्सभ्याज्ञातमायाविन एव मायिकपदार्थस्रष्टृत्वम्, तथैव जीवाज्ञातब्रह्मण एव मायिकविश्वस्रष्टृत्वम्, प्रतिजीवं भिन्नमेव। तेन तस्य तस्य जीवस्य भगवन्तं प्रत्यनन्यत्वं सम्पद्यते तद्वत्। अत एव प्रातिस्विकस्येष्टदेवस्य स्वकर्तृकं स्नपनभोजन-तर्पणाद्यन्तरा स्नानादिराहित्यमेव मन्वते भक्ता इति सम्प्रदायः।

व्रजसीमन्तिन्यस्तूरोजरागान्वितैः कुचकुङ्कुमाङ्कितैः स्वैरुत्तरीयैरासनं व्यष्ठाय समर्प्य नेत्रयुगलार्घ्यपात्रयोस्तत्पदसमर्थितैः प्रेमाश्रुभिः पाद्यमर्घ्यञ्च समर्पयन्ति।

भगवद्भक्तिर्भगवत्स्वरूपैवेत्युक्तमेव, तत एव परमहंसानां महामुनीनाममलात्मनां ब्रह्मविद्वरिष्ठानां दृष्टमेव भक्तिफलमित्यप्युक्तमेव । भगवानेव सर्वपुरुषार्थरूपः ।

परमभागवतस्य वृत्रस्य तु पुरुषार्थस्वरूपमनितरसाधारण्यं षष्ठ उक्तम्—

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक् कर्म करोतु कायः ॥
न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥
अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥
ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययाऽऽत्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥

(श्रीमद्भाग० ६।११।२४-२७)

वृत्रो भगवन्तं हरिं प्रार्थयते, हे हरे ! अहं तव पादमूलाश्रयाणां दासानामनुदासो भूयो भवितास्मि भवेयम् । मम मनः असुपतेः = प्राणनाथस्य तव गुणान् स्मरतु, वागपि तानेव कीर्त्तयतु, कायश्च तव कर्म करोतु । तद्भिन्नमहं नाकपृष्ठं ब्रह्मलोकादिपदं हे समञ्जस ! निखिलसौभाग्यनिधे त्वां विरहय्य न काङ्क्षे = नेच्छामि, किन्तु अजातपक्षाः पक्षिशावकाः, घूकादित्रस्ता यथा मातरम्, दाम्ना बद्धा वत्सतरा अतृणादाः पयःपायिनो बालाः, वत्साः स्तन्यं पयः, व्युषितम् = प्रवासिनम् = दूरदेशगतं प्रियं कामेन विषण्णा प्रिया दिदृक्षते, तथा मे मनस्तापत्रयपीडितं कर्मभिर्निबद्धं कामादिविषण्णं त्वां दिदृक्षते । ममोत्तमश्लोकजनेषु सख्यं त्वन्मायया देहादिष्वासक्तचित्तस्य भूयोऽपि तेष्वासक्तिर्न भूयात् ।

यद्यपि पक्षिशावकानां माता समागत्य तेषां भयमपनयन्ती चञ्चुषु तदुचितभोज्यं निःक्षिपन्ती क्षुधमुपनयति, ततस्तेषां शान्तिर्भवति, परमत्र तु भगवत्स्वरूपमाधुर्य्यमन्तरा न कथञ्चिच्छान्तिः संभवति । वत्सतरा अपि स्वसुखमभिलषन्तोऽपि मातुः काममपि सेवामनभिलषन्तोऽपि तुष्यन्ति, परमत्र तु न तावन्मात्रेण तोषः, प्रीतिमन्तं प्रवासिनं पतिं प्रेमवती प्रिया विषण्णा विरहजर्जरिता यथा दिदृक्षते, स्वीयसर्वेन्द्रियव्यापारैः सेवमाना प्रियं सुखयितुम्, प्रियस्य सौन्दर्यसौस्वर्य्यादिभिर्गुणलीलावैदग्ध्यादिभिश्च स्वसर्वेन्द्रियाणि सुखयितुमिच्छति, तथैवाहमपि त्वां सेवे । तत एवाह—

मनः स्मरेतासुपतेर्गुणानां गृणीत वाक् कर्म करोतु कायः ॥
ममोत्तमश्लोकजनेषु सख्यं..........................................।

तत्र प्रथमेन "अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः" इत्यनेन भक्तानां धर्मरूपः पुरुषार्थो बोध्यते। यद्यपि सर्वस्य दुःखात्यन्ताभावोऽपेक्षितः, स च मोक्षं विना न सिध्यति, तथापि त्रिविधदुःखहर्त्तुर्हरेः समाश्रयेण दासानां तदनायाससिद्धः, मोक्षस्तु ज्ञानाधीनः; ज्ञानरूपधर्मापेक्षया धर्मिसमाश्रयणस्योत्तमत्वात्। तत्रापि प्रभुदास्ये स्वस्य सर्वोत्तमत्वाभिमाने भक्तान्तरतिरस्कारसंभवात् प्रभुदास्यादिभ्रंशः संभाव्यते। चित्रकेतुदशायां शिवतिरस्कारेण भ्रंशानुभवात् तत एव दासानुदासत्वं प्रार्थितम्। तत्र स्मरेतेति स्मरणास्यात्मसुखैकसाधनत्वादात्मनेपदप्रयोगः कीर्त्तनस्यापि स्वार्थ एव मुख्यः, परार्थस्त्वानुषङ्गिक इत्यात्मनेपदप्रयोगः। 'कर्म करोतु कायः' इति सेवा तु प्रभोः सुखं यथाभवति तथा क्रियते, न चाणुमात्रमपि स्वार्थपरत्वम्, अतः परस्मैपदप्रयोगः।

न नाकपृष्ठमित्यादिना भगवानेवार्थो बोध्यते। मनोवाक्कायभेदे त्रिविधं धर्मं सम्प्रार्थ्यार्थं प्रार्थयते। तत्र प्रवृत्तिमार्गसाध्यत्वात् त्रिविधोऽर्थो लौकिकः, निवृत्तिमार्गसाध्यत्वात् त्रिविधोऽर्थो वैदिकः।

तस्य षड्विधस्यापि यत्फलं तस्य षड्गुणपूर्णे भगवति विद्यमानत्वाद् भगवानेवानन्यभक्तानामर्थः। तत एव लौकिकवैदिकार्थनिराकरणपूर्वकं भगवन्तमेवाङ्गीकरोति। न नाकपृष्ठम्, नाकः = स्वर्गः, पृष्ठम् = राज्यासनमिन्द्रासनम्, तच्च कालान्तरेण नश्यति, त्वयि चाखण्डैश्वर्य्यस्य विद्यमानत्वात् तन्न काङ्क्षे। परमेष्ठी ब्रह्मा, रजोऽवतारत्वात् तत्स्थानमपि राजसम्, तत्र "ब्रह्मणा सह ते सर्वे मुच्यन्ते" इति वाक्यात् पारतन्त्र्येण फलसिध्या स्ववीर्य्यहानिरेव। त्वयि चाखण्डवीर्य्यस्य विद्यमानत्वात् तदपि न काङ्क्षे। सार्वभौमं सर्वभूमेरीश्वरत्वे सर्वत्र यशो भवति, तच्च दानादिसापेक्षत्वात् सावधिकमौपाधिकं च राज्यान्ते नरकं ध्रुवं वाक्यादवसानं च दुष्टमेव, त्वयि चानवद्ययशसः सत्त्वात् त्वा विरहय्य तदपि नेच्छामि। रसाधिपत्यम्, भूमेरधः सर्वलोकाधिपत्यम्, तत्र भूम्यपेक्षया सुखभोगोऽधिकः, स च श्रिया भवति। सा च त्वया बलेरपहृता। त्वयि चान्यपायिन्याः श्रियः सत्त्वाद् योगसिद्धीः, अपक्वयोगिनः सिद्धिबलेनापेक्षितविषयान् संसृज्य भोगं कुर्वन्ति, तेन योगादपि भ्रष्टा भवन्ति, येषां ज्ञानं भ्रान्तमेव। त्वयि नित्याखण्डज्ञानस्य सत्त्वात् ता अपि न काङ्क्षे।

अपुनर्भवं मोक्षम्, सात्त्विकज्ञानसाध्यत्वात् तत्परपुरुषख्यातेर्गुणवैतृष्ण्यमिति तस्यापि हेयत्वात् पूर्णानन्देऽखण्डितवैराग्यस्य त्वयि सत्वात् तमपि नेच्छामि। हे समञ्जस! पूर्णानन्दत्वेन परमपुरुषार्थरूप।

अजातपक्षा इति भक्तिमार्गीयं कामं दर्शयति। दिदृक्षाहेतुत्वे स्वरूपसौन्दर्यं नेत्रयोरम्बुजत्वेन तद्दिदृक्षया मनसो मधुपत्वं बोधितम्।

अरविन्दे विकसिते मधुपस्य कामः सिध्यति, नान्यथा, तथैव त्वत्कृपयैव मम संतोषः, नान्यथा। अजातपक्षाः पक्षिणः कदा किमप्यानीय मह्यं दास्यतीति मातरं दिदृक्षन्ते। अत्र क्षुधार्त्तानां नियतभक्ष्याभावादनियतविषयत्वम्, जातपक्षाणां च दिदृक्षाभावादनियतकालत्वं क्षुदुपाधिकत्वं चेति दूषणत्रयं संभाव्यान्यं दृष्टान्तमाह—स्तन्यम्, यथा वत्सतराः क्षुधापीडिताः कदा दुग्धं प्राप्स्याम इति तदिच्छन्ति, तेषां स्तन्यमात्रकामत्वाद् मातुरभावे तद्बुद्ध्या परस्या अपि स्तन्यपानप्रवृत्तिदर्शनाद् माताऽत्र नोक्ता। अत्र नियतविषयत्वेऽपि वत्सतरपदेनानियतकालत्वम्, क्षुदुपाधिकत्वमिति दूषणद्वयं वीक्ष्य तृतीयदृष्टान्तमाह—प्रियं प्रियेवोभयत्र प्रियपदप्रयोगाद् निरुपाधिकः स्नेहः सूचितः। व्युषितं प्रियं पतिं प्रीतिमन्तं यथा विषण्णा तद्विरहकातरा प्रिया प्रेमवती द्रष्टुमिच्छति। विषण्णेति नियतविषयत्वम्, न च विदेशादागमनानन्तरं दिदृक्षाया अदर्शनादनियतकालत्वमिति वाच्यम्; दर्शनदशायां दिदृक्षाभावस्यादूषणत्वात्। प्रीत्यतिशये तु दर्शनेऽपि दिदृक्षा वर्धते, न ह्रसति,

यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवम्।
पदे पदे का विरमेत तत्पदात् चलापि यच्छ्रीर्न जहाति तत्पदम्॥

इति दर्शनात्।

'ममोत्तमश्लोकजनेषु सख्यम्' इति भक्तिमार्गीयं मोक्षं प्रार्थयते। भक्तिमार्गे भगवदीयत्वेनैव परिसमाप्तसर्वार्था इति वचनाद् भगवदीयत्वेन भगवल्लीलानुभवो मोक्षः। स च भगवदीयसङ्गाद् भगवद्विमुखविषयासक्तसङ्गाभावपूर्वकाद् भवति।

हे नाथ! स्वकर्मभिः संसारचक्रे भ्रमतोऽपि ममोत्तमश्लोकजनेषु सख्यं भूयात्। मोहेनात्मात्मजदारगेहादिषु सख्यं भूयात्। भगवद्भक्तसङ्गेन भगवद्यशोगानेनैव सर्वकर्ममूलाविद्यानिवृत्त्या संसारनिवृत्तिरनायासेनैव भवति।

संसारचक्रे भ्रमत इति संभावनामात्रम्, सायुज्यस्य मनस्विनां पदरजः प्रपत्स्य इति प्रोक्तत्वात्।